भावनगर—श्री "शारदाविजय" जैन ग्रन्थमाला. (२)

श्रीरत्नप्रभसूरि-शिष्य-आचार्यश्रीकमलप्रभविरचितम्

# श्रीपुण्डरीक—चरित्रम्.

संपादकः-दोशी-जीवराजतनुजः पं०-बेचरदासो न्यायतीर्थो व्याकरणतीर्थश्च.

इदं पुस्तकं शाह-गिरधरलालस्यात्मजेन मोहनलालेन भावनगरे शारदाविजय-मुद्रणालये मुद्रयित्वा प्रकाशितम्.

प्रतयः २०० सन् १९२४ वैक्रमम् १९८० वर्धमानीयम् २४५०

मूल्यम् १०-०-० रूप्यकाः

*Printed by Shah Matulal Lashkarbhai at the Sharda—Vijaya printing press—BHAVNAGAR.*



# प्रस्तावना.

श्रीमान् महावीरप्रभुना जैन शासनमां कोटीगण, वज्रशाखा अने चंद्रगच्छ विस्तार पाम्यो. चंद्रगच्छना नायक श्री चंद्रप्रभसूरिनी पाटे धर्मघोषसूरि थया. धर्मघोषसूरिनी पाटे चक्रेश्वरसूरि, चक्रेश्वरसूरिनी पाटे त्रिदशप्रभसूरि, त्रिदशप्रभसूरिनी पाटे तिलकसूरि, तिलकसूरिनी पाटे धर्मप्रभसूरि, धर्मप्रभसूरिनी पाटे अभयप्रभसूरि अने अभयप्रभसूरिनी पाटे रत्नप्रभसूरि थया. ते रत्नप्रभसूरिना शिष्य कमलप्रभसूरि चौदमा सैकामां थया जेमणे आ पद्यबंध मूळग्रंथनी रचना विक्रम संवत १३७२ मां धोळका गाममां करी.

आ मूळ ग्रंथना रचनार महान् धुरंधर आचार्य थइ गया. तेमनो संस्कृत भाषा उपर अलौकिक काबु होवो जोइए कारण के तेमनुं बनावेलुं आ महाकाव्य विविध प्रकारना अलंकारो अने उपमाओथी व्याप्त छे, एटलुंज नहि पण केटलाक अलंकारो अने उपमाओ तो विचित्र अने अलौकिक रीते घटाव्या छे. कविओ जे कहे छे के 'साचुं अमृत काव्यरसज छे' तेने आ ग्रंथ पूरेपूरी पुष्टि आपे छे. संस्कृत जाणनारने आ ग्रंथ अवश्य वांचवा लायक अने घणुंज ज्ञान आपवावाळो छे. ठेकाणे ठेकाणे बीजे स्थळे दृष्टिमां न आवे तेवा प्रस्ताविक श्लोको पण आ काव्यमां घणा आवे छे. आ ग्रंथ वांचवाथी अने वांच्या

पछी तेनुं मनन करवाथी कर्त्ताए काव्यमां गुंथेली चमत्कृतिनो प्रकाश थाय छे. वांचनारने एकंदर आनंद रस उपजावनारुं
अने एक वखत वांच्या पछी फरीथी तेनुं तेज पुस्तक वांचवानी प्रेरणा करनारुं आ पुस्तक छे.
अने एक वखत वांच्या पछी फरीथी तेनुं तेज पुस्तक वांचवानी प्रेरणा करनारुं आ पुस्तक छे.

आ संस्कृत काव्य महाकाव्य छे. कर्त्ताए जो के तेनी अंदर अनेक चमत्कारो अने भावो प्रगटपणे तेमज गूढपणे राखेला छे छतां तेने अत्यंत कठण थवा दीधुं नथी, संस्कृत भाषा अत्यंत कोमळ छटादार अने आनंददायक छे. वांचनारने संस्कृतनो तेमज जैनशास्त्रनो सारो बोध आपनारुं आ काव्य छे.

आज सुधी शत्रुंजयना दीपकतुल्य पुंडरीकस्वामी जेवा महा पुरुषनुं चरित्र संपूर्णपणे बहार न पडवानुं कारण एज देखाय छे के कमलप्रभसूरिए रचेला आ काव्यनी नकलो जोइए तेटला प्रमाणमां लखायेली नहि होय, कारणके आ चरित्रनी प्रत अमने फक्त एकज मळी शकी अने ते पण पडी मात्रानी अने अत्यंत जुनी होवाथी जीर्ण प्रायः हती. आ ग्रंथ अत्यंत उपयोगी तेमज प्रसिद्ध करवानी आवश्यकतावाळो होवाथी अमे एक सारा पंडित तरीके गणाता पी. बेचरदास पासे सारी रीते संशोधन करावी बहार पाड्यो छे. वांचनारने सरळ थवा वास्ते पर्याय शब्दो अने नोट पूरता प्रमाणमां आपेली छे.

आ ग्रंथना आठ सर्ग अने छेवटे एक सर्ग जेटली समाप्ति करेली छे. तेमां विस्तारथी पुंडरीकस्वामीनुं चरित्र लखवा उपरांत-संक्षेपथी प्रथम चक्रवर्ती भरतमहाराजनुं अने प्रथम जिनपति ऋषभदेवनुं वर्णन आपेलुं छे. सिद्धाद्रि-शत्रुंजयनुं वर्णन पण सारा प्रमाणमां आपी घणो प्रकाश कर्यो छे—

विषयानुक्रमणिका—

सर्ग १ लो—आ सर्गमां कर्त्ताए मांगलिक करीने युगादिनाथने केवळज्ञानना प्रसंगमां अयोध्यानगरीथी शरुआत करीने ऋषभदेवराजा, तेमनी पत्निओ, तेमना पुत्रोना पूर्वभवनी साथे जन्म, अने नामो, पुंडरीकस्वामीनो जन्म, ऋषभदेवनी

दीक्षा तथा तेमने भिक्षानी अप्राप्ति, कच्छ महाकच्छ, नमि अने विनमि, श्रेयांसकुमारनुं दान, तक्षशिलाना उद्यानमां बाहुबलिने प्रभुनो समागम न थवो, प्रभुने केवळज्ञान थया पछी मरुदेवा माताने लइने भरतराजानुं वंदन माटे जवुं, मरुदेवा मातानुं सिद्धिगमन, पुंडरीकस्वामीनी दीक्षा अने गणधरपदनी स्थापना विगेरे वर्णवेला छे.

सर्ग २ जो—भरतराजानो दिग्विजय, भरत चक्रीना अठाणुं भाइओनी दीक्षा, बाहुबलि साथे युद्धनी तैयारीनुं वर्णन आपेल छे.

सर्ग ३ जो—भरत अने बाहुबलिनुं युद्ध. बाहुबलिने केवळज्ञान, ऋषभदेवनुं स्फटिकाचळ उपर गमन भरतमहाराजे करेलुं साधर्मिक वात्सल्य, भरतराजाए करेला चार वेदो, भरत पुत्र मरीचिनोमद, भरतमहाराजनुं चोवीश जिनना नामवाळुं चार श्लोकनुं वीतराग स्तोत्र, पुंडरीकस्वामीए पोताने केवळज्ञानना संबंधमां करेलो प्रश्न. प्रभुनी आज्ञानुसार पुंडरीकस्वामीनुं विमलाचळ प्रत्ये गमन वर्णवेला छे.

सर्ग ४ थो—विहार करता पुंडरीकस्वामीनुं पोतनपुरना उद्यानमां आगमन, त्यां मौन रहेल रत्नचूडराजा साथे सुनिचंद्र नामना मंत्रीनुं आगमन, मंत्रीए राजाना मौन थवाना संबंधमां करेल प्रश्न, पुंडरीकस्वामीए कहेल दान महिमा प्रदर्शित राजानो पूर्वभव, ते रत्नचूडराजानुं पांच हजार मंडळिक राजाओ साथे दीक्षा ग्रहणनुं वर्णन.

सर्ग ५ मो—पुंडरीकस्वामीनुं चंपापुरीमां आगमन, लक्ष्मीधरराजानुं चंद्रना छत्र सहित प्रभुने वंदन करवा आववुं, हरिणगमेषीदेवे ते राजाने चन्द्रनुं छत्र प्राप्त थवानुं पूछेलुं कारण, पुंडरीकस्वामीए कहेल शियळ अने तप महिमा प्रदर्शित करनार लक्ष्मीधरराजानो पूर्वभव, एंशी लाख मंडळीकराजा साथे लक्ष्मीधरराजाए लीधेली दीक्षानुं वर्णन.

सर्ग ६ ठो—पुंडरीकस्वामीनुं गजपुरनगरमां आगमन, त्यां सोमयशाराजानुं विजयसेन मंडळीकराजा तथा गुणाराम

श्वाननी साथे आववुं, श्वाननी धर्म भावनाना संबंधमां पुंडरीकस्वामीए कहेल भावमहिमा प्रदर्शित विजयसेन राजानो पूर्वभव अने देव द्रव्य भक्षण उपर गुणाराम श्वानना पूर्व भवनुं वर्णन अने विजयसेन राजानुं दीक्षा ग्रहण.

सर्ग ७ मो—पुंडरीकस्वामीनुं मथुरापुरीमां आगमन, त्यां धन श्रेष्ठीनुं पोताना पुत्र देवदत्तने लइने आववुं. श्रेष्ठीए देवदत्तनी स्त्री विमळाना दुर्गंधपणानो करेलो प्रश्न, पुंडरीकस्वामीए कहेल देवदत्तनो तथा मुनिनी दुगंच्छा, मंदिरनी आशातना अने प्राणिओनो वियोग करवाना फळ प्रदर्शित देवदत्त अने विमळाना पूर्वभवनुं वृत्तांत अने देवदत्तनुं त्रीश हजार वणिकोनी साथे दीक्षाग्रहण.

सर्ग ८ मो—भरतचक्रवर्ती प्रथमतीर्थपतिने वांदवा जाय छे. ते वखते तेमनी साथे पुंडरीकस्वामीने नहि देखवाथी प्रभुने तेनुं कारण पूछे छे. प्रभु कहे छे के पुंडरीक गणधर विमळाचळ प्रत्ये जाय छे अने त्यां तेमने केवळज्ञान उत्पन्न थवानुं छे. भरतराजानी ते वखते संघ काढीने सिद्धाचळप्रत्ये जवानी इच्छा थाय छे अने प्रभुने साथे पधारवा विज्ञप्ति करे छे. पछी प्रभु तथा संघ सहित भरतराजा नीकळी मथुरामां पुंडरीकस्वामीनी साथे मळे छे. संघ सिद्धाचळनी ते वखतना तळाटी रुप वणारसीपुरीमां पहोंचे छे. भरतराजा अहिं विमळाचळना दर्शननो अपूर्व उत्सव करे छे. चैत्री पूर्णीमाने दिवसे पुंडरीकस्वामी पांच क्रोड मुनिओ साथे अनशन करी केवळज्ञान पामी मोक्षे जाय छे. भरतराजा सिद्धाचळ उपर जिनप्रासाद करे छे. प्रांते आदिजिननो परिवार वताबी अष्टापद उपर आदिश्वर प्रभुना निर्वाणनुं वर्णन अने अष्टापद उपर भरतराजाए करावेल जिनमंदिरनुं वर्णन छे.

छेवटे समाप्तिमां—भरतराजाने अरिसाभुवनमां केवळज्ञान अने अष्टापद उपर तेमना निर्वाणनी हकीकत सविस्तर आपेली छे. प्रांते ग्रंथकारनी परंपरानुं वर्णन आपी आ ग्रंथ समाप्त करेल छे.

आ ग्रंथना पहेला त्रण सर्गमां अने आठमा सर्गमां जे आदिश्वर भगवाननुं चरित्र, भरतमहाराजनुं चरित्र तथा शत्रुंजयनी हकीकत आपेली छे ते जो के घणे ठेकाणे आवी गयेली छे, छतां आ ग्रंथमां तेज हकीकतनुं कर्त्ताए घणी खुबीथी वर्णन कर्युं छे. सर्ग चोथा, पांचमा, छठा अने सातमामां आपेला चार चरित्रो तद्दन अप्रसिद्ध छे. ते चरित्रो खास मनन पूर्वक वांचवा जेवा छे अने जीवनमां घणोज सुधारो करवावाळा छे. आ ग्रंथ हाथमां लीधा पछी साद्यंत वांचवानी रुची थया विना रहेती नथी. आ ग्रंथनुं जो विस्तारथी विवरण करवा बेसीये तो ग्रंथ करतां पण मोटुं पुस्तक थइ जाय तेम छे वास्ते साद्यंत वांची जइ कर्त्तानो अने प्रसिद्ध कर्त्तानो श्रम साफल्य करशो एवी आशा छे.

आ पुस्तकनुं गौरव वधारवा तेमां आवता पंदर आकर्षक चित्रो नाखवामां आव्या छे.

संस्कृतना अभ्यासीओ सर्व होता नथी तेथी तेमज ग्रंथ वांचवा भणवा योग्य होवाथी अमे आ ग्रंथनुं भाषांतर पण बहार पाडचुं छे ग्रंथनी अंदरना सघळा प्रस्ताविक श्लोको भाषांतरमां दाखल कर्या छे. भाषांतर अत्यंत रसीक छे अने १३ डीझाइनना चित्रो नाखी सचित्र करेल छे. भाषांतर प्रसारक सभाना मंत्री रा. रा. कुंवरजी आणंदजीभाइनी दृष्टि नीचे छपायेल छे. भाषांतरनी किंमत फक्त रु. ५ राखी छे.

संवत १९८० चैत्र शुद १५ } शाह मोहनलाल गीरधरलाल. भावनगर.

॥ श्रीजैनी शारदा विजयते ॥

अर्हम् ।

# श्रीपुण्डरीक-चरित्रम्

श्रीरत्नप्रभसूरि-शिष्य—

आचार्यश्रीकमलप्रभविरचितम् ।

मङ्गलानि —

श्री-कीर्ती-श्वरता-ऽऽत्ममोदसदनं दुष्कर्मनिष्कन्दनं स्थैर्यौ-दार्य-विवेकिताप्रमदनं सर्वाऽमरामोदनम् ।
स्फूर्जत्सप्तनयं सुहेतुनिचयं विज्ञातविश्वत्रयं पायात् पुण्यमयं सुमङ्गलमयं वो वाङ्मयं चिन्मयम् ॥ १ ॥

श्रीप्रथमो जिनः —

४ विश्वच्छायाविधायी सकलसुकविपुंस्कोकिलानुच्चवाचः संस्कुर्वन् मञ्जुरीतिप्रभृतिचतुरतामञ्जरीस्वाददानात् ।
आकल्पं स्थायिरूपोऽतुलरस-फलदः सद्विवेको रसालो येन प्रारोपितोऽसौ प्रथमजिनपतिर्यच्छताद् वाञ्छितानि ॥

श्रीशान्तिजिनः —

८ दत्तेऽल्पादपि सेवनान्निजतुलां पारापतस्यात्मनो देहेनाऽपि तदेष मे त्रिभुवनेश्वर्यां जिनेन्द्रश्रियः ।

---

१ सप्त नयाश्चैतेः—नैगमः, संग्रहः, व्यवहारः, ऋजुसूत्रः, शब्दः, समभिरूढः, एवंभूतश्च । २ प्रवचनम् । ३ चितेः कारणात्–उपचारदृष्ट्या चिन्मयम् । ४ उच्चवाचः–उच्चा वाचः संस्कुर्वन् । ५ त्रिभुवनेश्वर्याः चक्रवर्तिश्रियाः ।

दाता सख्यमितीव चक्रिकमलां जन्मद्वयस्याऽनुगां यो हृष्टां कृतवान् करोतु स जिनः शान्तिः प्रभां सप्रभाम् ॥

श्रीनेमिजिनः —

गत्वोद्वाहमिपान्निजौजसगुणेनैवाऽष्टजन्मप्रियां मोहारेः प्रविमोच्य पाणिनिहिते दीक्षाऽभिधे भाजने ।
हस्तक्षालनवत् प्रदाय विमलज्ञानाम्बु सिद्धेः सुखं भोज्यं भोजितवान् स्वयं तु बुभुजे पश्चात् स नेमिः श्रिये ॥४॥

श्रीपार्श्वजिनः —

यः पूर्वं कमठस्य वृष्टिसमये नागेश्वरात् सोल्लसद्-देहो वृद्धिमयन् सुरद्रुम इवोत्सर्पत्फणापल्लवः ।
उन्मीलत्सुमना विनीलकिरणैः पत्रैरिव प्रावृतो जातज्ञानफलस्तदेव कुरुतात् पार्श्वः श्रियं पार्श्वगाम् ॥५॥

श्रीवर्धमानजिनः —

स्वामी श्रीत्रिशलोदरेऽतिलघुतां स्नात्रे पदप्रान्ततो मेरोर्नर्तनशिक्षणे च गुरुतां विश्वे निजां दर्शयन् ।
मातुर्गौरवमुच्चकैः कथितवान् यो गर्भयोगी जिनः सोऽस्तु ध्यानविवर्धमानमहिमा श्रीवर्धमानः श्रिये ॥६॥

श्रीगुरुः पुण्डरीकः —

आद्यं केवलरत्नकोशमचलं शत्रुंजयाख्यं जवाद् गत्वा यः प्रकटं विधाय विजितक्रोधादिशत्रुव्रजान् ।
योधेन्द्रानिव सन्मुनीन् विहितवानक्षीणलक्ष्मीयुतान् श्रीनाभेयनिदेशतः स गणराट् श्रीपुण्डरीकोऽवतात् ॥

श्रीगौतमो गुरुः —

अस्त्यक्षीणमहानसी मयि यथा लब्धिः स्वभोगावधिः स्यादेषाऽपि कदा तथेति मनसा ध्यात्वेव हस्तस्थिताम् ।

श्लीक- ज्ञानर्द्धिं प्रथमं प्रदाय सुयतिव्यूहाय यो भुक्तवान् स स्वामी मम गो-तमोऽपहरतु श्रीगौतमोऽयं गुरुः ॥८॥

श्रीअतिमुक्तको मुनिः —

३ ॥ येन नारदमुनेः पुरः पुरा सिद्धतीर्थमहिमा महाद्भुतः। कीर्तितः सुकृतकीर्त्यलंकृतः सोऽतिमुक्तकयतीश्वरोऽवतात्॥

४ श्रीसूरीन्द्राः —

यः पञ्चधाऽऽचारविशोपितश्रीरवाप्तसिद्धान्तसमुद्रपारः। सूरीन्द्रवर्गोऽस्तु सुबोधिरत्नभरप्रदो ज्ञानरुचाग्रदीपः॥

ग्रन्थकर्तुरात्मलाघवम् —

पुण्डरीकचरित्रस्य प्रोज्ज्वलस्य विलोकने। मार्तण्डमण्डलस्येव स्वल्पदृष्टिः क्षमोऽस्मि किम्? ॥ ११ ॥

८ मुनिप्रेरणया प्रवृत्तिः —

मुनीनां पितृतुल्यानां वाक्यालम्बनतोऽथवा। करिष्यामि पदोच्चारान् बालः स्वल्पबलोऽप्यहम् ॥ १२ ॥

तथाच — शत्रुंजयमाहात्म्ये पूर्वाचार्याः —

सिरिसत्तुंजयगिरिवर-माहप्पं भद्दबाहुणा रइअं। श्रीशत्रुंजयगिरिवरमाहात्म्यं भद्रबाहुना रचितम् ॥

२ तत्तो य वयरसामी उद्धरइ इह समासेण ॥१३॥ ततश्च वज्रस्वामी उद्धरति इह समासेन. ॥ १३ ॥

तं इह पालित्तेणं उद्धरिअं गिरिवरिंदरुंदाओ। तद् इह पादलिप्तेन उद्धृतं गिरिवरेन्द्ररौद्रात्।

---

१ गोः वाण्याः, तमः-अज्ञानम्-गो-तमः। २ "रुंदो विउल-मुहलेसु"-(दे० स० व०) इति देशीनाममालावचनाद् अत्रत्यो रुंद-शब्दो विपुलार्थः, स च रौद्रशब्दप्रकृतिक इति।

कप्पं पाहुडभिन्नं भणिमो संखेवओ सारं ॥१४॥ कल्पं प्राभृतभिन्नं भणामः संक्षेपतः सारम् ॥ १४ ॥

अतश्च— पौण्डरीकी कथा श्रूयताम् —

विवेकलोचनार्कस्य श्रीनाभेयजिनेशितुः। धर्मवीरत्वशृङ्गारसुभगस्याद्यचक्रिणः ॥१५॥
शत्रुंजयस्य सिद्धाद्रेश्चरित्रैश्चित्तचित्रदा। पौण्डरीकी कथा पुण्या पुण्याय श्रूयतां जनाः ॥१६॥

सत्पण्डिताः— —(युग्मम्)

प्रसद्य सद्भिर्विद्वद्भिर्मद्वाग्गुम्फे मनो निजम्। नैर्मल्याय निधातव्यं कतकक्षोदवज्जले ॥१७॥

अयोध्या—

अस्त्यऽयोध्येति नगरी गरीयःसंपदास्पदम्। याऽर्हन्नाथा नृत्यतीव देवगेहध्वजैर्भुजैः ॥१८॥
मणिप्रस्फुरद्धाम-नीरे प्रासादपद्मिनि। यस्याः प्रविष्टो मध्याह्ने हंसो हंस इवाऽऽबभौ ॥१९॥
दानं प्रियवाक्सहितं ददतो वीक्ष्य सज्जनान्। मौक्यतो लज्जिता यत्र कल्पवृक्षास्तिरोऽभवन् ॥२०॥
मानयन्ति सदा पुत्राः पितॄन् यत्र पुरे भृशम्। इति प्रेक्ष्येव कामा-ऽर्थौ धर्मं पीडयतो नहि ॥२१॥

ऋषभो भूमिपतिः—पौराश्चः—

अर्हन् श्रीऋषभस्तत्र पाति भूमीपतिः प्रजाः। सुरा-ऽसुरशिरोरत्नराजिनीराजितक्रमः ॥२२॥
आचारचातुरीचारु विश्वं विश्वं चकार यः। स्रष्टेत्यवादि पुरुषोत्तम-नाभिभवो जनैः ॥२३॥

१ एकः श्रीशत्रुंजयकल्पः श्रीपादलिप्तसूरिणा संकलित- इति जैनग्रन्थावल्यां दृष्टम्, स एव अत्र अनेन ग्रन्थकृता स्मृत इति सुसंभवम्। २ अत्र धामानि नीराणि, प्रासादाः पद्मानि। ३ मूकभावात्। ४ कृताराात्रिकक्रमः। ५ विश्वं समस्तम्।

चन्द्रेऽतिक्रौटिल्यं चञ्चलत्वं समीरगे। वज्रावेरातिदाढिर्त्वं न पौरेषु कदाचन ॥२४॥
प्रीयन्ते गो-रसैर्यत्र गो-पाला उभयेऽपि हि। दान-सद्गतिसंयुक्ताः कुंजराश्च नृकुंजराः ॥२५॥
हृदि स्त्रीदर्शनाद् मारो बन्धश्च प्रेमतो नृणाम्। गुप्तिर्मनो-वाक्-कायानां क्रियते यत्र गर्जनैः ॥२६॥
पवित्रा मगरित्रा च समृद्धा तत्र धर्मिणि। न्यायिनि दानिनि सर्वाऽप्युर्वराऽजनि राजनि ॥२७॥
प्रभोः प्रणयिनी कीर्तिः सुरा-ऽसुर-नरेश्वरान्। नमयामास तन्नासावधिज्यं विदधे धनुः ॥२८॥

किं बहुना?

धान्यादिना जिन-इनः स तमोऽपहारं कुर्वंस्तु येषु न करैर्विदधेऽङ्गितापम्।
धन्या जनाः प्रभुमहेषु न यैः सपुण्याः पीतः कुतूहलरसः स्मितपद्मनेत्रैः ॥२९॥

ऋषभपत्न्यौ—

सुमङ्गला स्वरूपेण दृशोराहितमङ्गला। सुनन्दा च सदाऽऽनन्दा प्रभोः पत्न्यौ बभूवतुः ॥३०॥
स्वामी ताभ्यामनासक्त-मनाः स बुभुजे सुखम्। पारो भोगफलाम्भोधेः प्राप्यते कथमन्यथा? ॥३१॥
अथाऽसंपूर्णपट्पूर्व-लक्षा देवी सुमङ्गला। दध्रेऽस्य गर्भं मौक्तिकं शुक्तिकेव पयोमुचः ॥३२॥

---

१ द्वितीयाचन्द्रस्य अतिक्रमात्। २ पवने। ३ गो-रसाः दधि-नवनीतादिकाः, वाणीरूपाश्च। ४ गो-पालाः पृथ्वी-पालाः, आभीराश्च। ५ दानं मदः, ददनं च। सद्गतिः-प्रशस्तं गमनम्, सद्बोधश्च-गतेर्बोधार्थत्वात्-अथवा गतिः स्वर्गादिः। ६ गुप्तिनिषेधपक्षे गुप्तिः कारागृहम्। ७ तत असौ प्रभो न धनुः अधिज्यं विदधे-कीर्त्या एव सर्वेषां वशीकरणात्। ८ इनः सूर्यः, पतिश्च। ९ कराः किरणाः, राज-देया भागाश्च।

सुनन्दाऽपि हृदानन्दा प्रभुसेवाप्रभावतः। बभार गर्भं सद्धर्म-मदभ्रं भव्यधीरिव ॥३३॥
अन्यदा निशि संसुप्ता साऽथ देवी सुमङ्गला। चतुर्दश महास्वप्नान् ददर्शाऽऽमोददायिनः ॥३४॥
गजो-क्ष-सिंह-लक्ष्मी-स्रक्-चन्द्रा-ऽर्क-कलश-ध्वजाः। पद्माकर-विमाना-ऽब्धि-रत्नपुञ्जा-ऽग्नयश्च ते ॥३५॥
स्वप्नान् स्वबुद्धावास्थाप्य सा प्रबुद्धा महासती। प्रभाते सप्रभा प्रष्टुं प्रमोदात् प्रभुमभ्यगात् ॥३६॥
कराभ्यां क्रान्तहस्तीन्द्रं मृगेन्द्रं सान्द्ररोचिषम्। दृष्ट्वा स्वो (स्वो) त्संगगं स्वप्ने सुनन्दाऽप्यत्र साऽऽययौ ॥३७॥
तयोः स्वप्नान् निशम्याऽऽह स्वामी कोमलया गिरा। देवि! स्वप्नप्रभावात् ते चक्री पुत्रो भविष्यति ॥३८॥
सुमङ्गला पुनः प्राह मत्सुतः कर्मतः कुतः। भविष्यति स चक्रेशः? प्रसद्येदं वद प्रिय! ॥३९॥
जगाद जगदीशोऽथ ज्ञानत्रयपवित्रवाक्। युवाभ्यां स्थिरचित्ताभ्यां देव्यौ! संश्रूयतां वचः ॥४०॥

ऋषभपुत्रपूर्वभवाः—

क्षेत्रे महाविदेहाख्ये नगरी पुण्डरीकिणी। वज्रसेनाऽर्हतस्तत्र पुत्राः पञ्चाऽभवन्नमी ॥४१॥
वज्रनाभस्तथा बाहुः सुबाहुः पीठसंज्ञकः। महापीठश्चेति सुता आद्यश्चक्र्यभवच्चिरम् ॥४२॥
कियत्यपि गते काले संसाराऽसारताविदः। वज्रसेनजिनस्याऽन्ते तपस्यां ते समासदन् ॥४३॥
गणेश्वरपदे प्राप्ते वज्रनाभो महामुनिः। अर्हद्भक्त्यादिभिः स्थानैस्तीर्थंशत्वमुपार्जयत् ॥४४॥
बाहुर्बहुभ्यः साधुभ्यो भक्तं भक्तिभराद् ददत्। आर्जयच्चक्रवर्तित्वं महाभोगविभूतिदम् ॥४५॥

१ अदभ्रम्-संपूर्णम्।

यतः—

धर्मोपदेशे गुणसन्निवेशे चित्तप्रसादे शुचिशास्त्रवादे। अन्नं हि हेतुर्दुरिताब्धिसेतुर्देयं यतिभ्यः शम-सन्मतिभ्यः॥

उक्तं चः—

| | |
|---|---|
| "तीहिं ठाणेहिं जीवा सुहदीहाउयत्ताए कम्मं पगरंति. तं जहा-पाणे नो अइवाइत्ता, नो मुसं वइत्ता, तहारूवं समणं वा फासुएणं, एसणिज्जेणं, मणुन्नेणं, पीइकारणेणं असण-पाण-खाइम-साइमेणं पडिलाभित्ता भवइ-इच्चेहिं तीहिं ठाणेहिं जीवा सुहदीहाउयत्ताए कम्मं पगरंति"। | त्रिभिः स्थानैः जीवाः शुभदीर्घायुष्कतया कर्म प्रकुर्वन्ति. तद्यथा-प्राणान् नो अतिपात्य, नो मृषा उदित्वा, तथारूपं श्रमणं वा प्रासुकेन, एषणीयेन मनोज्ञेन, प्रीतिकारणेन, अशन-पान-खादिम-स्वादिमेन प्रतिलाभ्य भवति-इत्येतैस्त्रिभिः स्थानै-र्जीवाः शुभदीर्घायुष्कतया कर्म प्रकुर्वन्ति। |

सुबाहुः श्रामणाङ्गेषु चक्रे विश्रामणां सदा। तत्प्रभावेण चक्रेशाऽधिकवीर्यत्वमार्जयत् ॥४७॥

यतः—

तपःपुषां ग्लानिमुपेयुषां यो जराजुषां देहमथो गुरूणाम्।
विश्रामणार्थः कुरुते बलाढ्यं बलाधिकः स्यात् स कथं न विश्वे? ॥४८॥

श्रीवज्रनाभो व्याचख्यौ सुबाहुं बाहुमप्यथ। जातौ पीठ-महापीठौ रोषेण कलुषान्तरौ ॥४९॥

उभं तपस्तपस्यन्तावप्येतौ रोषतो मुनी। ईषन्मायायुतौ स्त्रीत्वं कर्मोपार्जयतामुभौ ॥५०॥

---

१ अयं पाठः स्थानाङ्गसूत्रे तृतीयस्थाने प्रथम उद्देशके (पृ० ११७ बाबू). २ श्रमणस्य इदम्-श्रामणम्।

वश्यपञ्चेन्द्रियाः पञ्च-नमस्कृतिकृतोऽथ ते। यतिनः कृतिनः पञ्च संप्रापुः पञ्चतां सुखात् ॥५१॥
जीवः श्रीवज्रनाभस्य च्युतः सर्वार्थसिद्धितः। मरुदेवोदरेऽभूव-महं नाभिनृपात्मजः ॥५२॥
बाहोः पीठस्य जीवौ नु च्युत्वा तस्माद् विमानतः। त्वत्कुक्षावागतौ देवि! सांप्रतं युग्मरूपिणौ ॥५३॥
महापीठः सुबाहुश्च भोगान् भुक्त्वा च्युतौ ततः। संजातौ युग्मरूपेण सुनन्दाकुक्षिकन्दरे ॥५४॥
सुनन्दा न्यगदन्नाथ! महापीठ-सुपीठयोः। जातं मायाफलं स्त्रीत्वं किं भावि नु तपःफलम्? ॥५५॥
स्वामी जगाद हे देवि! महानन्दपदप्रदम्। लप्स्येते केवलित्वं तौ महापीठ-सुपीठकौ ॥५६॥
एवं सुकोमलं स्नेह-सहितं मधुरोज्ज्वलम्। स्वामिनो गो-रसं पीत्वा ते प्रीते जग्मतुर्गृहम् ॥५७॥

ऋषभपुत्रादिजननम्—

अथो सुमङ्गला युग्मं सुषुवे सुखवेश्महृत् (?)। महौजा भरतपुत्रस्तत्र ब्राह्मी च पुत्रिका ॥५८॥
सुनन्दाऽपि ततोऽसूत यमलं विमलं रुचा। तत्र बाहुबलिः पुत्रः सुन्दरी चैव पुत्रिका ॥५९॥
अथो एकोनपञ्चाशत्-पुत्रयुग्मान्यजीजनत्। प्रभूतभाग्यसंभूतमङ्गला सा सुमङ्गला ॥६०॥

तेषां नामानिः—

काबेर-कीर-काश्मीर-काम्बोज-कमलो-त्कलाः। करहाट-कुरुस्वाण-कैशिकक्रथ-कोशलाः ॥६१॥
कारु-केशाका-ऽलप-कच्छ-कर्णाट-कीटकाः। केकि-कोल्लगिरी-कामरूप-कुङ्कुण-कुन्तलाः ॥६२॥
कलिङ्ग-कलकूटौ च केरलः कलकण्ठकः। खर्परः खस-खेटौ वा गोप्या-ऽङ्गौ गौड-गाङ्गकौ ॥६३॥

१ मृत्युताम्।

पुण्डरीक- ॥ ९ ॥

शैब-बर्बर-चूडाश्च जालंधर-करंकणौ । टक्कोडीआण-डाहाल-भद्र-नायक-तोसलाः ॥६४॥
दशार्ण-दण्डकौ देवसभ-नेपाल-नर्तकाः । पञ्चाल-पह्लवौ पुण्ड्र-पाण्ड्य-मलयथा-ऽर्बुदाः ॥६५॥
बर्बरा धीर-भद्रीय-माहिष्मक-महोद(य)याः । मरुण्ड-मकलौ मेद-मरु-मद्गुरु-मङ्गनाः ॥६६॥
मल्लवर्त-महाराष्ट्र-यवना राम-राटकाः । लाट-ब्रह्मो-त्तरब्रह्मावर्त-ब्राह्मणवाहकाः ॥६७॥
विराट-वङ्ग-वैदेह-वनवास-वनायुजाः । वाल्हीक-वल्लवा-ऽवन्ति-वङ्गः शक-सिंहलौ ॥६८॥
सुह्म-सूर्पार-सौवीर-सुराष्ट्र-सुहडा-ऽश्मकाः । हूण-हूरक-हर्म्यांज-हंसा-हूहुक-हंहकौ ॥६९॥
इत्यष्टानवतिः स्वामि-पुत्राः सुत्रामरोचिषः । उत्सवाद् दत्तनामानः सुजन्मानः शुभा बभुः ॥७०॥
प्रभोरेतान्यपत्यानि धात्रीभिः पञ्चपञ्चभिः । लाल्यन्ते स्म समितिभिः शीलाङ्गानीव नित्यशः ॥ ७१ ॥
शतपुत्रस्फुरत्पत्रो नालीकप्रतिभः प्रभुः । यशोरसे रसापीठे रेजे राजश्रियाऽनिशम् ॥ ७२ ॥
स्वामी सुवर्णवर्णाङ्गः सच्छायाङ्गैर्वृतोऽङ्गजैः । सुरशैल इवोद्भूतैः कोमलैः कल्पवृक्षकैः ॥ ७३ ॥

पुत्राणां विवाहादि—

इतोऽस्ति तत्राऽयोध्यायामेव देवयशान्नृपः । शैशवादादिदेवस्य वयस्यः सुप्रशस्यधीः ॥ ७४ ॥
विमलाभिः कलालीभिः कलिता ललिता गुणैः । ऋषभश्रीरिति नाम्ना तस्माज्जाताऽस्ति पुत्रिका ॥ ७५ ॥
यस्यां विलोकितायां हि रतिर्न रतिदा दृशोः । सुदन्त्यां सुवदन्त्यां तु रीणा वीणाऽपि कर्णयोः ॥ ७६ ॥

---

१ इन्द्रकान्तयः । २ नालीकं कमलम् । ३ छाया कान्तिः, वृक्षच्छाया च । ४ सुरशैलो मेरुः । ५ रतिः स्मरपत्नी । ६ रीणा क्षीणा ।

तां कन्यां लक्षणैर्धन्यां प्रभुः प्रेक्ष्य विचार्य च। स्मित्वा ययाचे तं भूपं भरतायाऽऽत्मसूनवे ॥ ७७ ॥
अथ देवयशाभूपः प्रणिपत्य जगत्पतिम्। स्वकरौ कोरकीकृत्य[1] जगाद जगतां वरः ॥ ७८ ॥
जगदीश ! क्व ते पुत्रो देवेभ्योऽधिककान्तिमान् ?। मम त्वत्पददासस्य मुग्धरूपा क्व बालिका ? ॥ ७९ ॥
किन्तु प्रभो ! मे तनया सवयास्तनयेन ते। अतः प्रसादमाधाय प्रमाणय[2] मनोरथम् ॥ ८० ॥
इति प्रतिश्रुतेऽनेन भरतं स्वसुतं प्रभुः। व्यवाहयत् सुविधिना कुमारीमृषभश्रियम् ॥ ८१ ॥
कुमारं भरतं मुग्धं क्रीडारम्भरतं तया। वन-वाप्यादिषु प्रेक्ष्य कुतुकी स्वजनोऽभवत् ॥ ८२ ॥
कटाक्षैर्वचनैः पाणिक्षेपैरालिङ्गनैस्तयोः। स्नेहेन यौवनेनोच्चैस्त्रपा-मौग्ध्ये तनूकृते ॥ ८३ ॥
बाल्यसेतुं व्यतिक्रम्य यौवनाम्भोधिमध्यगौ। तौ दम्पती नवं सौख्यपीयूषं पपतुर्मिथः ॥ ८४ ॥

भरतपुत्रपुण्डरीकोत्पत्तिः—

इत्थं प्रयाति समये पद्मस्वप्नेन सूचितम्। सूनुमृषभसेनाख्यमृषभश्रीरसूत सा ॥ ८५ ॥
पुण्डरीकगर्भस्वप्नात् पुण्डरीकाङ्गगन्धतः। पुण्डरीक इति जनैः कृताख्यो ववृधे शिशुः ॥ ८६ ॥

श्रीऋषभविचिन्तनम्—

इतश्च जगतां नाथो भवपाथोनिधिं स्वयम्। प्रसरन्मोहतरङ्गं हृतरङ्गं व्यचिन्तयत् ॥८७॥
हंहो ! आत्मन् ! विहायांऽहो[3] मोक्षं चेद् गन्तुमिच्छसि। संसारे ध्वस्तसंसारे[4] किं लुब्धोऽसि विचेतनः ॥८८॥

आत्मा आह— अन्येऽपि स्थिताः सन्ति।

१ कोरकीकृत्य संपुटीकृत्य। २ प्रमाणय प्रमाणं कुरु। ३ अंहः पापम्। ४ समीचीनः सारः ध्वस्तो यस्मिन्।

प्रभुराह—

पञ्चेन्द्रियघटक्षिप्तं मारसौख्यविषोदकम्। यथा यथा पिबन्त्येते तथा मूर्छन्ति जन्तवः ॥८९॥

आत्मा आह—अहमत्र राजा। (प्रभुराह—)

स्त्री-पुं-नपुंसकत्वे-श-रङ्करूपाणि यच्छतः। मोहस्य नटनाज्जीव! कष्ट नाऽद्यापि खिद्यसे? ॥९०॥

किं बहुना?— सिष्णांसुरुच्चैर्मृगतृष्णिकासु सोऽन्त्रैर्निजाङ्गं परिधित्सुरेव।

खपुष्पमालां स्वगले निधित्सुः समीहते यो विषयैः सुखानि ॥९१॥

आत्मा प्रोचे—किं कुर्वे? स्वामी आह—

ततो व्रतं समाश्रित्य स्फूर्जन्नियमतीव्रतम्। आत्मानं च जनं चैनं मोचयाऽऽशु भवारितः ॥९२॥

लोकान्तिकाः सुरा जगुः—

अत्रान्तरे प्रभोरग्रे व्योम्नो लोकान्तिकाः सुराः। तीर्थं प्रवर्तय स्वामिन्! इति प्राञ्जलयो जगुः ॥९३॥

श्रीऋषभ-भरतवार्तालापः—

ततः श्रीभरतं बाहुबलिप्रमुखबान्धवैः। युक्तमाकारयत् स्वामी सोऽपि तत्राययौ जवात् ॥९४।

नत्वा पुरस्थितो ज्ञात-नयः स तनयः प्रभोः। प्रसादेभरतः प्रोचे भरतः स्वामिनाऽमुना ॥९५।

वयं मुमुक्षवो वत्स! भवं परिजिहीर्षवः। ततो भव महीनस्त्वमहीनभुजविक्रमः ॥९६॥

---

१ स्नातुमिच्छुः। २ अन्त्र-आंतरडां। ३ परिधातुमिच्छुः। ४ निधातुमिच्छुः। ५ स्फूर्जन्ती नियमस्य तीव्रता यस्मिन् तत्। ६ भवशत्रोः। ७ प्रसाद एव इभो हस्ती। ८ परिहर्तुमिच्छवः। ९ मह्याः इनः स्वामी।

इत्यादेशं पितुः श्रुत्वा स्नेहगद्गदया गिरा। स कुमारः सुकमारमित्युवाचौचितीचणः[1][2] ॥९७।
यथा तात! पवित्रं मे त्वत्पादरजसा शिरः। तथा राज्याभिषेकेऽपि सर्वतीर्थाम्भसा नहि ॥९८।
यथा त्वत्पाणिपद्मेन सलीलेन श्रुती मम। प्रीयेते न तथा तात! मागधानां चटूक्तिभिः ॥९९॥

श्रीऋषभोक्तिः—

हर्षद्रुमप्रसूनेन स्मितेन सुरभीकृताम्। उवाच वाचं स स्वामी भरतं स्वसुतं प्रति ॥१००।
गृहारम्भं स्वयं श्रित्वा स्वतातं धर्मकर्मणि। अनुमत्य पुनस्त्वत्र पुत्रा अन्वर्थतस्तु ते ॥ १ ॥
वत्स! धत्स्व ततो राज्यं प्राज्यं कुर्मो व्रतं वयम्। वृद्धानामिह सा भक्ति-र्या धर्मे प्रेरणा परा ॥ २ ॥
तातस्याऽऽज्ञां सुरैर्मान्यां श्रुत्वेति भरतः सुतः। ह्रियाऽप्यवाङ्मुखस्तस्थौ विनीतानामियं स्थितिः ॥ ३ ॥

भरतराज्याभिषेक-बाहुबलिप्रमुखभागदानं च—

युगादीशनिदेशेन भरतं वरवारिभिः। कारितमङ्गलोद्गानाः प्रधानाः सिषिचुस्तदा ॥ ४ ॥
स बाहुबलिमुख्यानां स्वामी बाहुबलस्पृशाम्। विश्वान् विश्वंभराभोगान् तदौचित्याद् ददौ तदा ॥ ५ ॥

श्रीऋषभप्रव्रज्याभिषेकः—

दानं संवत्सरं यावद् दत्त्वा निर्मत्सराऽऽन्तरः। श्यामाष्टम्यां तिथौ चैत्रे तुरीये वासरांशके ॥ ६ ॥
चन्द्रे श्रितोत्तराषाढे सुरा-ऽसुर-नरेश्वरैः। शुचिभिः स्नापितो नीरैः सुरत्नशिबिकाश्रितः ॥ ७ ॥
अमरीभिश्च नारीभिः गीयमानोऽम्बरे भुवि। संसिद्धार्थः स सिद्धार्थ-वनं प्रापाऽङ्घ्रिपावनः ॥ ८ ॥

---

१ सुकोमलम्। २ औचितीचतुरः।

(विशेषकम्)

श्रीऋषभदीक्षा-मनःपर्यवज्ञानम्—

रत्नयानादथोत्तीर्याऽशोकोऽशोकतरोस्तले। स त्रिलोक्या अलंकारोऽलंकारानमुचत् प्रभुः ॥ ९ ॥
प्रभुः स्वकुन्तलान् श्यामान् विश्वश्यामत्वभित् प्रभुः। उच्चखान युगादीशो जवान् मुष्टिचतुष्टयात् ॥१०॥
कल्याणकुम्भस्कन्धाग्र-स्फुरत्पल्लवसंनिभाः। सन्त्वितीन्द्रेण संरुद्धः प्रभुः पञ्चममुष्टितः ॥११॥
आपस्त्रैलोक्यशृङ्गारः प्रासादाग्रे च मण्डनम्। वासो वासवसंमुक्तं दधौ स्कन्धे जिनेश्वरः ॥१२॥
दुग्धसिन्धौ विनिक्षिप्य कुन्तलानमरेश्वरः। तुमुलं मुकुलीचक्रे जनानां हस्तसंज्ञया ॥१३॥
कृतषष्ठतपाः सिद्ध-नमस्कारं स्मरन्नरम्। सावद्ययोगं त्रिविधं त्रिधा सर्वं निषिद्धवान् ॥१४॥
इति दीक्षाजुषो ज्ञानं मनःपर्यवसंज्ञकम्। उत्पेदे केवलज्ञानभानोः प्रातःप्रकाशवत् ॥१५॥

श्रीऋषभेण सह अन्येषां प्रव्रज्या—

भूपाः कच्छ-महाकच्छ-प्रमुखाः प्रभुणा सह। व्रतं जगृहिरे भक्ताश्चतुःसाहस्रसंमिताः ॥१६॥

श्रीऋषभविहारे भिक्षाऽप्राप्तिः—

सुरेषु सर्वपुत्रेषु स्तुत्वा नत्वा गतेष्वथ। मौनवान् मुनिनाथोऽयं विजहार धरातलम् ॥१७॥
वर्षं यावत् पुरा दानं ददता सर्वगेहतः। स्वामिना दूरिता भिक्षा प्रभुं प्रापेव सा न तत् ॥१८॥
केऽपि रूपवतीः कन्याः केऽपि मत्तांश्च दन्तिनः। केऽपि सर्वां समृद्धिं स्वां प्रभवेऽढौकयन् मुदा ॥१९॥

---

१ वासवो देवेन्द्रः। २ पु०-गः।

दारांस्तु कारा इव योऽत्युदारो[1] नागांश्च नागानिव[2] नाकिपूज्यः ।
भूतिं तथा भूतिमिवोच्चभूति-काम्यऽस्तकामोऽचकमत[3] जिनो न ॥२०॥

कच्छ- महाकच्छादीनां त्रिपथगातटस्थितिः —

दुःसहान् सहमानेन स्वामिनैवं परीषहान् । सह गन्तुमशक्तास्ते कच्छाद्या इत्यचिन्तयन् ॥२१॥
तरणं गरुडेनाऽब्धौ समीरेण समं रयः । आरब्धं स्वामिनाऽस्माभिः यत् तीव्रं व्रतपालनम् ॥२२॥
चेतसा चिन्तयित्वैवं कच्छाद्या अल्पशक्तयः । तस्थुस्त्रिपथगामध्ये स्वस्थेन मनसाऽखिलाः ॥२३॥

नमि-विनमी—

अथो नमि-विनम्याख्यौ व्यावृत्तौ स्वामिकार्यतः । प्रेक्ष्य कच्छ-महाकच्छौ पितरौ चैवमूचतुः ॥२४॥
अभक्ताभ्यां युवाभ्यां किं ताता! लेभे दशेदृशी ? । ऋषभस्वामिनो भक्तिः परत्रेहाऽपि सौख्यदा ॥२५॥
आहतुस्तौ प्रभोस्तीव्रं व्रतं स्वं चाल्पशक्तिकम् । ज्ञात्वा राज्यं त्वगृह्णन्तौ वयमित्थमिह स्थिताः ॥२६॥
पित्रोः श्रुत्वा स्वरूपं तौ-ऊचतुः क्षत्रियोत्तमौ । त्यजद्भ्यां स्वामिनं नैव युवाभ्यां सुकृतं कृतम् ॥२७॥
त्रिविष्टपहितः स्वामी सेवकानां सुरद्रुमः । अदास्यत् तद् वचो येन युवयोः स्यान् महोदयः ॥२८॥
तदाऽऽवामेकचित्तेन प्रभुं सेवावहेऽधुना । साम्राज्यमपि यच्छन्तं भरतं मनसाऽपि न ॥२९॥
इत्थं कृतप्रतिज्ञौ तौ प्रभुं प्राप्यैकमानसौ । पाणौ कृपाणौ बिभ्राणौ तिष्ठतुः पारिपार्श्वगौ ॥३०॥
स्वमनोवद् विभोरग्रे विरजीकृत्य भूमिकाम् । सिषेचतुः[4] सुमाऽम्भोभिः[5]-लिप्सयेव फलस्य तौ ॥३१॥

१ सर्पानिव । २ भस्मवत् । ३ न कामयांचक्रे । ४ पु० सिक्त्वा चक्राते । ५ सुमानि कुसुमानि ।

धरणेन्द्रागमनम्—

अन्यदा धरणेन्द्रोऽथ जिनपं नन्तुमागतः। सेवाहेवाकिनौ वीक्ष्य तौ वीरौ विस्मितोऽवदत् ॥३२॥
दर्शयन्तौ प्रभुं खड्गबिम्बेनैव हृदि स्थितम्। कौ युवां कुरुतं सेवां किमर्थं क्षत्रियोत्तमौ!? ॥३३॥

नमि-विनमिप्रतिवचः—

चेकतुः[1] फणिनाथं तौ भृत्यावावामसौ[2] प्रभुः। दीक्षां जिघृक्षुर्वर्षेण दानादप्रीणयज्जगत् ॥३४॥
तदा दूरस्थितावावामभूव[3] स्वामिकार्यतः। चिन्तामणिरिवैकोऽपि दास्यत्यत्राऽपि नौ मतम् ॥३५॥

यतः—
सेवकैर्निजपतिः खलु सेव्यो निर्धनोऽपि सधनोऽपि परो न।
नीरहीनमपि नीरदमेव चातकः श्रयति नैव समुद्रम् ॥३६॥

सर्पाधिपोऽवदत्—

इत्याग्रहस्थौ तौ प्रेक्ष्य मा भूत् सेवा वृथेत्यसौ। प्रभुभक्तरतयोः स[4]त्वरक्तः सर्पाधिपोऽवदत् ॥३७॥
परत्र भाविनी मुक्तिर्युवयोः स्वामिसेवनात्। साधर्मिकत्वाद् विद्यात्वं मत्तो गृहीतमादरात् ॥३८॥
अष्टचत्वारिंशद्विद्याः सहस्रान् धरणस्तयोः। प्रददौ रोहिणी-गौरी-प्रज्ञप्तिप्रमुखानथ ॥३९॥

नमि-विनमिवैताढ्यगमनम् —

प्रणम्य स्वामिनः पादा-वापृच्छ्य धरणेश्वरम्। विमानमद्भुतं कृत्वा-ऽऽरुह्य तौ व्योम्नि चेलतुः ॥४०॥
प्रभुभक्तिफलं पित्रोः संदर्श्य भरतस्य च। तौ निजं लोकमादाय गतौ वैताढ्यपर्वतम् ॥४१॥

---

१ 'ऊचतुः' इति भवेत्। २ भृत्यौ आवाम्। ३ दूरस्थितौ आवाम् अभूव। ४ पु० त। ५ पु० शक्ति-।

कृत्वोत्तरस्यां पष्टिं सत्-पुराणि नमिभूपतिः। राजधानीं निजां चक्रे पुरे गगनवल्लभे ॥४२॥
विनमिर्दक्षिणश्रेण्यां पञ्चाशन्नगराण्यसौ। संस्थाप्य सुस्थितिं चक्रे पुरेऽथ रथनूपुरे ॥४३॥

आद्यदानी श्रेयांसः —

अतो वृषभनाथोऽपि क्षुत्परीषहसासहिः। भिक्षां गवेषयामास ग्रामे ग्रामे गृहे गृहे ॥४४॥
वरं व्रतजनन्या नो वैरस्यं भिक्षया सह। इति ज्ञात्वेव स विभु–रीहांचक्रे तयां रसान् ॥४५॥
ज्ञानाद्याद्यो जिनो मत्वा श्रेयांसं त्वाद्यदानिनम्। वत्सरान्ते निराहारः पुरं गजपुरं ययौ ॥४६॥
तत्र श्रीबाहुबलेश–पुत्रः सौम्ययशा नृपः। श्रेयांसोऽस्य सुतः स्वप्नं निश्यपश्यदयेदृशम् ॥४७॥
भृशं निष्प्रभतां प्राप्तो मेरुः सर्वसुराश्रयः। सुधाम्भःकुम्भसेकेन पुनश्चक्रे प्रभाधिकः ॥४८॥
दृष्टं च श्रेष्ठिना स्वप्नं जयन् कोऽपि बहून् नरान्। खिन्नः श्रेयांससाहाय्यं प्राप्य सर्वान् जिगाय तान् ॥४९॥
श्रीसोमयशसा दृष्टो भानुर्भानुविवर्जितः। श्रेयांसोऽयोजयत् तांश्च सोऽपि तैः शुशुभे पुनः ॥५०॥
सर्वे ते संसदि प्रातः स्वस्वस्वप्नविचारतः। श्रेयांसस्य शुभप्राप्तिं निश्चिन्वन्ति स्म चेतसि ॥५१॥
यावत् सभायाः स्वस्थानं विचार्य समये ययुः। तावद् विवेश भगवान् पुरं धर्म इवाङ्गवान् ॥५२॥
पादान्ते लुठनं केचित् केचिन्न्युञ्छनकानि च। पुरे प्रविशतश्चक्रुः प्रभोः प्रेमपरायणाः ॥५३॥
धृतं वन्दारुभिर्नाथं चातकैरिव नीरदम्। पश्यन् केकिवदुद्ग्रीवः श्रेयांसो मुमुदेतराम् ॥५४॥
ईदृक्षं रूपमग्रेऽपि दृष्टमित्येष चिन्तयन्। सस्मार प्राग्भवेऽर्हन्तं वैरसेनं विलोकितम् ॥५५॥

१ पु० ऋषभ– । २ तया भिक्षया । ३ पु० रसा । ४ पु० निमवताम् । ५ बन्दनशीलो वन्दारुः ।

[illegible] वज्रनाभोऽयं भरते भविता जिनः। स्मृत्वा श्रेयांस इत्यागान्-नाभेयं प्रपितामहम् ॥५६॥
नाना नाथं निमन्त्र्याऽसौ दानायाऽन्नं व्यलोकयत्। तावदिक्षुरसोऽभ्यागान्-नव्यः श्रेयांसदृक्पुरः ॥५७॥
प्रभुं पात्रोऽग्रहीन्नाथस्तस्याऽन्याः सुलभादिकाः। इत्युत्सुक इवाऽन्नेभ्यः स्नेहादिक्षुरसोऽभ्यगात् ॥५८॥
गलं कुम्भनतैरिक्षु-रसं स वितते प्रभोः। करे वरेण भावेन सदाऽऽरोहच्छिखं ददौ ॥५९॥
तदा जगज्जगारावं देवा देव्यो दिवि व्यधुः। सुवर्ण-रत्नवर्षं च चक्रुस्तस्य गृहाजिरे ॥६०॥
श्रेयांसं श्रेयसां स्थानं नृपाः सर्वेऽपि तुष्टुवुः। तापसास्तेऽभ्यधुर्नाथो भिक्षार्थी विविदे कथम् ? ॥६१॥
सोऽवदद् वीक्षिते नाथेऽस्मार्षं पूर्वं निजं भवम्। सारथिर्वज्रनाभस्य केशवोऽहं पुरा भवे ॥६२॥
स्वयंप्रभाभवात् पूर्वं संगतः स्वामिना समम्। अष्टौ भवा अमुं यावद्-उत्पन्नाः स्नेहबन्धतः ॥६३॥
इति श्रुत्वा नृपा हृष्टास्तापसाश्चाशिषं ददुः। जय त्वं दानिनां धुर्य! जय धीरशिरोमणे! ॥६४॥
श्रीनाभेयकराऽऽलवालवलये वर्षात् प्ररूढः पुरा, कृत्वा गेहजनस्य संमदमथोऽशुष्यन् स दानद्रुमः।
संसिच्येक्षुरसैः कृतो यतिमुदे येनाऽतिनव्यच्छविः, श्रेयांसः स नरोत्तमो विजयतां दानैकवीरश्चिरम् ॥६५॥
तदारभ्य जने जाते पुण्यर्नपुण्यतत्परे। विहरन् भगवान् भिक्षां यथाकालं स लेभिवान् ॥६६॥
विदधे पौरणां यत्र स्वामी तत्र स राजसूः। व्यधापयन्मणीपीठ-मन्यांह्रिस्पर्शरक्षकः ॥६७॥
साक्षादेतौ प्रभोरंह्री इति ध्यायन् स पादुके। विधाय तत्राऽनुप्रातः पूजां भुजानिजोऽकरोत् ॥६८॥
श्रेयांसमिति कुर्वन्तं वीक्ष्याऽन्योऽपि जनोऽखिलः। प्रभुपारणस्य पृथ्व्यां कृत्वा पीठमपूपुजत् ॥६९॥

१ पु० न्यमन्त्र्य-। २ सद्-आरोहत्-शिखम्। ३ पु० भवान्। ४ पु० पारणा।

आदित्यमण्डलम्—

आदिकृद् मण्डलमिद-मित्यस्माद् वचनाच्छनैः। आदित्यमण्डलमिति श्रुतिर्जगति पप्रथे ॥७०॥

प्रभुस्तक्षशिलापुरे—

ध्यानात् कूलमनोरक्षः प्रभुस्तक्षशिलापुरे। त्यक्तक्रोधादिसंसर्गः कायोत्सर्गमदाद् वहिः ॥७१॥

बाहुबलिना वन्दनाय गतेऽपि असमागमः, तच्छिलापश्च—

उद्यानपालैर्विज्ञप्तो नृपः स्वामिसमागमम्। सायं मुदाऽयं संदध्यौ वली बाहुबली नृपः ॥७२॥
स्फूर्जत्तमोऽपवित्रायां रात्रौ यात्रौचिती नहि। प्रातस्तातस्ततो वन्द्योऽनवद्योऽयं मया नयात् ॥७३॥
निशायां स विशामीशश्चिन्तयित्वेति संस्थितः। पुरीं प्रसाधयामास चारुचन्द्रोदयादिभिः ॥७४॥
प्रातः स्नातः श्वेतवासाः श्रितश्वेतमतंगजः। उच्चैर्धृतसितच्छत्र-सितचामरवीजितः ॥७५॥
रङ्गत्तुरंगै राजन्यै राजराजि स राजितः। परीतोऽन्तःपुरीवृन्दैरनुयातः पुरीजनैः ॥७६॥
गीतैरनवगीतैश्च प्रेक्षणैः प्रीणितेक्षणैः। दत्तवित्तः स्फुरच्चित्तस्तद्वनं प्राप पावनम् ॥७७॥
यावद् गजं परित्यज्य विमुञ्चन् मणिपादुके। क्व प्रभुः क्व प्रभुश्चेति जगाद जगतीपतिः ॥७८॥
वनीपालोऽवनीपालं नत्वा तावद् व्यजिज्ञपत्। देव! देवाधिदेवो नो तिष्ठेद् भास्वति भास्वति ॥७९॥
श्रुत्वेति मूर्छितः प्राप भुवोऽङ्कमथ भूविभुः। चन्दनैः शिशिरैः नीरैः ससंज्ञो व्यलपत् शुचा ॥८०॥
हा तात! त्रिजगत्त्रातः! कथं त्रातस्त्वयाऽस्मि नो। स्वांह्रिवन्दनपुण्येन पापारेर्बलिनोऽधुना ॥८१॥

१ पु० त्यक्तः। २ स्फूर्जता तमसा अपवित्रायाम्। ३ यात्रायां औचिती। ४ पु०-सितच्छत्रम्। ५ राज्ञांराट्-राजराट्-तस्मिन् राजराजि। ६ प्रभावति सूर्ये। ७ निषेधार्थे।

वृक्षं प्रति—

स्वामिनः कृतसख्यत्वाद् वृक्षमुख्योऽसि वृक्ष ! भोः। त्वत्सदक्षस्तु नैवाऽह-मलब्धप्रभुदर्शनः ॥८२॥

इत्युक्त्वा वृक्षं स्वामिना-ऽऽश्रितपूर्वमालिङ्गति।

पृथुपुण्याऽसि हे पृथ्वि ! प्रथमस्य जिनस्य यत्। पादौ व्यूढतरौ राज्ञा-चप्रासौ शिरसाऽपि मे ॥८३॥

इत्युक्त्वा प्रभुपादपद्मयो रजः शिरसि निक्षिपति।

इत्याऽऽभीक्ष्ण्येन मूर्छन्तं मूर्छयन्तं जनानमून्। वीक्ष्य राजमृगाङ्काख्यो मन्त्री प्रोचे नरेश्वरम् ॥८४॥

राजन्! विलपनं मुक्त्वा पश्य श्रीऋषभप्रभुम्। कुत्र कुत्रेत्युदित्वाऽसौ राजा दृग्भ्यां व्यलोकयत् ॥८५॥

सचिवः प्रोचिवान् स्वामिन्! जगन्नाथोऽस्ति नो हृदि। नित्यं चित्तेस्थितं रूप-मनित्यं वीक्षतां बहिः ॥८६॥

बाहुबलिना पादभूमौ मणिपीठकरणम्—

निःशोकोऽथ नृपो नाथ-पादभूमावचीकरत्। मणिपीठं योजनोच्चं विस्तृतं पञ्चयोजनम् ॥८७॥

प्रभुः पुरिमतालके—

इत्यार्या-ऽनार्यदेशेषु भ्राम्यन् मौनी मुनीश्वरः। जनं दर्शनतः शान्तं शीतांशुरिव सोऽकरोत् ॥८८॥

व्रताद् वर्षसहस्रान्ते पुरे पुरिमतालके। तले न्यग्रोधवृक्षस्य कानने शकटानने ॥८९॥

श्यामफाल्गुनैकादश्यां त्रिरात्रं प्रतिमास्थितः। उत्तराषाढगे चन्द्रे घातिकर्मक्षयोज्ज्वलः ॥९०॥

ध्यानान्तरस्थः पूर्वाह्णे प्रथमः स जिनाधिपः। अवाप केवलज्ञानं लोका-ऽलोकावलोकदम् ॥९१॥ (विशेषकम्)

---

१ पु० राज। २ पु० चित्रस्थितं रूपमनित्यं वीक्ष्य तं बहि। ३ अचीकरत्। ४ तन्नाम्नि वने।

स्वामी सिंहासनमाश्रयत्—

यथाधिकारं देवेन्द्रैर्विहितेऽङ्घ्रिहितेच्छया। स्वामी समवसरणे सिंहासनमथाऽऽश्रयत् ॥९२॥

पितामह्या सह भरतः—

इतश्च भरतो भक्ति-भरतो जननीं पितुः। अकुण्ठोत्कुण्ठयाऽभ्येत्य तदा प्रातर्नमोऽकरोत् ॥९३॥
किमन्यैर्वीक्षितैर्वीक्ष्य नन्दनं निजनन्दनम्। नीलीचिह्ने इतीवाऽऽस्ये नेत्रे तं पश्यतो हृदि ॥९४॥
ज्यायान् पौत्रो जगन्मातः! त्वत्पादानभिवन्दते। उक्त्वेति नत्वा पुरतो निविष्टो भरतेश्वरः ९५॥
हृत्कुम्भे स्नेहसंपूर्णे दुःखाग्नितापितेऽथ सा। मुञ्चत्यश्रूणि तद्विन्दू-निवाऽगदत् सगद्गदा ॥९६॥
लीलया लालयामासु-र्यं स्वर्ललनाः पुरा। स याति तीव्रतापासु पापासु मरुभूमिषु ॥९७॥
बाल्ये दिव्यामृताहारान् इन्द्रैरभ्यर्थ्य भोजितः। स पुत्रो मे क्षुधाक्षाम-कुक्षिर्भ्रमति हा! क्षितौ ॥९८॥
न स्नानं नाऽशनं पानं यानं तस्य न चाऽऽसनम्। दुकूलं नास्ति ताम्बूलं श्रुत्वेत्यस्मि म्रिये न धिक् ॥९९॥
एकेनाऽपि सुपुत्रेण सुखी स्याद् वार्धके पिता। असौ सुतशते सत्य-प्यत्र भ्रमति दुःखितः ॥२००॥
येन स्वपुत्रमुख्यत्वे कृतो दत्त्वा निजं पदम्। मम पुत्रस्य तस्य त्वं चिन्तामपि करोषि न? ॥१॥
इत्युक्त्वा तारतारं तां रुदतीं भरतोऽवदत्। कथं सामान्यनारीव-ज्जगज्जननि! रोदिषि? ॥२॥
पुष्टज्ञानत्रयः स्वामी विलोकितजगत्त्रयः। यस्याः कुक्षाववातीर्णः सा किं शोकेन बाध्यते ॥३॥

१ जाणे गळीनां टपकां मुखे, तेने (ऋषभने) नेत्रो हृदये ज्ञ । २ क्रि ।प । ० ६

तावत्—

४ भरताय वर्धापनद्वयम्—

यमकः शमकश्चैत्य भरताय नरौ तदा ॥६॥

वैत्रिणा ज्ञापिना-चैत्य तं विज्ञापयतामुभौ। स्वामिज्ञानं च चक्रस्य प्रादुर्भूतिं नरौ तदा ॥६॥

दिष्ट्याऽद्य वर्धसे देव! कानने शकटानने। युगादिजगदीशस्य संजज्ञे केवलं महः ॥७॥

निजगाद द्वितीयस्त-मद्भुतप्रतिभं प्रभो!। चक्ररत्नं नभोरत्न-मिवाऽऽयुधगृहेऽजनि ॥८॥

८ अथो व्यचिन्तयच्चित्ते तदा भरतभूपतिः। कस्यादौ कस्य वा पश्चाद् उत्सवो मम बुध्यते? ॥९॥

आ! कृत्सो मम संदेह इन्द्र-चक्रिपदप्रदम्। पुण्यं प्रभुप्रणामात् स्यात् चक्रात् पापं तु दुस्सहम् ॥१०॥

वन्दनाय गमनम्—

राजा ध्यात्वेति दानेन तौ संतोष्य व्यसर्जयत्। आरूरुहद् गजं देवीं मरुदेवां सहात्मना ॥११॥

१२ परीतोऽन्तःपुरी-पौरैः पुण्डरीकादिभिः सुतैः। पितामहीं महीन्द्रोऽपि जगाद भरतो व्रजन् ॥१२॥

रूप्य-स्वर्ण-मणीरूप-मिन्द्रैः शालत्रयं पुरः। कृतमस्ति जनन्यत्र त्वत्पुत्रासनहेतवे ॥१३॥

पवित्रचित्रसंस्तोत्र-व्यग्रास्त्वत्पुत्रदृक्पुरः। कुर्वन्त्येते जयध्वानं चतुःषष्टिः सुरेश्वराः ॥१४॥

रम्भा-तिलोत्तमाद्याभि-र्देवीभिर्दिव्यभाषया। चतुराश्चारु चर्चर्यो गीयन्ते शृणु कौतुकात् ॥१५॥

---

१ पु० सा। यो वृषभः त्रिलोकीदैवतं स किं स्याज्जनमात्रवत्। २ पु० लोक— ।

मरुदेवा कर्णौ दत्त्वा आकर्णयति—

अमर-नर-मुकुटमणिकिरणरञ्जितपदं विमलतरचरितभरनिहतपापापदम्।
ललिततरकलितबहुविमलगुणसुन्दरं प्रथमजिनमखिलजनवृजिनहरणादरम् ॥१६॥
भरतभुवि दुरितभरतिमिररविमद्भुतं सकलकुलगुरुगुरोर्नाभिनृपतेः सुतम्।
नमत दर्शितविवेकौघमणिगणनिधिं प्रहतबहुसलिलमलकलितयुगलकविधिम् (युग्मम्) ॥१७॥

प्रथमजिनेशो विहितावेशो विपुलपरीषहवर्गम्। अहह ! विषेहे सुललितदेहे कथमिह हतसुखसर्गम् ? ॥१८॥
वर्षसहस्रं दुःखमजस्रं परिषह्याऽनिशमेव। प्रकटितसारं जगदुपकारं संप्रति कुरुषे देव ! ॥१९॥
यस्य कुलेऽमलकमलनिभेऽयं जिनवरराजमरालः। बालः कलिं किल विदधे धन्यो धन्यो नाभिनृपालः २०
स्थित्वा यस्या वपुषि जिनो जननयनामृतगात्रम्। ईदृग्रूपं किल विदधे मरुदेवा स्तुतिपात्रम् ॥२१॥
मोहाम्भोधौ युगलविधौ मज्जन्तं भुवि सर्वम्। धारयति स्म निजैर्वचनैर्वन्दे तं गतगर्वम् ॥२२॥
सुर-नर-किंनर-नागकुलान्यतिनिर्मलमामनन्ति। अस्य निपीय सुवागमृतं संसारं संसारं संसारं प्रतरन्ति ॥२३॥
सुरवर-किंनर-नाग-नरा यं युगपत् प्रणिपत्य। इह हि पिबन्ति सुवागमृतं देवं देवं देवं प्रणमामि ॥२४॥

मरुदेवया ऋषभ-वैभवो दृष्टः—

श्रुत्वेत्युद्भूतहर्षाश्रु-सुधापुरैः सुविस्तृतैः। नीलीपङ्कः क्षणाक्षिप्तः मरुदेवाऽक्षियुग्मतः ॥२५॥
प्रभोर्वाक्यप्रमोल्लासैः प्रफुल्लनयनाम्बुजा। आलोककलिताऽऽलोक्य पुत्रर्द्धिं सा व्यचिन्तयत् ॥२६॥

---

१ पु० गतवर्गम्। २ भा-प्रभा-तद्वन्ति।

तस्या एकीभावचिन्तनम्—

अये ! मदीयपुत्रस्य वैभवं भुवनाद्भुतम्। भरतस्याऽस्य हाहाऽहं वृथा दोषमदां पुरा ॥२७॥
सुताः स्युर्यावदुत्सङ्गे सुतास्तावन्निजा ध्रुवम्। एष वैभवसंयुक्तोऽ-प्यौदासीन्ययुतो मयि ॥२८॥
वदन्त्यां वत्स ! वत्सेति रुदन्त्यां मे मुदे सुतः। अयं स्ववार्तां न प्रैषी-देकदेवमुखादपि ॥२९॥
वृथा तद्दुःखिता पूर्व-महमस्य विमोहतः। यतो न कोऽपि कस्याऽपि विश्वे स्वार्थैकनिष्ठिते ॥३०॥
एवं मोहः सौख्यचौरो मनोऽस्या धर्म्यमप्यगात्। दुर्जनस्थानदानेन सतां देशान्तरो भवेत् ॥३१॥

मरुदेवासिद्धिगमनम्—

जातेऽस्याः परमेश्वर्याः परमे ब्रह्मणि स्फुटे। आत्माऽत्यजद् निजं देहं तिष्ठेद् गुप्तौ हि कः प्रभुः ॥३२॥
अत्र क्षेत्रेऽवसर्पिण्यां सिद्धस्याद्यस्य तद्वपुः। पूजयित्वाऽऽशु विबुधा निदधुर्दुग्धनीरधौ ॥३३॥

भरतशोकापगमः—ऋषभस्तुतिश्च—

अगाऽसौ भरतः सौरैरिन्द्रवाक्यैरशोकहृत्। अशोकच्छायया छन्नो विशेज्जैनेन्द्रसद्मनि ॥३४॥
समवसृतिं प्रविश्याऽसौ त्रिः परीय जिनेश्वरम्। महेन्द्रैः स महीन्द्रश्च तदा तुष्टुवतुः समम् ॥३५॥

तेन—भरतकृता ऋषभस्तुतिः—

नमो नाभेयाय प्रथमनुपमेयाय महसा भवल्लोकालोकामलतरविलोकाय सहसा।
गतामोहान्मूढं भवकुहरगूढं जनमनः प्रचक्रे यो वक्रेतरशिवपरपथस्थं विभुजिनः ॥३६॥

१ प्र० निधिषेत। २ हृत्-हृदयम्।

क. २४ ॥

अहो ! देहोऽप्यंहोवसतिरिह नानापरिभव–व्यथाकारी मान्यः स्तव–नमनतो मे समभवत् ।
सितिः पङ्कः पङ्केरुहनिवहतः किं न वहति, प्रसिद्धिं वा स्वर्णात् किल मलगणो जन्यजनिताम् ॥३७॥
मनो हन्तु हन्त ! स्फुटमसि सुविद्वांस्यपि जगत्–मनांसि त्वय्येवाऽहमहमिकया यान्ति तदहो ! ।
अपूर्वं सौभाग्यं किमिदमथवा संसदि तव, प्रभो ! स्निह्यन्त्येते भुजग–नकुलाद्या अपि मिथः ॥३८॥
जगद्वन्द्य ! स्वामिन् ! यदि तव मता सर्वसमता, तदंहः किं हंसि प्रमदयति चेतांसि किमु वा ।
विदूरे संसारं शिवसुखमदूरे च कुरुषे, वितर्कः को वाऽसाऽवनवगत ! तुभ्यं जिन ! नमः ॥३९॥
गुणानां निर्णाशं विषयसुखविक्षेपमखिलं, कलत्रा–ऽपत्यादिस्वजनविरहं देव ! यतिनाम् ।
भवान् यच्छन् यच्छत्यलमतुलसौख्यं स्थिरतरं, न विज्ञः सर्वज्ञ ! त्वमिव सुखदाने त्रिजगति ॥४०॥
स्फुरत्केन्द्रत्वेन त्वदमलमुखश्वेतरुचिना, प्रभो ! दृष्टे जीवे सुकृतधनगेहस्थितिभृति ।
अभूच्चित्ते लग्ने त्वयि मम महानन्दजननं, तमःक्रोडो वक्रोऽपि हि मयि न वक्रो भवति तत् ॥४१॥
विभो ! भव्यव्यूहं विभव ! विभवस्थं स्थिरविभ !, वृषाङ्कत्वे तिष्ठन्नपमलवृषाङ्कत्वसहितम् ।
नमस्कार्यैनं निजपदगतं भक्तिभरतः, करोषीति स्थाने जिन ! निजपदेऽप्यक्षरमये ॥४२॥
प्रसिद्धां ते स्वामिन् ! युगलविधिविच्छेदपरतां, यथा सिद्धान्तेऽमी अभिदधति दक्षाः खलु तथा ।
अहं व्यक्तं मन्ये सुखमसुखमात्मीयमितरत्, रिपुर्मित्रं चेति प्रबलयुगलोन्मूलनमलम् ॥४३॥

---

१ हन्ता घातकः । २ संसदि सभायाम् । ३ अंहः पापम् । ४ हंसि घातं करोषि । ५ असौ अनवगत ! । ६ श्वेतरुचिः–चन्द्रः । ७ क्रोडो वराहः । ८ अत्र श्लोके वृषभ–शब्दगतानां वृ–ष–भ–इति–अक्षरत्रयाणां पादानुक्रमपूर्वमर्थः सूचितः ।

ह्रदम्भोधेर्जज्ञेऽसमशम-समत्वाऽम्बुलहरी-परीता त्वद्वाक्यामृतममर-तिर्यग्-नृषु सदा।
समं सौख्यं मोक्षे जनकमनु जन्यस्य हि गुणः ॥४४॥
समं स्वादं दत्ते सदसि धनिनामप्यधनिनां, ददौ गर्भावाप्तेरनृतममरत्वं च मरुताम्।
स्वयं व्यर्थं साक्षादमृतममृतांशुक्षयकृते, प्रदत्ते गर्भादिव्यथनविरतां तामुमरताम् ॥४५॥
वचः सत्यं तेऽर्थैरमृतमिह पीतं शुचि नृणां, द्वयोरन्यद् वाञ्छन् परिहृतमनास्त्वं जिनवर!।
अपुण्ये पुण्ये वा जगति मनसः संगतिरिति, चरति विरतिस्थेति तव गौः ॥४६॥
अनित्ये नित्ये वा भवति हि नृणां प्रेरणमति-रनेकान्ते कान्ते चरति विरतिस्थेति तव गौः ॥४६॥
विना युग्यं यातो जिन! गतिमगम्यां त्वदितरै-र्विना सन्नाहं त्वं स्मररिपुशराणामविषयः।
असंख्यान्निःसंख्यं प्रहरसि तमोऽरींश्च भविनां, महेलाहीनोऽपि स्थिरमहिम-हेलासुललितः ॥४७॥
न नेत्रैर्ज्ञेयो मिलति सह नान्येन भुवने, न मेयो वाक्यैः सन्मतिभिरुपमेयो न च विभो!।
अयेन्नार्थापत्तिं समतृणमणेऽभावमपि नो, प्रमाणस्थैः पूज्य! प्रमितिमयते ते न महिमा ॥४८॥
वचः शुद्धं बुद्धेर्ननु मनसि जाता भवति सा, मनोऽणु व्यामूढं त्वमनणुगुणालंकृततनुः।
मनोमुक्तो दूरं ननु मनसिजाऽगोचररुचे!, चिरं विश्वे विश्वेश्वर! जय जयद्वागविषय! ॥४९॥

---

१ गौः-वाणी। २ युग्यं-शकटम्। ३ सन्नाहं-कवचम्। ४ पु० नास्ति। ५ निःसंख्यम्-असंग्रामम्। ६ महेला-स्त्री। ७ महिम्नः हेला-महिम-हेला। ८ प्रत्यक्षाऽविषयः। ९ अन्येन संमेलाऽभावाद् व्याप्तेरविषयः-अनुमानातीतः। १० आगमाविषयः। ११ उपमानाऽविषयः। १२ अर्थापत्तेरविषयः। १३ हे समतृणमणे!। १४ अभावाऽविषयः। १५ प्रमितिम् अयते-गच्छति। १६ पु० नास्ति। १७ जयद्वाग्!।

इत्थं प्रथमतीर्थेशं प्रथमार्थकिरा गिरा। नुत्वा नत्वाऽनु देवेन्द्रं भरतो न्यविशत् पुरः ॥५०॥
आयोजनविसर्पिण्या सर्वभाषानुरूपया। गिराऽमृतगिराऽकार्षीद् देशनां क्लेशनाशिनीम् ॥५१॥

श्रीऋषभदेशना-तथाहि—

पापारीन् घ्नन्ति लब्ध्वा मनुजतनुहयं येऽथ तेभ्यः प्रदत्ते, देवेन्द्रत्वादिकेभान् सुकृतनरपतिर्नित्यमारोहणाय।
येतु दुघ्नन्त्यमुष्मै कुचरितनिरतास्तान् खराभेषु दीने-ष्वाऽऽरोप्याऽङ्गेषु जीवान् भ्रमयति स भवं पीडयन्नुग्रदुःखैः॥
निर्मोहत्वयुतैर्धर्मः शर्मदः सेव्यतां ततः। यश्च कामा-ऽर्थ-मोक्षाणां जनकत्वं श्रयत्यहो ! ॥५३॥

ऋषभपुत्र-पौत्रादिप्रव्रज्या—

श्रुत्वेति निर्मलां धर्मदेशनां देश-न्नं-ऽङ्गनाः[1]। सम्यक्त्वं श्रावकत्वं च यतित्वं केऽपि केऽप्यधुः ॥५४॥
पुत्रा ऋषभसेनाद्यास्तदा पञ्चशतीमिताः। सप्त शतानि नप्तारो भरतस्य प्रवव्रजुः ॥५५॥

आद्यया देशनया चतुर्विधसंघः—

ब्राह्मी व्रतं प्रपेदे सा श्रेयांसः श्रावकायताम्[2]। सुन्दरी श्राविकात्वं च प्रभोर्देशनयाऽऽद्यया ॥५६॥
चतुर्युतामशीतिं च गणेशान् विदधे विभुः। ऋषभसेनस्तेष्वाद्यः पुण्डरीकाऽभिधो हि यः ॥५७॥

गणधराः-द्वादशाङ्गं च—

उत्पत्ति-विगम-ध्रौव्य-मयीं लब्ध्वा पदत्रयीम्। पुण्डरीकादयश्चक्रुर्द्वादशाङ्गीमथो रयात् ॥५८॥

मरीचिप्रव्रज्या-तापसाश्च—

---

१ देशस्य ना-पुरुषः, अङ्गनाः-स्त्रियः। २ श्रावकायताम्-श्रावकस्य आयो लाभः तत्ताम्।

तस्मिन् समवसरणे मरीचिर्व्रतमाददे। ऋते कच्छ-महाकच्छौ तदा सर्वेऽपि तापसाः ॥५९॥

ऋषभविहारः-भरतगमनं च—

अथो नाथः पाथोधर इव सुधर्मांकुरविधौ, व्यहार्षीदन्यत्र प्रसृमरमहाज्ञानजलयुक्।
महं कृत्वा स्वश्रीभरत इह स श्रीभरतराट्, जगामाऽयोध्यायां प्रमदभरकर्पूरकलसः ॥६०॥

ग्रन्थकारोपसंहारः—

श्रीरत्नप्रभसूरिसूरकरतो दोषाभिषङ्गं त्यजन्, यो जाड्यस्थितिरप्यऽभूत् प्रतिदिनं प्रासाद्भुतप्रातिभः।
तेन श्रीकमलप्रभेण रचिते श्रीपुण्डरीकप्रभोः, श्रीशत्रुंजयदीपकस्य चरिते सर्गोऽयमाद्योऽभवत् ॥६१॥

इति श्रीरत्नप्रभसूरिशिष्य-आचार्य-श्रीकमलप्रभविरचिते श्रीपुण्डरीकचरिते श्रीयुगादिनाथकेवलज्ञान-
श्रीपुण्डरीकचरित्राङ्गीकरण-गणधर-पदस्थापना नाम प्रथमः सर्गः ॥

## ॥ अथ द्वितीयः सर्गः ॥

भरतः शस्त्रगृहान्तरं गतः —

अथ शस्त्रगृहान्तरं गतः किल चक्रं भरतोऽतिरङ्गतः। दशशीत्यरयुक् तदाऽनमत् सुदिनायोदितपुण्यसूर्यवत् ॥१॥
अथ हर्षितसर्वपूजनं नवनैवेद्यभरेण पूजनम्। दिवसाष्टकमाहितोत्सवं नृपतिश्चक्रपुरोऽकरोत् तदा ॥२॥

मागधदेवविजयाय भरतगमनम्—

---

१ निजलक्ष्मीसमूहेन। २ कराः-किरणाः, हस्ताश्च। ३ दोषा-रात्री, दोषश्च। ४ सहस्र-आरायुक्तम्। ५ पुरः-पुर्याः, जनः-लोकः।

गजरत्नमसौ समाश्रितः सुमुहूर्तेऽथ गृहीतमङ्गलः। अनुचक्रमवक्रमानसोऽचलदैन्द्रीं दिशमेव भूपतिः ॥३॥
हय-वर्धकि-चर्म-काकिणी-मणि-सेनान्य-ऽसि-सत्पुरोधसः। नृपमन्वगुरातपत्रयुग्-दण्डदण्डो बकुटुम्बिका अपि ॥४॥
भरतेश्वरसैनिकैर्यदा जयढक्का पुरतः प्रताडिता। हृदयानि च गह्वराण्यहो! युगपद् दध्वनुरुच्चभूभृताम् ॥५॥
ककुभो रभसोत्थदुन्दुभी-भटभेरी-हय-हस्तिशब्दितैः। बधिरा अभवंस्तदाऽति तत् प्रतिजल्पन्ति न जल्पिता अपि
जवनं पवनं विजिग्यिरे हरयश्चेह रयप्रचारिणः। तत आतपवारणं रजश्चयमुद्धृत्य सहाऽचलत् स तैः ॥७॥
अयमस्य दिनप्रतापतो दहनं मा लभतामितीव तैः। हरिभिः खुरखातरेणुभिः पिदधे प्रीतिभरात् खगो हरिः ॥८॥
अथ योजनवाहिनी शनैर्नृपतेः श्रीभरतस्य वाहिनी। सुगभीरहृदः पुरोऽम्बुधेरुपकण्ठं परिलभ्य संस्थिता ॥९॥
वरवर्धकिना विनिर्मितेष्वपरेषु प्रचुरेषु धामसु। न्यवसन्नथ सर्वसैनिका भुवमाद्वादशयोजनीं क्षणात् ॥१०॥
मणिपौषधशालिकां नृपो विहितां वर्धकिनाऽतिनिर्मलाम्। कुशलः कुशसंस्तरे स्थितः उपवासत्रयवानुवास सः ॥११॥
अथ तुर्यदिने दिनोदये नृपतिः स्नाततनुर्वराम्बरः। चतुरन्तगवीरघण्टिकं रथमस्त्रैर्भृतमारुरोह सः ॥१२॥
द्विरविं शशियुग्मसंयुतं प्रथमद्वीपमिवाऽमराचलः। भरतः कनकप्रभः स्थिरः स चतुर्घण्टरथं श्रितो बभौ ॥१३॥
सुमहाः स महारथो रथं रथनाभिद्वयसे तदाऽम्भसि। नृपतिः स्थिरसारसारथीरितरथ्यं स्वरसादसारयत् ॥१४॥
धनुरत्र धनुर्धरोद्धरो जवतोऽधिज्यमयं विधाय तत्। गुरुटङ्कृतितोऽकरोत् तदाऽखिलयादांसि रणज्जवांस्यथ ॥१५॥

---

१ उच्चभूभृतः–उत्तमनृपाः, उच्चपर्वताश्च। २ पवनः आतपवारणं रजश्चयमुद्धृत्य तैः हरिभिः अश्वैः सह अचलत्–तैर्विजितत्वात्–विजितो हि छत्रं धरति। ३ खातम्–उत्क्षिप्तम्। ४ खगः–गगनगः। ५ हरिः–सूर्यः। ६ उवास। ७ रथनाभिप्रमाणे। ८ ईरितरथ्यम्–रथ्या-मार्गः। ९ उद्धरः–उत्कृष्टो वरः। १० रणेन जवांसि वेगवन्ति–चपलानि–त्रस्तानि।

अथ मागधनिर्जरं प्रति जलधौ द्वादशयोजनस्थितम्। निजनामसुवर्णशोभितं विससर्जाऽऽशु सुवर्णपत्रिणम्॥
रभसान्नभसा ययौ शरो गुरुसूत्कारपरः श्रमादिव। सुरसंसदि सुस्थितो मुखं भुवि निक्षिप्य तलं गमीव सः॥
स सुरः सुशरं पुरस्थितं सहसा प्रेक्ष्य रुषाऽरुणोऽवदत्। मम संसदि कोऽमुमक्षिपन्निजजीवोद्वहने विखिन्नहृत्॥
फणिनाथफणामणीगणैर्मुकुटं कोऽत्र चिकीर्षुरुत्कटः ?। क इहाऽमरदन्तिदन्ततो निजजायाकरकङ्कणं चिकीः ?॥
इति गर्वयुतः सुपर्वराड् निजपाणौ परिगृह्य पत्रिणम्। इह पुङ्खगताक्षरावलिं विमलां वाचयति स्म विस्मयात्॥
भरतः प्रथमोऽथ चक्रिराड् दिशति श्रीऋषभाङ्गभूरिति। मम यच्छत दण्डमाशु भो! यदि नित्यं स्वसुखैषिणः सुराः

मागधदेवजयः—

इति वीक्ष्य सुरोऽक्षराण्यसौ प्रशमी श्राद्ध इवाऽऽगमेक्षणात्।
मणिभिः कुसुमैरिवोदधेः सुधियाऽऽनर्च नृदेवमेत्य तम् ॥२२॥

भरताङ्घ्रिपुरो विमुच्य तत् मणिसारं सह तेन पत्रिणा। विहिताञ्जलिराह भक्तिमान् स जयारावपुरस्सरं सुरः॥
करतः कुलिशं हरेरिव तपसस्तेज इवाऽऽस्यतो यतेः। शपनं च सतीमुखादिव सहते को धनुषः शरं तव ? ॥२४॥
अहमस्मि तवैव सेवको भवतां भूपनिवेशिताऽधुना। सततं मयि तत् प्रसन्नता करणीया निजयाऽऽज्ञया प्रभो! ॥
इति भक्तिवचोभिरद्भुतैर्भरतः प्रीततरो विसृज्य तम्। उदधेः स्वरथं न्यवर्तयत् प्रणतिप्रान्तरुषो हि साधवः॥२६॥
स गतः कटकं विकण्टकः प्रविधायाऽऽशु नृपोऽथ पारणम्। दिवसाष्टकमुत्सवं व्यधात् प्रमदाद् मागधदैवतं प्रति ॥

---

१ निर्जरो-देवः। २ सु-वर्णाः-शोभनानि अक्षराणि। ३ गच्छतः शरस्य सररर-इति ध्वनिः सूत्कारः। ४ कर्तुमिच्छति चिकीः। ५ आगमाः-अङ्गादीनि जैनसूत्राणि। ६ आस्यम्-मुखम्। ७ प्रणतिः-प्रणामः।

वरदामपति–प्रभासकाधिपति–सिन्धुनदीविजयः—

वरदामपतिं प्रभासकाधिपतिं सिन्धुनदीं विजित्य च।स्वबलाढ्यभुजोऽथ राजतं गुरुवैताढ्यगिरिं रयोद्ययात्।२८।

वैताढ्यदेवविजयः—

४ गिरिदक्षिणपक्षतो निजं कटकं चक्रपतिर्निवेश्य सः। त्रिरुपोष्य चकर्ष हर्षतः किल वैताढ्यकुमारनिर्जरम्॥२९॥
स सुरश्चलितासनः पुरः समुपेत्याद्भुतरत्नढौकनम्।प्रविधाय निधाय मस्तके भरताज्ञां च यथाऽऽगतं ययौ ॥
कृतपारणकोऽष्टवासरं विरचय्योत्सवमद्भुतं नृपः। ललितः किल लीलयाऽलपद् निजसेनाधिपरत्नमुत्सुकः॥३१॥

रजताचलसिन्धुनिम्नगातटयुग्मसाधनाय सेनाधिपस्य आज्ञाकरणम्—

८ रजताचलसिन्धुनिम्नगातटयुग्मं सकलं तु दक्षिणम्। स्वसुखेन सखे! सुखेन भोः! त्वरितं साधय साधनोद्यतः ॥

सिन्धुनदीपरतीरस्थतुरुष्काणां विजयः—

अथ सिन्धुनदीं स सैन्यपः सहसोत्तीर्य च चर्मसेतुना। प्रविजित्य तुरुष्कभूपतीनिह तरण्डधनान्युपानयत्॥३३॥

तमिस्रागुहा–प्रकाशनम्—

१२ पुनराप्य वचोऽत्र चक्रिणः स तमिस्राख्यगुहाप्रकाशने। त्रिरुपोष्य दिनाष्टकोत्सवं कृतमालाय सुराय निर्ममे३४
हयरत्नगतस्त्रिधाऽऽहते दृढदण्डेन गुहाकपाटके। विरलीकृतवान् समाधिना मद–रोषाविव निर्वृतिं गमी॥३५॥

कृतमालसुरविजयः—

तदुपेत्य विभो! न्यवेदयत् प्रतिरुद्धस्तुरगे प्रतापगे। मणिमस्य निवेश्य कुम्भके गजरूढः स चचाल चक्रिराट् ३६

१ रयो–वेगः। २ उपोष्य–उपवासं कृत्वा। ३ आकृष्टवान्। ४ तुरुष्कभूपतीन्–तुरुष्क–तुर्क–इति ख्यातान् भूपतीन्। ५ गत्वा।

स तमिस्रगुहां नरोत्तमो मणिभासा वितमिस्रतां नयन्।स-कैलैरनुगैः सहोडुभिर्गगने चन्द्र इवाऽविशत् तदा॥
अथ काकिणिमण्डलान्यसौ फिल पञ्चाशतमेककं विना। अनुगध्वंजिनीप्रकाशने जननाथोऽजनयद् गजस्थितः॥

अनिम्नगा-निम्नगा-नद्यौ—

दृपदामपि सुप्रतारिकामनिम्नगां सरितं व्यतीयिवान्। वरवर्धकिसेतुबन्धनात् स निम्नगामपि तूलमज्जनाम्॥
स्वयमुद्घटितादथोत्तरात् स गुहा-द्वारत आशु निर्गतः। प्रचचाल च चक्रपृष्ठगो भरतार्धं प्रविजेतुमुत्तरम्॥४०॥

भिल्लभटाः संतापसुनामकाः—

नृपसैन्यमदृष्टपूर्विणः किल संतापसुनामकास्तदा। प्रविलोक्य धृताखरायुधा विदधुर्युद्धमथाग्रयोधृभिः॥४१॥
अथ भिल्लभटैः पराङ्मुखे कटके चक्रपतेरयात् कृते। हयरत्नगतोऽथ सैन्यपः स दधावे भृश-तज्जिघांसया॥४२॥

भिल्लानां देवाराधनम्—

इमकेन निराकृताश्च ते सुकृतेनेव सुविघ्नराशयः। विविधैर्निजदेहतापनैः कुलदेवानधिराद्धुमुद्ययुः॥४३॥
अतिसेवनतः प्रतोपिता द्रुतमेत्याऽऽदमुखाः सुरा जगुः। कुरुतेति किमङ्गतापनं ननु वत्सा! बहुलङ्घनानि च॥
न नरैर्न सुरैर्न किन्नरैरसुरैर्नैव महोरगैरपि। निजपूर्वभवोत्थपुण्यतः प्रबलश्चक्रविभुर्विजीयते॥४५॥
पुनरात्मबलानुमानतो भवदाराधनतोषिता वयम्। इह विघ्नमहो महत्तरं ननु वत्साः! प्रविदध्महेऽधुना४६

१ कलाभिः सहितैः सकलैः, समग्रैर्वा। २ अनुगा ध्वजिनि-सेना। ३ पाषाणानामपि। ४ तूलमपि यत्र मज्जति-ब्रुडति-तूलमिति-'रू'। ५ चक्रस्य पृष्ठं गच्छति इति। ६ न दृष्टं पूर्वं यैस्ते। ७ भृशं तेषां हन्तुमिच्छया। ८ कुरुत-इति। ९ भवताम् आराधनं भवदाराधनम्।

चक्रिपराजयाय तैः कृता मुशलधारा वृष्टिः—

इति मेघमुखा निगद्य ते प्रविकृत्याऽम्बुघनान् घनाघनान्। ववृषुर्मुशलप्रमाणकैर्बहुधारानिवहैरथाऽम्बरात्॥४७॥
ध्वजिनीजनकण्ठदघ्नतां गतमालोक्य जलं नृपोत्तमः। स्वकरेण चकार चर्म तत् क्षणतो द्वादशयोजनस्थितम्॥
अधिरोप्य निजां चमूमिह प्रततं छत्रमपि न्यधात् तथा। जनदृष्टिविलोकहेतवे किल दण्डेऽस्य मणिं न्यवीविशत्॥
इह धान्यचयं कुटुम्बिना निहतं रूढमथो विपाचितम्। विविधं प्रतिवासरं रसाद् बुभुजे सैन्यमदैन्यमानसम्॥
इति चर्म-सितातपत्रयोः पुटमालोक्य जलान्तरे तरत्। जगदे जगदेकचित्रदं सुगुरुब्रह्म्यमिदं महाण्डकम्॥२१॥
अथ चक्रपतिः स सप्तमे दिवसे चिन्तितवानिदं हृदा। विहिता अहिता ममाऽहितैः कथमेतेऽम्बुधराः सुदुर्धराः।
इति चिन्तनतोऽस्य चक्रिणस्तनुरक्षासुविचक्षणैः सदा। किल षोडशभिः सहस्रकैरमरैर्मेघमुखा बभाषिरे॥२३
इह चक्रिणि देवता! नृणां भरतक्षेत्रनिवासिनां प्रभौ। प्रकुरुध्वमतीवदुष्टतां तदहो! मूर्खतरा मुमूर्षवः॥२४॥
इति यक्षवचोभिरुद्धतैर्ययुरम्भोदमुखा भयाकुलाः। प्रततापघनौघनिर्गतो रविरुच्चैर्भरतप्रतापवत्॥२५॥
भरतस्य पुरः कनिष्ठिकाङ्गुलिदानात् निजमूर्धरक्षणम्। विदधुश्चतुरास्तुरुष्ककाः क्षितिभोगं तृणचर्वणादपि।२६

हिमालयगमनम्—

अथ सिन्धुतटं तदीतरं निजसेनापतिना विजित्य सः। प्रसरन्महिमा हिमालयं लघुमेघोऽगमदुग्रमाऽऽलयः॥२७
शिबिरं विनिवेश्य दक्षिणे स नितम्बेऽस्य गिरेः कृताष्टमः। अधिरुह्य रथं विसृष्टवान् निजबाणं हिमवत्कुमारके॥

१ अम्बुघनान्—जलपूर्णान् मेघान्। २ सेनाजनकण्ठ-प्रमाणताम्। ३ घनौघः—मेघसमूहः। ४ उग्ररूपाया मायाः लक्ष्म्या आलयः—गृहम्—स्थानम्। ५ सेनास्थानम्।

अमरः प्रतिगृह्य तं शरं विकयुक्-योजनसप्ततौ स्थितः। स तदक्षरवीक्षणाच्छमी प्रणनामैत्य नृपं सढौकनः ॥५९॥
प्रविसृज्य सुरं स आर्षभिर्निजनामर्षभकूटपर्वते। प्रतिलिख्य च काकिणीमुखाद् विदधेऽष्टाहमहं महामहाः ॥
रजताचलगमनम्—
अथ दिग्विजयान्निवृत्तवान् महसाऽनुत्तर एष उत्तरे। कटके रजताचलस्य तत् कटकं प्राटयदस्तकण्टकः ॥६१॥
विनमि-नमिभ्यां सह संग्रामः—
विनमिं च नमिं खगेश्वरं विजिगीषुर्जगतीपतिस्ततः। अहृतप्रसरं स रंहसा स्वशरं वीरवरो व्यसर्जयत् ॥६२॥
नृपनायकसायकेक्षणाद् गुरुरोषारुणितेक्षणौ क्षणात्। गगने गगनेचराधमू परिगृह्याऽऽययतुर्निजाश्रमूः ॥६३॥
कटकानि रुपोत्कटान्यथ दिवि कौ द्वादशवत्सरीं मिथः। शर-तोमर-भल्लि-शक्तिभिः प्रयिर्जन्दृढबाहुशक्तिभिः
भरतो भरतो भुजौजसां रथमारुह्य महारथस्ततः दृढसंगरबद्धसंगरः स धनुःसंग-रतोऽजनि स्वयम् ॥६५॥
विनमि-नम्योः पराजयः—
खचरानपि तान् विपक्षकान् प्रविचार्यैव धनुर्धरोत्तमः। विदधे स्वशरैः रयेरितैरखिलानुद्गतपक्षकान् क्षणात् ६६
भरतार्शुगवेगतो दले दलिते व्योम्नि घनप्रभो ह्यसौ। अचिरद्युतितां समाश्रितः खचराधीश्वरयोः प्रतापकः ६७
अथ शीततरान्तरौ रयात् कुपितं सान्त्वयितुं तमार्षभिम्। विनमिश्च नमिः प्रणम्य तं चतुरौ प्रोचतुरोषितीक्षणौ

---

१ ७२ योजनानि। २ शमी-नष्टगर्वः-शान्तः। ३ दिवि-गगने, कौ-भूमौ। ४ प्रहारं चक्रुः। ५ भुजबलानां भरतः-समूहतः। ६ संगरो-युद्धम्। ७ संगरः-प्रतिज्ञा। ८ धनुःसंगे रतः। ९ रयेण-वेगेन ईरितैः। १० आशुगाः-बाणाः। ११ शीततरम्-आन्तरं हृदयं ययोस्तौ। १२ प्रोचतुः ओषितीक्षणौ।

अनभिज्ञतया यदाऽऽवयोरभवल्लॅलितं प्रभो! त्वयि। अधुना सकलं सहस्व तत् किल सर्वसहेयाऽसि संश्रितः॥

ताभ्यां धनढौकनम्, पुत्रीदानं च—

नमिरार्षभये मणीगणं विदधे प्रीतिभरेण ढौकनम्। विनमिः स्वसुतामदान्मुदा स सुभद्रां ललनाशिरोमणिम्॥
प्रमदादथ चक्रधारिणा प्रविसृष्टौ स्वपुरं समागतौ। इति चारुविचारमादराद्विदधाते स्थिरमानसाविमौ॥७१॥

नमि-विनम्योर्वैराग्यपूर्वं व्रतादानम्—

ऋषभप्रभुपुत्रमादिमं भरतेशं स्वगृहे समागतम्। न हि सत्कृताऽतिमोहतो ह! ह! हाऽऽवामुचितेन वञ्चितौ॥
ऋषभप्रभुपादसेवनादिदमासं गुरुराज्यमीदृशम्। समरोऽसमरोषतः कृतो धिगहो! तत् प्रथमाङ्गजन्मनः॥७२॥
इह राज्यमदान्ध्यतो ध्रुवं विहितो द्वादशवार्षिको रणः। इति पापनिराचिकीर्षया करवाव प्रभुसंनिधौ व्रतम्॥
इति चारु विचार्य चेतसा तनयौ ज्ञातनयौ निजे पदे। अभिषिच्य विभोः कराद् व्रतं बहुविद्याधरसंयुतौ श्रितौ॥

भरतस्य सिन्धुतटवने रमणम्—

अथ चक्रधरो वसुंधरावलयं निर्विलयं जयन्नयम्। सुरसिन्धुतटीगतं स्फुटीकृतनानाद्रुममाप काननम्॥७३॥
सकलां सकलर्तुभिः सदा स सदाकार-महीरुहावलिम्। अवलोक्य वनीमथाऽवनीरमणोऽयं रमणोद्यतोऽजनि
स्थपतिः स्वपतिस्थितेः कृते मणिभिर्निर्मितसप्तभूमिकम्। विदधे क्षुदधेरिवोद्गतं विमलं मन्दिरमिन्दिराश्रयम्॥

---

१ सर्वसहा-पृथ्वी। २ सत्पूर्वस्य कृ-धातोः परोक्षे अस्मत्पुरुषद्विवचनम्। ३ आवाम्। ४ समरो-युद्धम्। ५ असमरोषः-अत्यन्तरोषः। ६ रणः संग्रामः। ७ निराकर्तुमिच्छया। ८ पञ्चम्या अस्मत्पुरुषद्विवचनं कृ-धातोः। ९ नीतिज्ञौ। १० निर्विघ्नम्। ११ शोभनाकारा। १२ वर्धकिः। १३ इन्दिरा-लक्ष्मीः।

रथंघलेऽथ यथास्थिति स्थिते तरलोत्तुङ्गतुरङ्गसंगतः । तरुराजिविलोकनाय स प्रचचालाऽखिललोकनायकः ॥७९॥
भरतोऽथ रतिप्रियप्रभः स सुभद्राद्यवरोधसंयुतः । प्रविलोकितदिव्यकाननः समभूद् विस्मयतः स्मितानन:॥८०॥

बन्दिकृतं द्रुमसंघ–वर्णनम्—

अथ बन्दिवरः प्रियंवदः प्रभुचित्तं परिभाव्य सस्पृहम् । रुचिरं रुचिरञ्जिताम्बरं द्रुमसंघं स जवादवर्णयत् ॥८१॥
विजयस्व विभो! पृथग् भुवः प्रविभागे सकलर्तुभिः स्थितैः। वनमद्भुतपड्रसं नय-प्रणय! त्वं नय नेत्रभोज्यताम् ॥

वर्षावर्णनम्—

इहदिव्यविभावतो विभो गगनेऽत्र स्थिरनेत्रचित्रदम् । शुभगं शुभगन्धतः शुचि प्रविमुञ्चन्ति पयः पयोमुचः॥
नयनप्रमदप्रदायिनः पुरतः पश्य विवेककेकिनः । सुमनोहरनृत्यकृत्यतो दयितानां दयितं वितन्वतः ॥८४॥
नृप! केऽपि कला–कलापिनां सुकलाऽऽलापवतीं विलोक्य ताम्। ललितेक्षणवीक्षणात् प्रिया-हृदयं ये मदयन्ति हेलया
रवि–वह्निमहोविनाशके जलदेऽप्यात्तपदा महस्विनी । अहमस्मि तडिल्लता मदादिव नृत्यन्ती विलोकय प्रभो !
शुचि सृष्टिकरं सुशीतलं सलिलं शोषितवान् भवान् भुवः।विधुताऽशनिरम्बुदो रविं विरुणद्धीति सुकालतां वहन्
शीतं स्वादुजलं समग्रसरितां नीत्वाऽथ वारांनिधि–निम्नं क्षारमपेयमेव कुरुते मेघो विनष्टं तु तत् ।
कृत्वा प्रोच्चतरं रसेन रुचिरं विश्वोपकारे नयेत्–जीयासुः सुविवेकिनो धृतधनैः किं निर्विवेकैर्जनैः ॥८८॥

१ निजसैन्ये । २ तुरंगा अश्वाः । ३ अवरोधः–अन्तःपुरम् । ४ रुच्या कान्त्या रञ्जितम्–अम्बरं गगनं येन द्रुमसंघेन–अत्युच्चो द्रुमगणः । ५ नेत्रेण भोज्यताम्–भक्ष्यतां नय–नयनेन पश्य । ६ दिव्यविभावः–दिव्यशक्तिः । ७ विशेषेण भान्ति–इति ८ स्थिरनेत्राः चातकाः–इति प्रायः । ९ द्वितीयाबहुवचनम् । १० प्रियम् । ११ कला–कलापवताम् ।

रस सुरानुभावजाम्बुदपात्रात् परिरीय मारुतः। सुमेमालितमालतीलता-ऽलनाऽऽलिङ्गनतः प्रमोदते॥८९॥
सुविकासितसत्कदम्बिका जगतो जीवनदानतत्परा।तव दृष्टिसमा सुवृष्टिरप्ययतात् पार्थिव! पार्थिवं जनम्॥९०

शरत्प्रशंसा—

घनकालमथाऽतिभूयसः समयात् संवलितोऽनुभूय सः। स्फुटमुचरति प्रियंवदः शरदि प्रोचरंति प्रियंवदे ॥९१॥
सितपद्ममुखी सितेतरोत्पलनेत्रा धवलाभ्रवस्त्रयुक्। कलिताऽङ्गुनबन्धुजीवकप्रसवोद्भासिकुसुम्भचीवरा॥९२
कुसुमायिततारका शिरोमणिमौलीयितशीतदीधितिः। गुरुमौक्तिकहारवल्लरीयितसुव्योमगहंसमालिका॥९३॥
क्रमुकाङ्कितनागवल्लिजच्छदभान् शोणमुखान् शुकोत्तमान्।शरदक्षतशालिहस्तके दधती माङ्गलिकाय तेऽस्त्वसौ
(विशेषकम्) ॥९४॥

सरसी सुषुवेऽम्बुजं सुतं विमलाऽस्थात् श्वपथे च निम्नगा। स चकोरचयेऽशनं ददावपि दोषाकर उद्गते मुनौ।
स्वविभां शरदुद्भवां शशी स सुभद्रावदनाय दत्तवान्। विदधाति चकोरगौरवं तदिदं देव! सुराजवल्लभम्॥९६
इति बन्दिवरः शशंस तां शरदं स प्रशशंस च प्रभुः। विमलं जगतोऽपि जीवनं कुरुते यः स न किं प्रशस्यते?॥
अथ बन्दिवराय तत्क्षणं निजरत्नाभरणानि देहतः। प्रददौ प्रमदोचितीयुता भरताधीश्वरजीवितेश्वरी ॥९८॥

हेमन्तऋतुप्रवर्णनम्—

---

१ सुमेन कुसुमेन मालिता राजिता। २ सप्तमी-एकवचनम्। ३ शीता दीधितयः किरणा यस्य-चन्द्रः। ४ समस्तमेतत्। ५ क्रमुकं-पूगफलम्। ६ छदैः पक्षैर्भान्ति छदभाः। ७ हस्तको हस्तः, हस्तनक्षत्रं च-शरदि तस्यागमनात्। ८ सरोवरम्। ९ श्वपथः-गगनम्-गम्यते। १० मुनौ-अगस्तौ उदिते।

स ससार ससारहृन्महीं–मिहिकांशुं मिहिकाङ्कितां महीम्। वदति स्म ततः प्रियंवदं स्थिरहेमन्तकतुप्रवर्णनाम्॥
हिमैरो चिरतिमतापनादिह निर्दय कथा सरोजिनीम्। हिममग्लपयद् विभाविभुं समये बन्धुरिपुर्निहन्यते॥
सवितारमहो! हिमोऽयमेन निजाशां श्रयिणं ररक्ष यत्। मुखमप्यवलोकतेऽस्य तद् न हि जीवन् जगतीजनोऽखिलः
४ महसामधिपो यथायथा जडतामाप हिमात् तथातथा। जगतो हृदयप्रकम्पना दोषा अपि गुरुतामगुर्भृशम् ॥२॥
न गुरुर्गगने गुरुर्गुरुस्त्वगुरुर्यः किल दुःखतोऽसितः। दहने दहति स्वदेहमप्यऽहिमांशौ महिमच्युते हिमात्॥
पिदधे खगचित्रभानुमप्यऽहहैनं पिदधातु मा हिमम्। करयुग्ममतो हुताशनो–परि लोकः सकलोऽपि यच्छति॥
वदतीति तदा प्रियंवदे नृपतिः प्राह सुधूम एष कः। अभिमत्य सविस्मयस्तु स न्यगदद् भारतभूपतिं पुनः॥
८ कुतुकिन्! इह दिव्यकुण्डकत्रितये धूपचयोऽसितो गुरुः। घनसार इति श्रयं पतद् वियतः पश्य सुरप्रभावतः॥
असति द्रुमवह्निजे सुमे जननाशौ सुखिनी कथं भवेत्। इति तत्सुखहेतवेऽगुरुप्रमुखा अग्निमुखे विशन्त्यमी॥

हिमतो हि मतोऽपि मे रुचां निवहोऽल्पो भवितेत्यऽवेत्य तत्।
निदधे रविरक्षयं महः त्वयि शूरे–ति निजाभिधाङ्कितम् ॥ ८ ॥

---

१२ १ सारसहितं ससारं हृद् हृदयं यस्य सः। २ मिहिकांशुश्चन्द्रः। ३ मिहिका–धूमिका–प्रातः काले पतद् हिमम्। ४ हिमरोचिः–चन्द्रः। ५ विभाविभुं- सूर्यम्। ६ सवितारं–सूर्यम्। ७ आशा–दिशा अपि। ८ सूर्यः। ९ आम–माप। १० दोषा–रात्रयः–अपि। ११ बृहस्पतिः। १२ अगुरुधूपविशेषः। १३ सूर्ये। १४ शीतकाले हि जना अग्निशकटिका अभितः शीतनिवारणाय करयुगं स्थापयन्ति, तल्लक्ष्यीकृत्य कविना एतद् उदप्रेक्षि सुरसम्–खगं गगनगम्–चित्रभानुं सूर्यम्। १५ जननासा–श–सयोरैक्यात्। १६ अगुरुप्रभृतयो धूपविशेषाः। १७ त्वयि भरतसम्राजि 'शूर' इति निजाभिधाम्।

इति बन्दिवराय वादिने वरवीरेषु मणिः शिरोमणिम्। भरताधिपतिः प्रदत्तवान् निजमुष्णांशुसमानतेजसम्॥
प्रणते शिशिराशयः क्षितिं स नरेशः शिशिराश्रयां श्रितः। जगदे जगदेकपालनः सुविवेकाद् मुदितेन बन्दिना॥
द्रुमपत्रनिपातनाशुगो रचयन् कौ-रवतीव्रतामपि। नरराज! रराज फाल्गुनः स्फुटवैरोचनधामघृष्छिदः ॥११॥
हरिदश्वहरित्प्रभा द्रुषु स्फुटपत्रं दयितामुखेन्दुरुक्। कुसुमं च तवाङ्गपिङ्गतां शिशिरोऽप्यातनुते फलोच्चयम् ॥

वसन्तवर्णना—

चलिते तदिलांतलादिलाधिपतौ चारु वसन्तवर्णनाम्। अथ मागध एष वार्गधःकृतपीयूषरसोऽगिरद् गिरः ॥
मुकुलालिकुलाऽतिसंकुला वकुला भान्ति पुरो धराधिप!। किमु मौक्तिकनीलरत्नजाः स्मरभूमीश्वरकोशराशयः
अलीनां पटले तमोऽन्तरे ज्वलिताऽग्नाविव चम्पकोत्करे। स्मर एष स योगिनां गुरुर्हुतवान् यद्विरहार्तहृत्तिलान्
त्रिजगत्प्रिगतामदृश्यतां सुतनूलामपि वर्णनीयताम्। ललितां जगदाद्यहेतुतां लभतां किं न सतां मतां स ताम् ॥
( युग्मम्. ) १६॥

मुकुरोत्थपरागपिञ्जरामलिमालां वरमालिकामिव। ऋतुराजरमाऽध्यरोपयत् सहकारेऽत्र पिकद्विजोदितात् ॥

१ उष्णांशुः-सूर्यः। २ क्षतिं कृत्वा प्रणते नम्रे जने यो नरेशः शिशिराशयः शीतलाभिप्रायः। पुनश्च शिशिराश्रयां शीतलसमयां स्थितिं स्थितः-इति गम्यते। ३ कौ पृथिव्याम्, रवतीव्रताम्-शब्दतीव्रताम्-खडखडाटम्, कौरवाणां तीव्रतां च। ४ फाल्गुनो मासः, अर्जुनश्च। ५ वैरोचनः-सूर्यः। ६ हरिदश्वः-सूर्यः। ७ तद् इलातलात्। ८ वाचा अधः कृतः पीयूषरसः येन सः। ९ योगवताम्-संयोगिनाम्। १० पुरोहितः। ११ स्मरः। १२ आम्रवृक्षे। १३ मन्यत्राऽपि द्विजोदितात् ब्राह्मणोदितात् वरमाकारोपणम्, अत्राऽपि द्विजोदितात्-पक्षिवचनात्।

अलिगानमनंकुला कृतद्विजलोपाऽद्भुतमञ्जरीध्वजा । मधुरा मधुराजधानिका पुरतो भाति रसालमालिका ॥
ददते सुवर्णवत्फले कलकण्ठैः सुमनोलिहैर्वृतः । तरुराजिषु राजतां वहन् सहकारो नरराज ! राजताम् ॥
शिशिरं परिपीय यद् भृशं भुवि वृद्धोऽपि वयस्यतद्वनम् । द्विविधं सुरभीकरोत्यसौ सुकृतज्ञो नृप ! पाटला-तरुः ॥
फणिवल्लिवनं विलोकयतां कृतकर्पूरसुवेगवेष्टनम् । सुखयेद् गुणदोग्यताजुषामपि संगो नयनानि धीमताम् ॥
पवनः परिपूय निर्मलं घनकर्पूरपरागमम्बरे । सुविधृत्य धृतालि-कालिमं कुरुते चन्द्रमसुग्रतेजसम् ॥२२॥
नयने नय नेतरत्र तां नयनेतः ! प्रति नागवल्लरीम् । वचसाऽखिलचित्तरञ्जिनीं सुरसंज्ञामपि या तु रञ्जयेत् ॥
रदनादिपरिच्छदावृतां रसनां निर्मलभारतीश्वरीम् । कुरुतां वसनान्वितामिव क्रमुकं नागलतावरञ्जनात् ॥२४॥
किल नीलदुकूलकञ्चुली रतिराशी हृदयस्य कोमला । फणिवल्लरिका स्मरप्रभोः शिरसि श्रीकरिका जयत्यसौ ॥
सुदृशां हृदयस्य मोहनं नृप ! कर्पूरतरुं पुरस्कुरु । अमुमत्र पिशाङ्गपत्रिणा प्रधृतं नागलताद्वयेन तु ॥२६॥
इतराः फणिवल्लयो वने निखिला निर्मलनीलकान्तयः । इदमत्र नवं लतायुगं शुभचामीकरचारुपत्रयुक् ॥२७॥
घनसारतरोः ससौरभं नवसौभाग्यमहो किमप्यदः । इदमीदृशवल्लरीद्वयं परिरभ्याऽस्ति रसाकुलं हि यत् २८
देव ! तव प्रियाऽऽगमे भवताऽकोप्यधुनेति निश्चितम् । वसुधा प्रियमत्र सौम्यरुक् वदतीयं वसुधाधिप ! त्वयि ॥

---

१ द्विजाः पक्षिणः । २ मधुर्वसन्तः । ३ सुमनांसि पुष्पाणि । ४ शिशिरं शीतकालजलम् । ५ मित्ररूपं तद्वनम् ।
६ फणिवल्लिः ताम्बूललता । ७ धृतः अलीनां भ्रमराणां कालिमा यत्र परागे । ८ नागवल्लरीम्-ताम्बूलवल्लीम् । ९ सुरसंज्ञाम्-अनुस्वारस्तु काव्यवैचित्र्यार्थम्-इति गम्यते । १० वसनम्-वस्त्रम् । ११ फणिवल्लरिका-ताम्बूललता । १२ मानमूचकचिह्नविशेषः । १३ नावगतोऽयं यथार्थम् । १४ तव निमित्तम् ।

नरसिंह! सुसिंहविष्टरं स्वमिहाऽलंकुरु विष्टपाधिप!। ऋतुराजसुखं गृहाण च श्रममुच्चैर्निगृहाण च क्षणम् ॥३०
अनुमत्य सुरागधीगिरः क्षितिपो निर्मलमागधीगिरः। स तु रङ्गमिवाऽऽत्मचेतसि प्रवहन्नेव तुरंगमत्यजत् ॥३१॥
अथ तत्र मृगेन्द्रविष्टरे विनिविष्टेऽखिलविष्टपेश्वरे। भरताधिपवल्लभाऽपि सा गुरुभद्रासनमाश्रयत् पुरः ॥३२॥
नृपदृष्टिमथो निजांशुकैर्विरजीकृत्य तदा प्रियंवदम्। उपदेशयति स्म चासने सुदृशो नोचितवञ्चिताः क्वचित् ॥
अथ भारतभूपभूषणप्रचयाय प्रसवावचायकाः। कुसुमावचयाय नायकाः प्रययुर्दिव्यवनान्तरेऽभितः ॥३४॥
पुनरप्यवदत् प्रियंवदो निभृतं संभृतकौतुकोत्सुकः। इह दिव्यविमानमद्भुतं गगने याति विभोऽवधीयताम् ॥
इह काऽप्यमरी निजेश्वरीं प्रति कस्याऽप्यधिपस्य वर्णनम्। विदधाति ततो जगत्प्रभो! निभृतीभूय निशम्यते क्षणम्
अनुमत्य सुमत्यलंकृतं वचनं तस्य चकार चक्र्यपि। श्रवणौ श्रवणोद्यतौ निजौ नमयेत् प्रेम मम प्रभोरिति ३७
अथ भारतभूपतिस्तदा सकलान्तःपुरसंयुतो मुदा। अशृणोत् स्वशिरोऽम्बरादिति श्रुतिलेपे घुसृणोपमं वचः ॥

तथाहि—गगने देवीकृता भरतवर्णना—

अमरीणामरीणां च महसां मोहयन् मनः। स वीरवरशृङ्गारो जीयाद् भरतभूपतिः ॥३९॥
यो राजा यद्दु (?) वाचि भङ्गमतनुं कम्पं तनौ सर्वतो वैवर्ण्यं निजदर्शनेन विततं स्वेदं च रोमोद्गमम्।
वामानां द्वितयस्य मानहननं मारेण कुर्वन् समं शृङ्गारं च भयं च यत् पृथगदात् तत् कर्मजं तत्फलम् ॥४०॥
आदौ येन सुविग्रहे क्षतमुरः पीठे प्रदत्तं रसात् संप्राप्य द्विविधा अपीह सुभगंमन्या महानायकाः।

१ पुष्पोच्चयकारकाः। २ न गम्यतेऽत्र यद्दु-शब्दार्थः—कदाचित् 'यद्दु' स्थानेऽन्यदपि पदं भवेत्। अथवा 'यद्दु' इति 'यत्+उ' एतम् अव्ययं भवेत्। ३ क्षतम्-खण्डितम्-उरः वक्षस्थलम्।

राज्ञाद् नित्यरताः सुलब्धविषयाः निर्जित्य संतोषिताः–तस्यैकस्य सुवर्ण्यतेऽत्र महिमा श्रीवीर-शृङ्गारिणः ४१

राज्ञाद् नित्यरताः सुलब्धविषयाः निर्जित्य संतोषिताः–तस्यैकस्य सुवर्ण्यतेऽत्र महिमा श्रीवीर–शृङ्गारिणः ४१
क्रान्त्वा भूमिभृतां शिरांसि सहसा सर्वत्र लब्धोदयो यः शुद्धोभयपक्षभाक् कुवलयेमोदप्रदोऽहर्निशम्।
ज्ञानोत्प्रसरस्वतीरसभृतात्–यज्जन्म जज्ञे जिनात् सोऽयं सूरगणे कलां प्रवितरन् जीयात् स्थिरेन्दुर्नवः ॥४२॥
हेमन्तस्तनुकम्पनेन शिशिरो निष्पत्रताधानतः, तज्जातिप्रसवच्छिदे मधुरसौ ग्रीष्मस्तु संतापनात् ।
प्रावृट् हंसनिर्वासनात् शरदहो! तच्छीर्षविच्छेदनात् शत्रौ षड्विधकाल एव यदसि प्रादात् पुनः पञ्चताम् ॥
प्राबुर्यस्य विषादकज्जलजलस्थानेषु दुर्वैरिणां वक्त्रेषु स्फुटखड्गलेखिनिकया साक्षेपनिक्षिप्तया ।
सद्दिग्भित्तिषु सुस्थिरां जयभवां कीर्तिं प्रशस्तिं स्थिरा–मेणाङ्कद्युतिनिर्मलां यदलिखत् तत् कस्य नात्यद्भुतम्॥
यो राजा च्युतधर्मिणां क्रमयुगप्रक्षालनोत्थैर्जलैः श्रीखण्डद्रवसान्द्रिते रचितया दानक्षणे गङ्गया ।
कालिन्दीं रिपुकामिनीनयनजैर्नीरैः कृतां साञ्जनैः संमील्याऽङ्गजतां व्यभासयदसौ तीर्थंकरस्यात्मनि ॥४५॥

---

१ पर्वतानाम्, राज्ञां च । २ उभयपक्षभाक्–मातृ–पितृशुद्धपक्षभाक्–पक्षे शुक्ल–श्यामपक्षभाक् । ३ कुवलयम्–पृथिवीवलयम्, पक्षे चन्द्रविकासि कमलम् । ४ सूरगणः शूरगणः, सूर्यगणश्च । ५ भरतराजो हि हेमन्तः–शत्रुशरीरकम्पनेन । ६ शिशिरः निष्पत्रतायाः पर्णरहिततायाः, शत्रोः निष्पत्रताया आधानतः । ७ मधुर्वसन्तः–शत्रुजाति–उत्पत्तिच्छेदनाय । ८ शत्रुहंसानां निवासनात् । ९ शत्रुशीर्षविच्छेदेन शरत् । १० एतत् तु आश्चर्यम्–यः षड्विधोऽपि यस्य असिः पञ्चतां मृत्युम्, पञ्चसंख्यात्वमपि । ११ एणाङ्कश्चन्द्रः । १२ च्युतधर्मिणां युगलिनाम्–जैनसंप्रदाये युगलिनो धर्महीनाः (?) प्रसिद्धाः । यथा हि ऋषभजन्माभिषेके युगलिभिर्जलगङ्गा प्रवाहिता तथा भरतेन रिपुकामिनीनेत्रनीरैः साञ्जनैः यमुना प्रवाहिता–इति पितृवत् पुत्रेण कृतम् ।

यः स्वर्णान्यवगम्य गाढमृदुतामाश्रित्य रत्नोचयं त्यक्त्वा क्षारमिहाऽश्व-वारण-मणीन् सुज्ञानतः कामिनीम्।
साधूक्त्या हृदि कल्पितं प्रवितरन् मेरुं चरन्नाचलं वार्धिं कामगवीं च कल्पफलदं वेगाद् विजिग्ये विभुः ॥४६॥

किं बहुना—

यद्वाक्यं न शृणोत्यसौ न स कविर्यो नेक्षते साऽमरी नारी चारुचिराऽपि नैव सुभगाऽरण्याकुलीपुष्पवत्[1]।
विश्वे पानभिषेणयेन्नहि नृपास्ते न प्रशंसास्पदं ते स्युर्नो हृदयालवो हृदयगो येषामसौ न प्रभुः ॥४७॥
देवि ! गङ्गे यमधिपो रङ्गे गेयगुणोऽकरोत्। पीयूषरसनाशां तु रसनां मे विभर्त्यसौ ॥४८॥
अलंकृतसुवाग-ऽङ्गा गङ्गाऽग्रे का वदत्यसौ। सुभद्रयेति तत्रोक्ते व्योम्नि प्रोचेऽथ जाह्नवी ॥४९॥
मनोरमे ! तवाऽऽसिच्य गवां पीयूषवर्षिणीम्। जातौ मद-प्रमोदाढ्यौ कर्णौ मे तर्णकाविव ॥५०॥
मनोरमे ! मनोऽरं मे रमयित्वा वचोऽमृते। मनोरमेऽथ विरम तृष्णाशान्त्यै सुधां पिब ॥५१॥
अमुं मम वनाऽऽयातमवनायाऽवनेः[2] स्थितम्। द्रष्टुं याम्यथ चक्रेशं चक्रे[3] शं योऽत्र जन्मिनाम् ॥५२॥
प्रविश्य कर्णयोरस्य गुणैर्बद्ध्वा मनो मम। तत्पार्श्वे जगृहे तन्न शक्नोम्यत्र विलम्बितुम् ॥५३॥
अनयोर्वचनं परस्परं प्रवदन्त्योर्मनसोऽनुरागतः। व्रजति स्म विमानमाशु तत् नृपचित्ते प्रवितीर्य विस्मयम् ॥५४
अवलामुखतः स्तुतिः श्रुतेत्यतिमन्दाक्षविलक्षमानसः। स तदा स्थितवानऽवाङ्मुखो वसुधावज्रधरो[4] हृदा गुरुः॥
मम जीवितवल्लभः सुरा-ऽसुरनारीहृदये शयो[5] ध्रुवम्। इति तत्र तदा सुभद्रया विकसद्वक्त्रसरोजया स्थितम्॥

१ 'आकुली' भाषायाम्—'आवळ' शब्देन ख्याता, तस्याः पुष्पाणि पीतानि मनोहराणि प्रसिद्धानि। २ अवनेः—पृथिव्याः, अवनाय—रक्षणाय। ३ शं—सुखम्, चक्रे—कृतवान्। ४ वज्रधर—इन्द्रः। ५ शेते इति शयः—निवासी।

ददति स्म ततः प्रियंवदो जय कर्पूरतरोऽतिथिप्रियः। विषं(?)तोऽप्युपनीय सेचनात् प्रददौ यः सुवचःसुधां मम॥
नृपनाथ! मया सदा तव श्रवसी आश्रवसीमसेविते। मम कर्णसुखं मनोरमां परिहाय प्रददाति कोऽधुना ॥५८
अथ ताः कुसुमावचायिकाः कुसुमालंकरणानि भूभुजे। ग्रथितानि सुभङ्गिभिर्नवान्युपनिन्युर्नयनाग्रतस्तदा ॥५९
नृपतिर्नृपतिप्रियाऽपि सा मणिभूषां प्रविमुच्य पर्यधात्। कुसुमाभरणानि कोमलं सुरभि कोऽमलतान्वितस्त्यजेत्
विहितावृभुतपुष्पभूषणस्तुरगस्थोऽखिलभूविभूषणः। प्रचचाल निजप्रियायुतो धृतसन्नाह इव स्मरोऽङ्गवान् ॥६१

ग्रीष्मवर्णनाः—

अथ तत्र तपर्तुशोभितां जगतीशो जगतीमधिश्रितः। जगदे मुदितेन बन्दिना रवितापाऽपनयोद्यतं वचः ॥६२॥
सविताऽपि सुनिष्ठुरैः करैर्जगतीप्राणमतिप्रतापयेत्। दहतीह च भूतधात्रिका न तु दुष्काल इदं किमद्भुतम्॥६३
जडसंगमकोऽत्र गोपतिर्भृशवैरस्यविवर्धकोऽभितः। इति दुःखत एव धात्रिका-हृदयं त्यक्तरसं तदाऽस्फुटत्॥६४
तपनाऽऽतपतप्तरक्षितक्षितिवीक्षाकृपिते स्ववीक्षणे। नृपते! घनगोस्तनीवने शिशिरस्त्यानवसे प्रसादय ॥६५॥
रसनात् सुखमद्भुतं फले रसनायां ददती तु नेत्रयोः। निजदर्शनतः सुनीलतायुत एवाऽघनगोस्तनीलताः ॥६६

१ विषं हि जलम्, पद्मकेसरम्, मृणालश्च। २ श्रवसी-कर्णौ। ३ आश्रवसीमसेविते-आसमन्तात् श्रवस्य-श्रवणस्य सीमा सेविता याभ्यां ते। ४ निर्मलतायुतः। ५ तपर्तुः-ग्रीष्मर्तुः। ६ दुष्टः कालः। ७ जलसंगमकः-ड-लयोरैक्यात्। ८ गोपतिः सूर्यः-भूपश्च। ९ वैरस्यं विरसताम्। १० तपनः सूर्यः। ११ वीक्षणं नेत्रम्। १२ गोस्तनीवनं द्राक्षावनम्। १३ शिशिरेण स्त्याना वसा वह्निविशेषो यत्र। १४ बहुवचनम्।

सरसी सरसीरुहैर्भृता सरसीभूतसमीरसेविता । खरसेन रसेन ! दृश्यतां गमिता हंसगणैः सुदृश्यताम् ॥६७॥

फलशालिसुशालशालिताऽस्ति च पालिर्जिनधाममालिका ।
क्षितिपालशिरःप्रपालितक्रम ! पश्याऽद्भुतविक्रमक्रमा ॥६८॥

मधुपान् मधुपायिनोऽतनोद् भ्रमरी विभ्रमरीतिरद्भुता। धवला धवलालिता भृशं वरलाऽऽस्ते वरलास्यसंगिनी॥

इह हंसकरैर्विकासिता शुचिहंसैरपि सेविताऽब्जिनी। स्वैरसं मधुपाय यद्ददौ तदियं पङ्क-कु-लीनता स्फुटा॥

कलापात्रे चन्द्रे यदनभिमुखी सा कमलिनी, करस्पर्शात् सित्वाऽपि न भजति सूरान्तिकमहो ! ।
शरीरांशान् भोज्यं सितविहगवर्गाय ददती, रसं रोलम्बेऽदात् तदनवगतं स्त्रीहृदि गतम् ॥७१॥

इह दिव्यसरोवरे सरोरुहरम्येऽमृतपूरपूरिते। जलकेलिविलासतः क्षणं तनुतापं तनुतामथाऽऽनय ॥७२॥

इति वाक्श्रवणेन कौतुकात् सैरसोऽयं सैरसोऽन्तरेऽद्भुतम् ।
प्रविवेश विशामधीश्वरो निजजायाव्रजशोभितोऽभितः ॥७३॥

---

१ सरोवरम् । २ कमलैः । ३ सरसीभूतः रससहितः । ४ समीरणो वायुः । ५ रस-इन !-रसस्वामिन् ! । ६ विभ्रमा विविध-भ्रमयुता रीतयो यत्र सा । ७ धवेन स्वामिना लालिता । ८ वरला हंसिनी । ९ सूर्यकरैः । १० अब्जिनी सूर्यकरैर्विकसिता, पवित्रहंसैः सेविता अपि स्वरसं श्यामाय-पङ्करङ्गाय मधुपाय एव ददौ-न निजरक्षकाय-निजाश्रिताय च, अत एव तस्याः पङ्क-कुलीनता-पङ्कपृथिवीलीनताऽवसीयते-पङ्काद् हि जातं पङ्कवर्णेन एव प्रीतिमेति । ११ अब्जिनी-स्त्रीहृदि गतं कौटिल्यमेतत्-तस्या रागो न कलापात्रे चन्द्रे, न सूर्ये, न हंसे, अपि तु श्यामे रोलम्बे भ्रमरे । १२ तनुताम् कृशताम् । १३ मथ-मानम् । १४ पद्मयन्तम् ।

रमणी रमणीयतोऽशुभत् रमणीयो रमणीयसः स्मरात्। अधिको जगतां रतीश्वरो हरवह्नेरिव गोपितोऽम्भसि॥
किल किञ्चित् कोमलेक्षणा रमयित्वा सुचिरं मृगेक्षणाः। विरराम ततोऽभिरामरुग् जलकेलीरसतो रसाधिपः॥
नृवरो त्ववरोधयुक् सरस्तटगोऽयं रुरुचे रुचेः पदम्। घनकालमतीत्य तारिकाकलितो निर्मलचन्द्रमा इव॥
धृतसद्‌शचीवरस्तदा शुशुभे भूमिशचीवरः स्थितः। किमु शारदचन्द्र-चन्द्रिकां परिधायास्ति सुवर्णपर्वतः ?॥
अथ देवगृहं हिरण्मयं नृपतिर्वीक्ष्य विवेश यावता। मकरध्वजमूर्तिमद्‌भुतां पुरतस्तावदसौ व्यलोकयत् ॥७८
गुरुदिव्यसरोवरोद्भवैर्जलजैस्तं परिपूज्य च स्मरम्। स नृपोऽस्य च रङ्गमण्डपे किल शिश्राय मृगेन्द्रविष्टरम् ॥७९

भरतेन सुरीसमागमः—

इह काऽपि सुरी सुरीतिवित् समुपेत्य प्रणिपत्य तं नृपम्। अवतंसितपाणिपद्मका विदुषी प्रौढिमयुक्तमब्रवीत्॥
विजयस्व चिरं जगत्त्रयप्रभुनाभेयजिनेन्द्रनन्दन !। अवधार्य वचः सुधानिभं वसुधाधीश ! शृणु प्रसद्य मे ॥
भरतक्षितिवासिनीचतुर्दशसाहस्रनदीश्वरीधृता। तव दर्शनमिच्छति प्रभो ! ननु गङ्गा निजचित्तरङ्गतः ॥८२॥
इति तद्वचनं निशम्य स स्मितलीलाललितं किलाऽलपत्। तव वाग्विषये मनोरमे ! मम हर्षेण मनोऽरमेधते ॥८३
अथ भारतभूपतिप्रिया सहसा साऽऽह सुहास्यवासितम्। वचनाद् विदिता मनोरमे(?) जगतीजीवितनाथ ! किं तव
इति तद्वचनं निपीय सा मुदिता यातवती च यावता। अभवन् सुविमानराशयः प्रकटास्तावदथाऽम्बरे सुराः ॥

१ स्मरादपि रमणीयः। २ जगतां हि प्रियो रतीश्वरः कामः-शिववह्नेः भयात् जले गोपितः प्रच्छन्नीकृत इव भरतः सरोवर-गतो भाति। ३ सुन्दरकान्तिमान्। ४ अवरोधो हि अन्तःपुरम्। ५ पदं स्थानम्। ६ मेघकालम्। ७ भूमिइन्द्रः। ८ परिधानं कृत्वा। ९ मेरुः। १० सिंहासनम्। ११ सुरीतिं वेत्ति। १२ अरम् अत्यर्थम्-एधते-वर्धते।

तत एकत उद्गानतः स्वसखीवृन्दसखी स्मयन्मुखी । मुदितोदतरत् पुरः प्रभोरिह मन्दाकिनिदेवता जवात्॥८६

सुरीदर्शनाद् भरतो विस्मितः—

निजदेहमहोजले नृणां नयनं नीरजयन्त्यसौ तदा । भरतेशितुरप्यऽपाहरत् हृदयं रागतरङ्गभङ्गिभिः ॥८७॥
अथ स त्रिदशापगां स्मरद्विमलस्नेहिलसारसौरभम् । अवलोक्य रसाधिपो रसादिति चित्तान्तरचिन्तयच्चिरम्॥
विद्वद्गोरससंभवं स्मरविधिः सत्पौष्पमन्थानतः, शृङ्गारं सुदधि प्रमथ्य जलितैर्हैयङ्गवीनैर्नवैः ।
यद्देहावयवान् प्रयतननिरतः सुस्नेहिलान् कोमलान्, स्फूर्जत्सौरभसंभृतान् व्यरचयन् मन्ये मनोमोहिनः ८९
शृङ्गारं दधि पात्रके च शशिनि प्रेयोगुणावेष्टिना, वैशाखेन युवाभिलापनिचयेनैव स्वभार्याकरैः ।
निर्मथ्य व्यतनोदिमां स्मरविधिः सारैः कपायादिमत्, ज्योत्स्नातक्रममुञ्चदत्र जगतस्तापोपशान्त्यै ध्रुवम् ॥९०
फुल्लत्तामरसं रसप्रविलसत् सौवर्णनालं स्फुरत्, पद्मप्रोज्ज्वलपद्मरागकलितं स्याच्चेत् प्रसर्पत्प्रभम् ।
अस्याः शोणतलस्य निर्मलनखज्योतिष्मतः प्रोल्लसज्-जङ्घाऽनर्घ्यरुचस्तुतस्तु समतां दध्यात् पदाम्भोरुहः ॥९१
अरम्भाद्या रम्भा न हरिरणुमध्यो न कलसः, सुवर्णः सौवर्ण्यौ न भवति मृणालं न मृदुलम् ।
न कम्बुः शोभाम्बुस्थितिरशितिरुक् सोऽपि शितरुक्, सगर्हः स्याद् बर्ही सुतनु ! तनुमालोकितवताम् ९२
प्रत्यंशं प्रतिवासरं निजतनुं छित्त्वा कलङ्काकितं, चन्द्रः पर्वणि चित्रभानुर्महसो मध्ये जुहावाऽऽशु यत् ।

१ मुदिता उदतरत्–उत्ततार । २ निजदेहतेजोजले । ३ नीरजयन्ती कमलयन्ती–कमलं कुर्वती–नीरजं हि कमलम् । ४ चित्तान्तः अचिन्तयत् । ५ स्मरब्रह्मा । ६ पुष्पाणां समूहः पौष्पम् । ७ कषायरसादियुक्तं तक्रम् । ८ विकसत् । ९ मध्ये कृशः । १० श्वेतकान्तिः चन्द्रः–अपि शितरुक् श्यामकान्तिः । ११ सूर्यतेजसः ।

अस्या आस्यशुकं श्रुताक्षरपदं तत् प्राप दुष्प्रापवाक्–पीयूषप्रसरात् प्रसिद्धविबुधप्रीतिपदं प्रोज्ज्वलम् ॥९३॥
निःश्रीकं नयनीलनीरजमहो ! लीलाऽनिलान्दोलितं, ज्ञातेयाय चलन् कूलप्लुतिरपि स्यात् खञ्जनः खञ्जरुक् ।
सारङ्गी भयतस्त्रसत्प्रचलिताऽपाङ्गाऽपि रङ्गाय नो, अस्याः प्रेक्ष्य मद–प्रमोदरसेकृत्संवीक्षणे वीक्षणे ॥९४॥
दोषोत्थानमवेक्ष्य नाशमपि च ज्ञात्वाऽऽयुपस्तौ खलु चर्क्री तीव्रतरं यदक्षतमिह ब्रह्मव्रतं चक्रतुः ।
तेनाऽस्यां स्मरवासचामरपुरि प्रौढस्तनौ निर्जरौ, जज्ञाते सुकृतेन सुस्थिरनिजज्ञातेयसंयोगिनौ ॥९५॥
इति चिन्तयतोऽस्य भूपतेः पुरतः क्षीरतरङ्गगौररुक् । कलिताऽद्भुतरत्नपादुका प्रलुलन्नीलदुकूलभासिनी ९६
अमरद्रुमपुष्पगुम्फनोत्तमधम्मिल्लसमुल्लसत्प्रभा । मितदिव्यविभूषणा सुरी सुरसिन्धुः पुरतः समाययौ ॥ ९७

सुरीकृता भरतशंसाः—

अथ भारतभूस्थिराखिलत्रिदशैश्वर्यभवश्रिया श्रितम् । द्विसहस्रमितैः सुरोत्तमैः सकलाङ्गं विकलङ्कतेजसम् ॥
ऋषभप्रभुनन्दनं नरामरशृङ्गारशिरोमणिं तु सा । अवलोक्य सविस्मय–स्मय–स्मर–हर्ष–स्थिरसाध्वसाऽजनि ॥
उपढौकयति स्म ढौकनान्यथ याचच सखी मनोरमा । इह तावदियं सुरापगा हृदये ध्यातवतीति विस्मिता २००
गरिमा गुणिनां गुणज्ञता ललितत्वं चतुरत्वनिर्मलम् । जगदुत्तमनिस्तमस्तनुप्रतिभैवाऽस्य विभोर्विभासयेत् ॥१

—इति विस्मयः ।

---

१ शुको हि प्रसिद्धः । २ श्रुतं वृद्धिं गतम् । ३ अनिलः पवनः । ४ ज्ञातिभावाय । ५ खञ्जकान्तिः । ६ दोषाया रात्रेः उत्थानम्, दोषस्य उत्थानम् । ७ नात्राक्षराणि पठितुं शक्यन्ते–पुस्तके 'त्वक्षपः' इति अस्पष्टम् । ८ चक्रवाकी–चक्रवाकौ । ९ ब्रह्मचर्यम् । १० अमरद्रुमः कल्पवृक्षः ।

अयमादिजिनेन्द्रनन्दने भुवनेन्द्रो धृतरागधी-रयः । हृदयं मम धीरयत्यपि स्वदृशा सौम्यरुचिस्पृशा भृशम् ॥२॥
—इति स्मयः ।

भुवनोत्तमकामिनीजनो हृदये ध्यायति यं रतक्षणे। रमयेद् यदि सोऽपि मां विभुः परशृङ्गारसुधासुधाम्बुधिः ॥३
—इति स्मरः !

भरतेश्वरनेत्रजं जनह्रितधीहृत्कमलेऽस्ति मे तथा। अचिरादपि कामिनीजनप्रभुता संभवितेति वेद्म्यहम् ॥ ४
—इति हर्षः ॥

किमु मौग्ध्यमथो महोदधेः किमहं ज्ञानमहोदधेः पुरः। विदुषा विभुनाऽधुनाऽमुना सह शक्ष्यामि न वक्तुमुत्तमम् ॥५
—इति साध्वसम् ॥

चिरमित्यनुचिन्त्य ढौकने निहितेऽसौ सुरसिन्धुदेवता । प्रणनाम सखीशताऽऽवृता भरतं भारतभूमिदैवतम् ॥६॥

या सुरी सा गङ्गाः—

प्रतिहारिकया सुविष्टरे निहिते रत्नमये सुरापगा। भरतेशितुरग्रतस्तदा प्रविवेश स्मितहृष्टलोचना ॥७॥
प्रथितप्रभुता-पवित्रितं पृथिवीशोऽप्रथयद् वचः शुचि। सुखिनी किमु देवि ! विद्यसे सं पुनाना जगतो जनं जलैः॥
अवदत् स्मितभासुरीकृताऽखिलरत्नप्रतिभा सुरी च सा ।
जयति त्वयि देव ! किं कुतोऽप्यसुखं स्याद् जगदीश ! जन्मिनाम् ॥ ९ ॥
नवकीर्तिसरोऽन्तरे मनः-कलहंसः सुखितोऽस्मि मे तरन् । भवताऽस्मि कृता पवित्रितास्पदमद्य त्वनवद्यदर्शन!॥

१ सु-आसने । २ स पृथिवीशः ।

सुपवित्रय मेऽद्य मन्दिरं स्वपदाम्भोजरजःप्रसादतः । इति मानसमानमुज्ज्वलं वितर त्वं सुतरस्विनां वर! ११
विनमेः ग्नरेशितुः सुता नृपते! जीवितवल्लभा तव। मम गेहमुपेत्वहं यथा निजशक्त्या विदधामि सेवनम्॥

गङ्गागृहे भरतगमनम्—

इति भक्तिपुरःसरी सुरी सुरसिन्धुर्नरसिन्धुरं तदा। अधिरोप्य विमानमानयन्निजगेहे परिवारसंयुतम् ॥१३॥
विमलैः शिशिरैः सुगन्धिभिः सुकुमारैर्वसनैर्दिवोभवैः। विविधैरपि दिव्यभोजनैर्जननाथं तमुपाचरत् सुरी॥
मधुरैर्वसुधासुधारितैर्ललितैर्नन्दनचन्दनैः सुमैः। अनुरञ्जितमानसं नृपं विदधे सा नति-मानसंगता ॥१५॥
अवगत्य मनःप्रकाशितैः सविभावैः शुचिहावभावकैः। सुरसोऽप्यमरी जनो भवेत् इति भावं सुरतं सुरी व्यधात्
भरतस्य मनो मनागपि स्पृहयामास यदत्र तत् सुरी। उपभोगविधावुपानयदवधिज्ञानवती स्वशक्तितः ॥१७॥
विनमेस्तनयां च भूपतिं सुरसिन्धुः समुपाचरत् तथा। न विवेद यथा मनस्तयोर्व्यतिरिक्ताममरीमिमां मुदा
अतिदक्षतयाऽतिसेवया ललितत्वेन वशंवदीकृतः। अथताममरीमरीरमद् भरतो मुद्भरतो रतो भृशम्१९

गङ्गया सह दैविकं सुखं बुभुजे भरतः—

विनमेः सुतया च गङ्गया सह मानुष्यक-दैविकं सुखम्। बुभुजे स निजेच्छयाऽच्छयाऽऽसौ रमेशोऽत्र समाः सहस्रकम्
सुरसं प्रविलोक्य हर्पितं सुरसंगीतकरोऽन्यदा नृपम्। स तु बन्दिवरः प्रियंवदो वदति स्म प्रकटोच्चविस्मयः॥

अयोध्यास्मृतिः—

१ सुधासहितायां वसुधायां सुधारितैः। २ अरीरमत्-रमयामास। ३ हर्षभरतः। ४ अच्छया-निर्मलया। ५ आस-चिक्षेप।

भुवनोत्तमवल्लभाद्वयान्वितमालोक्य भवन्तमीश्वर ! । घनसारतरुं स्मरामि तं फणिवल्लीयुगलेन शोभितम् ॥
अथ सस्मितमाह भूपतिः किमहो ! त्वद्वदनं प्रियंवद ! । चलितोत्कविलोचनद्वयं सुपरिम्लानमिवाद्य वीक्ष्यते ॥
अवदत् तदनु प्रियंवदस्तदयोध्यानगरं विनाऽधुना । मम नो रमते मनो मनोरमभूमावपि संप्रति प्रभो ! ॥
४ असुखे न समेति रोचते निशि निद्रा न दिने न भोजनम् । अत एव तनुस्तनुप्रभाऽजनि भूजानिशिरोमणे ! मम

यतः—

"असुखं च सुखं च चेतसि स्थितमस्त्येव न जातु वस्तुनि। भविनः सुखिनः स्युरत्र यैर्यतिनस्तैरिह दुःखिताः खलु"
भुवि किं नगराणि सन्ति नो बहवः किं न जनाश्च सन्ति वा।निजजन्मपुरे सजन्मभिः सह यः स्यात् प्रमदः स नाऽन्यतः
८ इति तद्वचनात् सचेतनः समयित्वा कियतोऽपि वासरान्।समभूत् स्वपुरं समायितुं स महीशः सहसा समुत्सुकः
अथ सा सुरसिन्धुदेवताऽप्यवगत्यैव मनो नरेशितुः। निजगाद चिरं प्रसादिता भवताऽक्षोभवताऽहमीश्वर !
तव दर्शनसौख्यसस्पृहा अथ साकेतनिवासिनीः प्रजाः। नृप ! मोदयतां भवान् मयि प्रणयो विस्मरणीय एष न
इति भोगवियोगदं वचोऽप्यवदत् साऽत्र सुरी सुरीतिमत्।विदुषी हृदि नो तथा सुखे यतते प्रेमविधौ यथा भृशम्
१२ उचितोक्तित एव रञ्जितो भरतोऽवोचत देवि ! मेऽनिशम्। ददती मनसो मतं सुखं भवती विस्मरतीह किं कदा

गङ्गोत्तरतटविजयः—

इति स स्ववशां प्रमोच्य तां सुरसिन्धुं भरतक्षितीश्वरः। प्रचचाल सुखेन सैन्यपात् प्रविजित्याऽत्र तदुत्तरं तटम् ॥

खण्डप्रतिपातिकागुहाविजयः, नव निधानानि च—

१ उत्कम्-उत्सुकम्। २ यापयित्वा। ३ सुरीतियुक्तम्। ४ सैन्यम् एव पादौ यस्य सः।

प्रविजित्य सुरं व्यतीयिवानथ खण्डप्रतिपातिकां गुहाम्। सुरसिन्धुतटेऽथ दक्षिणे विजितेऽत्राऽऽपं निधीनसौ नव

अयोध्याप्राप्तिः—

प्रविधाय निदेशवर्तिनः सकलानित्थमसौ नरा-ऽमरान्। स्वपुरं प्रति चेलिवानथो स्वगुहां सिंह इवाऽतिदुस्सहः ॥३६॥
भटहेतिभिरत्र दर्शयन्निजतेजोऽङ्कुरकानिवाऽग्रतः। निजभूपशतातपत्रकैः कुसुमानि स्वयशस्तरोरिव ॥३७॥
अनतान् नमयन् प्रसादयन् प्रणतानुन्नमयन् विवेकिनः। विदुषः परिपूजयन्नयं तदयोध्यानगरं समासदत् ॥

( युग्मम् )

अयोध्यावर्णना—

मणि-तोरणराजिराजितां मुदितोत्कण्ठितपौरपूरिताम्। कुतुकाकुलसत्कुलस्त्रियं विलसद्धास्यविलासितेक्षणाम्॥
अतिनिर्मलरत्नपुत्रिकाङ्कितमश्चोचयचारुवीथिकाम्। निजदिग्विजयोरथगीतिकाऽभिनवाऽऽकर्णनकर्णहर्षदाम्॥
कलमङ्गलतौर्यगर्जितैर्नदयन् केलिकलापिनां कुलम्। प्रविवेश पुरीमरीणरुक् भरतो मुद्भरतो नृपाधिपः ॥४०॥

( विशेषकम् )

स्वपुरोहितरत्ननिर्मितान् बहुमाङ्गल्यविधीन् नयन् ययौ। निजसौधमसौ धराधवः शुचिसौधर्मसदः सुरेन्द्रवत्

चक्रधराभिषेकः—

कलमङ्गलगानपूर्वकं विधिना द्वादश वत्सराण्यथो। अभिषिच्य नरा-ऽमराधिपैर्विदधे चक्रधरोऽयमादिमः ४२

भरतभगिनी-सुन्दरीकृततपांसि—

---

१ आप माप। २ भटहेतिभिः भटशस्त्रैः। ३ पुत्रिका-भाषायाम्-'पुत्तलिका'। ४ अक्षीणकान्तिः। ५ सौधम् आवासम्। ६ सौधर्मसभाम्।

स शशाङ्ककलामिवाऽमलामवलोक्याऽतिकृशां च सुन्दरीम् ।
सचिवान् परिपृष्टवान् नृपः प्रति तं प्राहुरमी अधोमुखाः ॥४३॥
तव दिग्विजयाद्यवासरादियमुच्चैर्व्रतसंजिघृक्षया । नृप ! षष्टिसहस्रवत्सराण्यकृताऽस्ताऽशनमद्भुतं तपः ४२

सुन्दरीप्रव्रज्या—

अथ चक्रधरोऽपि सुन्दरीकृतचित्तः सह सुन्दरीमिमाम्।परिगृह्य विभोः कराद् व्रतं स तदाऽऽदापयतिस्म सोत्सवम्

लघुभ्रातॄन् प्रति दूतप्रेषणम्—

अभिषेकविधावनागतान् वितते द्वादशवार्षिकेऽपि तान्।अभि दूतगणं व्यसर्जयद् भरतोऽष्टानवतिं निजानुजान्
स्वनमस्करणाच्च संगमाद् भरतेशः त्वरितं प्रमोद्यताम्। इति दूतवचो निशम्य तद् जगदुस्ते जगदुद्धरा नृपाः॥

अस्माकं स्वामी तु ऋषभ एव जनकः—

प्रविभज्य स राज्यमात्मनो जननोऽस्माकमदात् पुराऽस्य च। भवतां पतिरेव लोभतः कथमस्मत्त इदं समीहते।
इतरेण नहि प्रयोजनं निजराज्यं ननु रक्षितुं क्षमाः। वलतोपजुषो वयं स्वयं कथमेनं प्रविदध्महे पतिम् ? ॥४९॥

भरतो हि हतधीः—

हतधीरतिधीर एष चेत् रणरङ्गे समुपैतु तज्जयात्। न वयं च पराञ्च एव भोः ! स्वशरैर्नर्तयितुं तमागतम् ५०
रुषिता अपि भो ! भृशं वयं निजतातेन समं विमृश्य तु। समरं भरतेन कुर्महे कलहारम्भरतेन नाऽन्यथा ५१

अष्टापदे ऋषभस्य देशना—

---

१ अकृत-चकार। २ अस्ताशनम्—अस्तं क्षिप्तम्—अशनं भोजनं यत्र तपसि तद् अस्ताशनम्। ३ जननो जनकः—ऋषभदेवः।

इति ते प्रणिगद्य भूमिपाः प्रभुमष्टापदपर्वतस्थितम् । अभिगम्य मुदा प्रणम्य चाऽभ्यधुरुच्चैर्भरतोऽभियोगिकम्
शुचिशान्तविलोचनांशुभिर्भगवानेष सुधाकणैरिव । अभिषिच्य जगौ निजाङ्गजांस्तदसूयानलशान्तये किल॥
अनयाऽऽश्रितया श्रियाऽनया ननु यूयं तनया नयाधिकाः। कथमिच्छत संगमं हहा! शुचिचित्ता इव धूर्तवेश्यया
४ स्वपुरार्जितपुण्यनीरदात् धनपूरो भविता विनश्वरः। स्थिरमत्र तु केवलं ततोऽद्भुतशीलद्रुममूलनाशनम्!!।
अतिकुत्सतरैर्विनश्वरैर्भवभागैः नरकान्तकारकैः। इह तुष्यति रङ्कवज्जनः शिवराज्याय करोति नोद्यमम् ५६
नृवरा-ऽमरराज्यसौख्यदः परमात्मा परमः सुरद्रुमः। प्रकटीक्रियतामथ व्रतैर्विषयाशाविषवल्लिनाशनात् ॥५७॥
अपमानकलङ्कपाप्मनां विषयेच्छा ध्रुवमूलमत्र भोः!। तदिमामपहाय मुक्तये सुकृताढ्याः कुरुताऽऽदरं रयात्
८ वचसा मनसाऽङ्गकेन च श्रुत-सद्ध्यान-तपस्स्विह क्षमाः। दुरितान् कुशरीरसंगतान् ननु यूयं किमथो करिष्यथ?
विभुवाक्यमिदं निशम्य ते शमिनः संयमिनश्च जज्ञिरे। भरताय निजेश्वराय तेऽप्यथ दूता अभिगम्य चावदन्
भरतेन लघुबन्धु-राज्यानि ग्रसितानि—
अथ भूतिभृतानि जग्रसेऽनुजराज्यानि स सार्वभौमराट्। स्फुटवह्निरिवेन्धनान्यहो! अशनानीव धनानि भस्मकी
१२ भरतं सैन्यपो व्यजिज्ञपत्—
नरशेखरशेखरीकृतक्रमयुग्मं भरतेशमन्यदा। प्रणिपत्य सुषेणसैन्यपः समुपेतः सदसि व्यजिज्ञपत् ॥६२॥

१ भरतदूतकथितसंदेशम् । २ अनयो हि अन्यायः, नमु आश्रितया अनया श्रिया । ३ अत्र संसारे केवलम्-आत्मतत्त्वं स्थिरम्, अत एव यद् यूयं शीलद्रुममूलनाशनं कर्तुमुद्यताः-तद् अद्भुतम्-इति गम्यते। ४ पुस्तके तु 'परहांत' इति अस्पष्टम् । ५ रयाद् वेगात् । ६ अशनानि भोजनानि । ७ भस्मकी भस्मकरोगवान् ।

चक्रं नहि संविशति—

वलतो नमितोच्चभूधरे विहिते दिग्विजये प्रभो ! त्वया। समदद्विरदः स्वशालिकामिव चक्रं नहि देव ! संविशेत्

को हि अजितः ?—

सचिवः शुचिवाचमूचिवान् सुमतिः श्रीभरताधिपं प्रति ।
ननु कोऽस्त्यजितो जगज्जिति त्वयि नाथेऽपि रवौ तमोंऽशयत् ॥६४।

बाहुबली अजितः—

स्मृतमाः ! प्रथमस्तवाऽनुजो न महाराज ! भृशं-वशंवदः। स हि बाहुबली बलीयसां ततिभिः प्रस्तुतविक्रमस्तुतिः गुणरत्ननिधिर्वेलाम्बुधिः सहितः स्वस्य महामहीधरैः। प्रसरन्निजमुद्रया स्थितः स्थिर-ओजोवडवाग्निभीषणः

भरतो हि वणिक्—

अविजित्य महाबलं ह्यमुं भवता दिग्विजयस्य कैतवात् । वणिजेव विदेशयायिता विदधे कोऽपि पराक्रमस्तु न अनुजः समहा महाभुजस्त्वतिकीर्तिश्च बलं च मे ध्रुवम् । इति चक्रिवचो निशम्य स न्यगदद् मन्त्रिवरः ससंभ्रमम्

मन्त्रिणा भरतः प्रेरितः—

उपमेयबलोऽमुनाऽधुना भुवने त्वं भुवनेश्वरोऽपि सन् । विजितेऽत्र महाभुजेऽनुजेऽनुपमौजा भव चक्रनायकः स्वसमं समुपेक्षसेऽथ तं सरलः स्वच्छनितान्तवत्सलः। लघुनाऽपि लघूकृतं वचो गणयिष्यन्ति नृपाः कथं तव? कुरुषे प्रथमं रणं न चेद् निजदूतं विसृज प्रभो ! ततः । समुपेत्य नमत्यसौ यथेतरथा तु त्वममुं प्रणामय ॥७१॥

१ समदो हस्ती। २ महसा सहितः-समहाः।

बाहुबलिं प्रति दूतप्रेषणम्—

इति मन्त्रसमीरणर्विभा-वसुरप्येष नृपः प्रशान्तिहृत्। प्रति बाहुबलिं दिदेश तु स्वकदूतं नय एष भूभुजाम्॥

दूतगमनम्—

शतशोऽशुकुनैर्निवारितः स सुवेगः पविवेगतो गमन्। नियतं नियतिश्रिता गतिर्जगति स्यादिह धीमतामपि

बहुलीदेशकीर्तिः—

बहलीकृतसंमदं दृशोर्बहुलीदेशमथो विवेश सः ॥७४॥

कणराशिभिरुच्चितैर्घनैः सुख-लक्ष्म्य-ऽङ्गमणीगणैरिव। बहलीकृतसंमदं दृशोर्बहुलीदेशमथो विवेश सः

प्रपठद्भिरनुत्सुकैः शुभैः श्रितदूतद्रुमशीतभूतलम् ॥७६॥

सुरशैलसमेतदैवत-सुखगीतादिजिनेन्द्रगीतिकाः। प्रपठद्भिरनुत्सुकैः शुभैः श्रितदूतद्रुमशीतभूतलम्

किल बाहुबलिः समेत्यहो! अपशास्त्रा-ऽनययुद्धनिश्चलः। इति भिल्लगिराभिरुत्त्रसद्द्विज-शार्दूल-मृगेन्द्र-भोगिनम्

किल बाहुबलिः समेत्यहो! अपशास्त्रा-ऽनययुद्धनिश्चलः। इति भिल्लगिराभिरुत्त्रसद्द्विज-शार्दूल-मृगेन्द्र-भोगिनम्

पथि पान्थवधूविभूषणद्युतिनिर्धूततमीतमश्चयम्। फलशालितशालिपालिनीललनाऽऽनीतसुबाहुभूपतिम् ॥७७॥

( चतुर्भिः कलापकम् ).

इति देशममुं व्यलोकयन् कुतुकैर्नव्यमनाः स दूतेना। इव देवभवं समागतं स्फुटमात्मानममन्यत ध्रुवम् ७८

तक्षशिला—

अथ निर्मलशालशालितां स विलोलध्वजराजिराजिताम्। स्फुटधर्म-यशोद्विवासता सहितां तक्षशिलामवैक्षत

बाहुबलिना दूतसमागमः, बाहुबलिकृता भरतभर्त्सना च—

स विशिष्टमदो विशिष्टराट् चकितः कौतुकितो विवेश ताम्। घटिकागृहपार्श्वगो रथं परिहृत्याऽस्मरदीशवाचिकम्

१ 'गच्छन्' स्थाने 'गमन्' इति कवेर्वैचित्र्यम्। २ तमीतमो रात्री—अन्धकारः। ३ दूतपुरुषः।

नृपवाक्यमवाप्य वेगतः प्रतिहारोऽथ सुवेगसंज्ञकम् । जलरत्नजकुट्टिमस्फुरज्जलभावं तमवेशयत् सदः ॥८२॥
नृपतिः क इति स्वसंशयं जनितं स्तम्भनिपक्तमूर्तिभिः । त्यजति स्म सविस्मयैर्वचोनिचयैर्वाक्छलैः स दौत्यकृत्
प्रणिपत्य निविष्टवत्यसावथ दूते नृपतिर्जगौ गिरम् । हृदयोद्भवहर्षवृक्षजस्मितपुष्पैः परिपूजितामिव ॥८३॥

अयि भद्र ! ममाऽग्रजो बहुकुशली तिष्ठति भोः ! प्रियंवद ! ।
अयि तेन जिताः सभासदः पृथिवीशाः किमु सन्ति सन्मुदः ॥८४।

मुखभारत ! एष भारतं किमु जित्वा गतवान् महीतलम् । अयि तस्य परस्परं क्वचिद् न पुमर्थत्रितयं विबाधते
इति भूपसुवर्णवागलंकृतकर्णोऽथ स दूत ऊचिवान् । स्मृतितोऽस्य जनाद् रुजाव्रजो व्रजति स्यात् कुशली कथं न सः
समरेऽसमरेव एष चेत् क्व भटः स्यात् प्रकटस्तदोत्कटः । तरणिर्यदि खे क्व तारको गरुडश्चेत् क्व नु चण्डकुण्डली
जननीमिव जीवदां नृपा भरताज्ञां बहु मानयन्ति ते । न निजं विषयं त्यजन्त्यहो ! पुरुषार्था अपि तद्भयादिव
अथ भारतभूमिभूमिपा भरतस्य स्वकभक्तिभारतः । विदधुर्विदितं स्वचक्रितोत्सवमाद्वादशवत्सरीमपि ८९
स निजाननुजाननागतानविबुध्यात्र महे महत्यपि । पुरुपानरूपा व्यसर्जयद् मुदितस्तैर्निजसंगमश्रिकैः ॥९०॥
सुविकल्प ! धियो विकल्प्यते किमपि स्वान् विषयान् विहाय च । सुमधुव्रततां समाश्रयन् विकसन्नाथकरारविन्दतः
इति बन्धुवियोगनीरधौ स विषादानवधौ निमज्जति । तदमुं प्रति धीर ! संप्रति त्वमुपेक्षां कुरुषे किमन्यवत् ॥
लघुबन्धुवशो न यद्यपि त्वमुपेतो नृपते ! तदुत्सवे । अपवक्ति तवैतदन्यथा पिशुनोऽयं हि निसर्गतो जनः॥९३॥

---

१ मुखस्य भायां शोभायां रत !—वाचालशिरोमणे ! । २ असमरेखो हि अद्वितीयः । ३ प्रचण्डसर्पः । ४ निजभक्तिभारेण । ५ निजसंगेन मध्ये तिष्ठति-इति निज-संगमश्रिकः-समासान्तस्वार्थी ।

निजम्। जनवादरजोयुतं गुणमयय क्षालय ...

भरताभिमगुने कृतिन्! प्रभवत्कीर्तिमरिस्पहो! प्रियमानधनोऽतिनिस्पृहः स्पृहयत्यय तवाऽऽनतिं नृप!
इह भूरि धनं स भूधनः प्रददानोऽपि निम्लानुजीविनाम्। शनिमात्मजमप्यहर्पतिर्लंघयत्येष हि स्वभावतः॥९६

लघुबन्धुरहं मनोभ्रमः प्रविगोगस्त्वमपि! धेय! न त्वया। अरिभूरुहवह्निरेष ते शलभत्वं सुलभं करिष्यति।९७॥
४ अगभीरगमेऽप धीर! नेत् प्रवरं नक्रधरं मदादमुम्।
कि बहुना—
अयनेरयने च जीवने यदि वाञ्छा हृदि काचिदस्ति ते। स्वरसाच्छिरसाऽस्य शासनं वह भूपा अपरे यथाऽखिलाः
अमरैर्भ्रमरैरिवास्य यत् परिसेव्यं पदपद्मयुग्मकम्। पृथिवीतललेशदेशप! प्रणमंस्त्वं किमु तत्र लज्जसे? ॥९९॥
इति दूतवचो निशम्य स प्रबलो बाहुबलिर्निजौ भुजौ। अवलोक्य जगाद तत्क्षणे स्फुरति प्रेरयतीव दक्षिणे॥३००
८ मम संगममीहते स यत् रुचिरं तत् खलु पूज्य एव मे। यदनीनयदात्मनो भुजांस्तदहो! प्रौढवया स्थिरस्मृतिः
पदमीषु शमीभवत्सु भो! अतिवान्ता अपि राज्यसंपदः। अयमाहरदुत्सुकश्चवत् प्रकटस्नेह इवाऽस्ति ते पतिः
लघुभिर्जित इत्ययशो भुवि मा भूदिति ते त्रपान्विताः। विदधुश्चरणं रणं न तज्जितकासी स बभूव निस्त्रपः॥२
१२ अपयन्ति च मां महाजनोऽनुजराज्यग्रहणोद्यतं न तम्। पुनरत्र वचोहर! त्वया पतिभक्तिः प्रकटीकृता भृशम्
बाहुबलिना ऋषभ एव पूज्यः, नान्यः—
परिचस्य इलादितीर्थकृद् भुवनेऽन्यो मम नैव दूत! भोः। गुरुबन्धुतया नमस्कृतिं भरतस्याऽस्मिं करोमि नाऽन्यथा
लघुबन्धुविवासनात्त्रसा न हि योग्योऽपि समीहते नतिम्। इति पापविशुद्धयेऽस्तु मे भुज उच्छेद-कशाऽस्त्रभृद् गुरुः

१ सभामन्दिर!। २ 'तु–अपि' इति पदच्छेदः। ३ अवनेः अवने रक्षणे। ४ अमीषु अष्टानवतिभ्रातृषु। ५ संयमं विदधुः। ६ 'अहम्' इत्यर्थे।

निजबन्धुषु नैव सौहृदं मयि पुष्णाति मदग्रजो ध्रुवम्। निजदिग्विजयजं यशो-धनं सुखिनो दित्सति मेऽन्यथा कथम्॥
अरिभूरुहवह्निरेष ते पतिरस्ति प्रतिभाति भासुरः। मम चापघनाघने शरैरतिवर्पत्यथ भावि किं हहा ! [१] ॥८॥
त्रिजगज्जनकोटिहृद् मुदां जनकोऽयं जनको युगादिकृत्।
अनुजोऽस्मि च यस्य विक्रमी न स सेव्योऽस्तु कथं सुरा-ऽसुरैः ? ॥९॥
तरलीकृतलोचनो मया खुरलीभिर्[२]विजितः पितुः पुरः। तदसौ मयि मा विलज्जतामिति मत्वा कृपयाऽस्मि नागतः
स्वकरेण सखे ! [३]रितः प्रपतत्कन्दुकवन् मया धृतः। पटुचाटुभृता गिराऽद्य तद् भृशमत्तस्य[४] नु तस्य विस्मृतम् ?
अयि दूत ! तवेश्वरो ध्रुवं निजचक्रेण करोत्यहंकृतिम्। किमधःकृतचक्रयुग्मका ननु कुर्वन्तु रथाः[५] कथं न ताम्॥
तदरे ! व्रज दूत ! वेगतो मदभूतग्रहिलं निजं पतिम्। प्रहिणु स्वकमण्डलाग्रतः शमिनं तं विदधामि मान्त्रिकः
इति भाविरणश्रुतेरिवाऽऽदत्तनृत्यं किल बाहुभूपतिः। करवालमलालयत् करे स तु दूतः सभयः सदोऽत्यजत्
सुभटान् प्रकटायुधानिह प्रविलोक्यात्मरथं श्रितो भयात्। समतत्वरदुच्चवैरिणं सतताशङ्कि मनो नृणां भवेत्॥
दूतः प्रत्यागमत्, भरतं व्यजिज्ञपच्च—
बहलीविषयाद् विनिर्गतः स्थिरचित्तो निजनाथनीधृतः। भयतस्त्रसंतो विलोकयन् स उपेतो भरतं व्यजिज्ञपत्॥
यदि मेरुरहर्पतेः करैर्यदि च व्योम समीरणेरणैः[७]। यदि पाणिनिषेवणाद् पविर्झटिति प्रस्फुटति क्षितीश्वर ! ॥१७
बाहुबलिरजेयः—

१ चापमेवे। २ खुरली तीरक्षेपणाभ्यासः। ३ 'सखा' 'ईरितः' इति पदद्वयम्। ४ भृशमत्तो भृशाभिमानी। ५ यदि तव ईश्वरः—भरतः चक्रेण अहंकृतिं करोति, तदा चक्रद्वयसमेता रथाः कथं न अहंकृतिं घनघनं कुर्युः। ६ द्वितीयाबहुवचनमेतत्। ७ समीरणेरणैः पवनेरणैः—पवनानाम् ईरणैः।

न तथापि विभो! विभोचयः प्रवरैर्मानव–देव–दानवैः। अनुजस्तु महाभुजस्तव स बली बाहुबली विजीयते॥(यु०)
तव देव! परामर्शो यदा विहितोऽस्य श्रवणातिथिर्मया। स विलोक्य तदा निजौ भुजौ स्मयते श्मश्रुनिवेशिताङ्गुलिः
प्रबलरिपुबलेभ्योऽशीतविद्याधरौघैः शरणवितरणेनाऽऽजन्म संतुष्टचित्तैः।
कृतनवनगरीभिः शोभिता यत् पुरी सा चतुरतरसखीभिः सेविता स्वीश्वरीव ॥२०॥
स विक्रमयुतोऽद्भुतोपकृतिदत्तचित्तस्तथा सुरीभिरिह गीयतेऽप्यमृतपानशैथिल्यतः।
यथा श्रुतिपथं श्रितो न मम कोऽपि वीरोत्तमः सुरासुरनरेश्वरो। भरतभूमिचक्रायुधः ॥२१॥
चरणयुगमसौ समेत्य बन्धुर्मम वरिवस्यति चेति चिन्तनम्।
मा मनसि नृपपते! वृथा कृथा त्वं गगनसुमैरिव पूजनं जिनेन्दोः ॥२२॥
इत्थं दूतं वदन्तं प्रति सचिवधवः सोऽद्भुताटोपकोपः प्रोचे वाचं महोच्चभृकुटिकुटलितः प्रोत्कटास्यः प्रहस्य।
रे! रे! कोऽयं स्वगेहप्रथितपृथुबलो बालिशो बाहुभूपः २३
द्वात्रिंशद्भूपसाहस्रकबलकलितेऽग्रे सुपेणे रणस्थे।
बाहुबलिना युद्धसज्जता—
प्रयाणं भो! भूपा इति भरतनाथार्धवचन–प्रसादं संप्राप्योद्धसिततनुभिः सैन्यपतिभिः।
हृतां ढक्कां ढक्कामिव रिपुनृपत्रासविधये भटौघः श्रुत्वाऽभूत् समरमदकर्पूरकलशः ॥२४॥



१ भाषायाम्–मूछे ता दईने। २ सु+ईश्वरी–स्वीश्वरी।

श्रीरत्नप्रभसूरिसूरकरतो दोषानुषङ्गं त्यजन् यो जाड्यस्थितिरप्यभूत् प्रतिदिनं प्रासादमुत्प्रातिभः ।
तेन श्रीकमलप्रभेण रचिते श्रीपुण्डरीकप्रभोः श्रीशत्रुंजयदीपकस्य चरिते सर्गो द्वितीयोऽभवत् ॥३२९॥

इति श्रीरत्नप्रभसूरिशिष्य-कमलप्रभसूरिविरचिते श्रीपुण्डरीकचरिते भरतदिग्विजय-
बाहुबलिभूपोत्साहनो नाम द्वितीयः सर्गः ।

## ॥ तृतीयः सर्गः ॥

अचलद् भरतः

स श्रीमानथ भरतो रतोऽतिसौर्यैः प्रारूढो गुरुगजरत्नमादरेण ।
सर्वोर्वी कटकभरैर्निजैरनुर्वी कुर्वाणोऽचलदखिलैर्वृतो नरेन्द्रैः ॥१॥

त्वत्सैन्याद् व्रजति रसातलं रसाऽसौ तद् भूभृत्प्रथम ! शनैः कुरु प्रयाणम् ।
प्रोन्नादादिव गिरयोऽभ्यधुस्तमेवं मातङ्गा-ऽश्व-करभ-पत्तिषु नदत्सु ॥२॥

चन्द्रोऽयं ध्रुवमिति भावतो हसन्तीमाश्लिष्य प्रसृतकरः कुमुद्वतीं ताम् ।
आत्मानं दलभरधूलिधूसरोऽपि सूर्योऽसाविह बहु मानयांबभूव ॥३॥

सा सेना बहलीदेशं प्राप—

सा सेना प्रसृतरजस्तमःसमूहेऽप्युत्तङ्गस्तनगुरुहस्तिराजयाना ।
राजन्ती गुणमणिभिः सुनायका द्राक् प्राप्याऽस्थादथ बहलीसुदेशकण्ठम् ॥४॥

---

१ पुस्तके न स्पष्टम् । २ लघ्वीम् । ३ हसमानाम् । ४ स्त्रीपक्षे-रात्रौ । ५ स्तनो हि मेघध्वनिरपि ।

पुष्पिता— ॥ ६१ ॥

प्राकृतो बाहुराजः—

तं चक्रनिपतिमथो निशम्य दर्पादायातं स्फुटजयडिण्डिमप्रघोषैः ।
सैन्यानि त्वरयति स सभसं योऽन्तः प्रारूढः करिवरमत्र बाहुराजः ॥५॥

४ धूलीभिः सुपिहितभास्करेऽतिगर्जत्क्ष्वेडानस्वननिभृताम्बरान्तराले ।
प्रत्युद्यत्पटुभटहेतिविद्युतीह विस्तीर्णे धृतघनडम्बरेऽस्य सैन्ये ॥६॥

रोमाञ्चाङ्कुर उरसस्त्वरत्नभूषु वीरेषु प्रतिददृशे महद्दः । भीतानां तृणनिचयो मुखेष्वरीणां तन्नारीनयनयुगेषु चाम्बुपूरः
( युग्मम् )

चक्राभीश्वरशिबिरस्य नाऽतिदूरे स्वं चक्रं रिपुनृपचक्रवालचक्रः ।
स्वादेशादथ लघुरापभिः सतर्पः शुद्धायां भुवि विनिवेशयांचकार ॥८॥

८ प्रातः स्यादिह जगदद्विवीरयोस्तु संग्रामो व्यसमरसः कुतूहलाढ्यः ।
व्याहर्तुं वरुणमिवाऽगमत् प्रतीच्यां मित्रोऽसौ द्रुतमथ विश्वकर्मसाक्षी ॥९॥

संध्यायामरुणविभौ रुषेव दीप्तावालोक्य द्रुतमुदितकरैः स्वकीयैः ।
सैन्यौघान् रणभरतोऽरुणत् स राजा सौम्यानां नहि पुरतो भवेद् विरोधः ॥१०॥

१२ तां श्यामां शशिवदनां विलोलतारां लिप्ताङ्गीमिव परिलभ्य चन्द्रभाभिः ।
वीरेन्द्रा उभयदलेषु चक्रुरुद्यत्क्रीडानि स्फुटविषमायुधार्चनानि ॥११॥

१ सधूलि । २ हेतिः शस्त्रम् । ३ सेनावासः शिबिरम् । ४ बाहुबलिः । ५ विषमरसः । ६ सूर्यः । ७ सैन्यसमूहान् ।
८ परिरभ्य ।

तां दोषां यमजनको भृशारुणास्यः संत्रास्य स्वपतियुतां लघूडु-युक्तम् ।
सैन्यैर्यौः स निजकरैरचालरतां (?) वेगेनानणुरणतौर्यगर्जितानि ॥१२॥
द्वन्द्वायाऽभ्युदितचमूसमूहमल्लद्वन्द्वस्यापरगिरि-पूर्वशैलसंस्थौ ।
चन्द्रा-ऽर्कौ प्रसृतमहामयूखदण्डानुद्दण्डान् विदधतुरन्तरालभागे ॥१३॥
अश्वोऽश्वं प्रति सुभटो भटं च नागो नागेन्द्रं भुवि रथिनं रथीह खे तु ।
उन्नादप्रतिनिनदं रजो रजश्चाभ्यायासीद् दलयुगलस्य भावनैक्यात् ॥१४॥
नाराचस्फलनभवस्फुलिङ्गभाराभाराढ्ये समररजोमहान्धकारे ।
आः ! केषामहरदसौ न जीवितद्रव्याणि प्रबलतरोऽत्र कालचौरः ? ॥१५॥

प्रथमजिनेश्वरपूजा—

कृत्वा तौ प्रथमजिनेश्वरस्य पूजां युद्धाय स्थिरमनसौ तदाऽऽर्षभी द्वौ ।
सन्नाह्योत्कटकटकान्यकारयेतां कः सूरः स्वसुतहिताय नोद्यतेत ? ॥१६॥

युद्धवर्णना—

आकाशे करतललीलयैव वीरैरुत्क्षिप्ताः पृथुकुथसंयुताः करीन्द्राः ।
भूयांसो भुवि सहसाऽसिताः पतन्त उत्पक्षा बलनिचयभ्रमं वितेनुः ॥१७॥

१ यमजनकः सूर्यः । २ उडूनि नक्षत्राणि । ३ न प्रतीयते स्पष्टम् । ४ नाराचः लोहमयो बाणः । ५ भारस्य आभा, तया राढ्ये । ६ पुस्तके न स्पष्टम् । ७ कुथः-भाषायाम्-हाथी उपर नाखवानी झूल ।

प्रैर्षीऽश्वं निजशिरसा हयो रथोचाग्रांऽह्रिभ्यां रदनयुगाऽऽक्रमाद् गजस्य ।
स्कन्धेऽस्य स्वपतिमरोपयद् हतारिः किं न स्यादतिगुरुता सुशिक्षितेभ्यः ॥१८॥

कौक्षेयक्षतचटुकुम्भिकुम्भमुक्ताकीर्णायां रुधिरिमकुङ्कुमारुणायाम् ।
तत्रोर्व्यां भटघटनाटयसंकटायां किं कुर्यान्न यमनृपः पुरप्रवेशम् ॥१९॥

दयायुक्तो बाहुभूपः—
सस्फोटं कुन्त-हय-हस्ति-योधदेहप्रस्फोटं स्फुटमवलोक्य बाहुभूपः ।
आश्लिष्टो हृदि दयया रयात् स वीरो धौर्याढ्यो दृढमिति चिन्तयांबभूव ॥२०॥

संमर्दं करटिभटादिकीटकोटीसंमर्दोत्करकलुषं प्रजायमानम् ।
धर्मज्ञो बलसहितोऽप्युपेक्षमाणः किं लज्जे निजकुलतो दयावतो न ? ॥२१॥

वातूलो रणदहनेऽस्त्रदीपिते य इङ्गालानिव सुभटान् प्रदह्यमानान् ।
सोच्छ्वासो निकटगतोऽप्युपेक्षतेऽसौ निर्जीवो ध्रुवमिह चर्मभस्त्रिकेव ॥२२॥

इत्येवं मनसि विचार्य वीरराजः स प्रैषीत् तदनु निजाग्रजाय दूतम् ।
तद्वाक्याद् भरतनृपोऽत्रपो रणाय प्राचालीत् स्वयमथ बन्धनायुयुत्सुः ॥२३॥

आयातं भरतमहीमहेन्द्रमेनं दृष्ट्वाऽसौ समरकृते गृहीतदक्षः ।
राजन्यैः स कनककाण्टकैः परीतः प्रारूढः कलभमिलापतिश्चचाल ॥२४॥

१ कौक्षेयः—असिः । २ घटं भाषायाम् 'घड' इति ख्यातम् । ३ पुस्तके कृत-तच्च अस्पष्टम् ।

प्रक्रान्तं स्वयमथ युद्धमार्षभिभ्यां वीराभ्याममरवरा निरीक्ष्य सर्वे ।
विश्वस्य प्रलयभयात् प्रकम्पमाना आजग्मुर्नभसि समुल्लसद्विमानाः ॥२५॥

द्वयोरार्षभ्योः इन्द्रेण सह संवादः—

गीर्वाणैर्विजयगिरं पुरो गिरद्भिः संयुक्तं सुरपतिरस्य दृष्टिसंज्ञम् ।
संप्राप्याऽगददुचितं चितं च युक्त्या सद्वाक्यं भरतनृपाऽऽन्तरप्रशान्त्यै ॥२६॥

भोश्चक्रिन्निखिलमिलातलं विजित्य संग्रामं निजभुजखर्जभञ्जनाय ।
आरिप्सुः[1] सह लघुबन्धुना त्वं किं लज्जां परिरभसे स्वयं न देहे ॥२७॥

स्मित्वोचे भरतमहीमहेन्द्र इन्द्र ! त्वं स्वर्गाधिप ! न हि वेत्सि कार्यतत्त्वम् ।
स्वभ्रात्रा कलहमहो ! कदापि कोऽपि किं कण्डूकलितकरो नरः करोति ॥२८॥

चक्रं तु प्रविशति नैव शस्त्रगेहे शान्तत्वे मन इव दुर्मदेऽजितेऽस्मिन् ।
आत्मत्वं सुविमलकेवलौजसाऽऽढ्यं विश्वान्तर्मम च पिपीयमानमस्ति ॥२९॥

तच्चक्रं झटिति निवेश्य शस्त्रधाम्नि मद्भ्राता मयि नमतादथैकवारम् ।
वेगेनाऽपहरतु सर्वकार्यचक्रं भूपीठे भवतु विभुस्ततः स एव ॥३०॥

श्रुत्वेदं भरतवचः सुनीतिपूतं स्वर्नाथो लघुनृपभाङ्गजं समेत्य ।
नाभेयाङ्गज ! जय वीरवारवर्य ! व्याहृत्येत्यवदद् हृदो मुदर्थम् ॥३१॥

---

१ आरम्भं कर्तुमिच्छुः ।

मूमीन्द्र ! प्रणयपर ! त्वमग्रजं स्वं दर्पेण द्रुतमिह किं न सत्करोषि ।
संरंभो भरतमभिप्रयाणकस्य पश्य स्वे मनसि शुभो विभाति किं भोः ! ? ॥३२॥
अथ श्रीभरतविभुः प्रयाणमेकं त्वद्भ्राता स्वयमयमिच्छतीह पूज्यः ।
प्रीत्याऽस्मिन् विनयपवित्रितां सुकीर्तिं स्वामित्वं सकलभुवश्च संगृहाण ॥३३॥
दैत्येन्द्रं गरिमगभीरधीरसेनानेताऽसौ स्मयमयहास्यगर्भमूचे ।
धृष्टत्वाद् यदि मम सत्कृतिं नतिं वा गृह्णीयादयमथ तत् करोमि वेगात् ॥३४॥
इंद्रोऽहं भुवनजयी घर्द्धलबाहुरित्युच्चैर्निनमयिषुर्बलादसौ माम् ।
एनं न त्रिदिवपते ! ततो नमामि गर्वीये नरि विनयो नयोदितो न ॥३५॥
अस्यागाऽप्यथ न विनष्टमस्ति किञ्चित् तद्यातु स्वपुरमसौ निवृत्त्य वेगात् ।
त्वद्वाक्यादहमपि संगरमतिज्ञां मुक्त्वेमां त्रिदिवपते ! ध्रुवं निवर्ते ॥३६॥
यद्योऽन्यान् मदरहितान् विधाय भूपान् उन्मत्तो मदगजवद् गजान् समग्रान् ।
निर्निद्रीकृतमथ मामनेकपारिं यद् योद्धुं त्वभिलपतीह तद् मुमूर्षुः ॥३७॥
त्रैलोक्योत्तममभिनम्य तातमीशं सत्यत्वात् समदमिदं मदुत्तमाङ्गम् ।
नैवाऽन्यं नमति परत्र चेहलोके को हित्वा मुकुटमहो ! घटं बिभर्ति ? ॥३८॥
विस्मित्याऽवदद्थ वासवो महीशं वैपम्यं विपुलमते ! मतेर्ममाऽत्र ।

१ पद्धलं–बलिष्ठम् । २ नमयितुमिच्छुः । ३ अनेकपारिं सिंहम् । ४ तातम्–ऋषभदेवम् । ५ समदं–मदसहितम् ।

न्यायस्थो भरतनृपोऽस्ति चक्रवर्त्यः त्वं मानिन्! विनयपरोऽस्य शिक्षणीयः ॥३९॥
दृग्-वाग्भ्यां भुज-युग-मुष्टि-दण्ड-युद्धैर्योद्धव्यं न तु निशितायुधैर्युवाभ्याम्।
अत्रार्थे ननु शपथो युगादिभर्तुरित्येतौ सुरपतिरुचिवान् नभःस्थः ॥४०॥
एताभ्यामिति वचने प्रतिश्रुतेऽन्यान् वीरांश्च प्रथमजिनाज्ञया निषिध्य।
अङ्गाङ्गिप्रधनकृते तयोः सुरेन्द्रश्चक्रेऽस्यां भुवि सलिलप्रसूनवर्षम् ॥४१॥

अक्षियुद्धम्—

वीरेन्द्रौ मदहृढमानसौ समानौ तावब्धी इव सुभृतावनिमितोर्मी।
आयातौ रणविधये रणोर्वरायां द्वौ सूर्यौ नभसि महःप्रमित्सयेव ॥४२॥
तावुच्चैर्भृकुटियुगौ स्थिराग्रतारौ गौराङ्गौ दृढमहिमोच्चवीरलक्ष्म्योः।
प्रासादाविव नवतोरणौ विनीलपाश्चालीयुगलयुतौ कृतौ सुवर्णैः ॥४३॥
देवानामवनिभुजां च लोचनौघैर्दृग्युग्मं युगपदपि श्रितं तयोस्तत्।
नैवाल्पं किमपि विवेद भारखेदं दुष्प्रापात् सदृशसंगमादिवाऽत्र ॥४४॥
भाव्येषोऽप्रतिदर्शनोऽस्मदग्रे तत् तस्मिन्नपि समशीर्षिकां धरासु (?)।
इत्यन्तर्भरतदृशौ विचिन्त्य बाष्पं संवेगादिव गिरतः स्म संनिमिष्या ॥४५॥
निर्विघ्नं ननु बहलीश्वरेण राज्ञा प्रत्यक्षं त्रिभुवनवासिनां जितं भोः!।

१ निशितम्-तीक्ष्णम्। २ प्रधनम्-युद्धम्। ३ सुभृतौ अनिमितोर्मी-इति पदच्छेदः। ४ प्रमातुमिच्छा प्रमित्सा।

इत्युच्चैरमरगिरः स्मितोज्ज्वलाभाः संरंभान्नभसि भृशं विलेसुरासु ॥४६॥

स्वरयुद्धम्—

शक्रीशो नयनजितोऽपि बाहुभूपं गर्वोच्चस्वररणहेतवे जवेन।

४ आह्वयतेऽनुमतेनोन्मृगेन्द्रनादं बाधिर्यप्रदमथ नाकि-नाग-नृणाम् ॥४७॥

स्वस्वेषु त्रिभुवनेषु बाहुवीरः सिंहस्य ध्वनितमप्रथत् प्रतापी।

एतेनाऽभवदचला चलाऽचलाग्राण्यापेतुः किल ककुभामिभा मुमूर्छुः ॥४८॥

मुष्टियुद्धम्—

८ चक्रेशो वचनरणेन निर्जितोऽपि धैर्याग्र्यः किल बहलीश्वरं स्वयं सः।

आह्वास्त द्रुतमथ पुष्टमुष्टियुद्धे मुञ्चेयुः किमवचनैं रणं भुजालाः ॥४९॥

आस्फाल्य स्फुटमवनीभुजौ भुजौ स्वावुत्पाट्योत्कटतरमुष्टिमेकहस्तम्।

शोणाक्षौ पदपरिकम्पभूमिपीठौ दिग्नागाविव कुपितौ दधावतुस्तौ ॥५०॥

१२ यत्पाणिः सकलदलेन नाम्यते न तस्योच्चैर्भरतपतेस्तु मुष्टिसृष्टेः।

ग्रीवाङ्घ्रिर्विगतमनाः शिरो धुनानः संरेजे मुदित इव प्रहारतोऽस्मात् ॥५१॥

तां मूर्छा द्रुतमवमत्य बाहुराजश्चक्रीशं पटुरवधी स्वमुष्टिनैषः।

---

१ विलासं चक्रुः। २ अचला पृथ्वी। ३ अचलाग्राणि गिरिशिखराणि। ४ अवचनैः—निन्दितवचनैः। ५ बाहुबलाः। ६ आस्फाल्य। ७ रक्तनेत्रौ। ८ ग्रीवाया ऊर्ध्वभागे—भाषायां 'डोक उपर'।

हन्ति स्म स्वभटविलोचनाश्रुनीरैः सार्धं सोऽपतदहहा ! बलस्य गर्वः ॥५२॥

श्रीखण्डद्रवनिवहैरखण्डभक्तिव्यक्तिस्तं प्रगुणयति स्म बाहुवीरः ।
मात्सर्येऽप्यमलतरः कुलस्य भावः स्यादग्नाविव रत्नकम्बलस्य ॥५३॥

दण्डयुद्धम्—

आक्षेपादतिखररोपरूक्षवीक्षौ दोर्दण्डस्थितदृढदण्डतः प्रचण्डौ ।
द्वावेतौ भुवनभयंकरौ मिथोऽपि गर्जन्तावथ समधावतां जवेन ॥५४॥

तत्र श्रीभरतनृपोऽथ बाहुभूपं त्वाजानु प्रकटविभोऽपि वज्रमूर्तिम् ।
शीर्षस्योपरि घनघातपातनेन वेगेनाऽभिधरणि मज्जयांचकार ॥५५॥

एकाङ्कादिव स इलातलात् सहेलं कृष्ट्वांऽह्री त्वरितमखण्डचण्डदण्डात् ।
चक्रीशं शिरसि निहत्य कण्ठदघ्नं भूपीठे हठकठिनो न्यमज्जयत् तम् ॥५६॥

दैवं हाऽस्त्विति सुभटा अपि ब्रुवन्तः शस्त्राणि स्वभुजमदैः समं विमुच्य ।
कुद्दालान् जगृहुरथेशरत्नलोभात् मान्यः स्यात् क्वचिदपि कार्यतो हि हीनः ॥५७॥

आकृष्ट (ष्टः) शिशिरजलैर्विलीनमूर्छश्चक्रीशः कथमहमेप वाऽत्र भूमौ ।
इत्यन्तर्भरतपतिः स संशयानश्चक्रेण श्रित उरुभानुना कराब्जे ॥५८॥

बाहुबलिघाताय चक्रक्षेपः—

१ रत्नकम्बलं हि तापसन्निधाने शीतलम्, शीतसन्निधाने च उष्णं जायते इति श्रुतिः। २ पार्श्वे। ३ विसालकिरणेन।

चक्रेशो निजमनुजं जिघांसुराशुकोपोऽयं स्फुटमिव पिण्डितं स्वहस्तात् ।
ज्वालालीजटलमिदं मुमोच चक्रं कल्पान्ताऽम्बुधर इवाऽशनिं प्रगर्जन् ॥५९॥

तच्चक्रं पथि शर-शक्ति-कुन्त-खड्गै राजन्यैरपि परितः प्रहण्यमानम् ।
संप्रासं लघु लघुकार्षभेः समीपे किं मूर्तो भरतनृपप्रताप एषः ॥६०॥

चक्रं विफलम्—
षड्खण्डावनिविजयी ममाऽपि नेता श्वेताभ्यां जित इति दृष्टिदोषहृत्यै ।
चक्रं तत् खलु बहलीश्वरस्य बाह्वोरात्मानं भ्रमणपदे चकार हर्षात् ॥६१॥

बाहुबलिना ऊर्ध्वीकृतो मुष्टिः—
चक्रेऽस्मिन् गतवति चक्रवर्तिपाणौ रोषेणाऽरुणनयनो दृढाग्रमुष्टिम् ।
दोर्दण्डं त्वरितमुदस्य बाहुयोद्धाऽधाविष्टाऽग्रजमपि बान्धवं जिघांसन् ॥६२॥

हा ! चक्री हत इति वादिभिः सुरेन्द्रैर्यो रुद्धो न खलु तमेव बाहुवीरम् ।
तज्जन्मा ललिततरो विवेक एको रुद्ध्वाऽस्थादिति बली सुतोऽपि (?) ॥६३॥

बाहुबलेर्विवेकोद्गमः-वैराग्यं च—
लोभे-र्ष्यादिभिरवजित्य यो विचेतीचक्रे तद्गतपरमात्मधैर्यं इत्थम् ।

१ अनुजं लघुबन्धुम् । २ अशनिं विद्युतम् । ३ शीघ्रम् । ४ नेत्राभ्याम्-नेत्रयुद्धे चक्रस्वामी भरतो नेत्राभ्यां जित इति । ५ अपूर्णं प्रतीयते, नातो विशदीकर्तुं शक्यते ।

एनं तं किमहह हन्मि मुष्टिनाऽहं हन्तव्या न विगतचेतना धीरैः ॥६४॥
स्वगोत्रे किल न हि बुद्ध्यते विनाशो मर्यादामिति न मुमोच चक्रमेतत्।
एतस्मादपि भृशहिंस्रतो नृशंसः स्वं बन्धुं भरतमहं रुपा जिघांसन् ॥६५॥
मद्भ्राता किमु विरुणद्धि मां कदापि लोभाद्यैर्यदि न विचेतनीकृतः स्यात्।
एतांश्च ध्रुवमपराधिनोऽन्तरारीन् जेष्यामि स्वयमिह जैनदीक्षयाऽहम् ॥६६॥

बाहुबलिना केशलोचः कृतः—

इत्यन्तर्विमलतरः सुधीः सुधीरो निश्चित्योद्धृतमुष्टिनाऽमुनैव बाहुः।
मौलिस्थान् द्रुतमुदमूलयत् समूलान् मूलानि स्वभवतरोरिवैप केशान् ॥६७॥

लघुकान् कथं नमामि?—

एषोऽहं न हि विनतोऽग्रजस्य बन्धोर्ज्ञानाढ्यानपि लघुकान् कथं नमामि?।
तत्तुल्यो यदि च भवामि केवलर्द्ध्या तत् तातान्तिकमुपयामि नान्यथाऽहम् ॥६८॥
कृत्वेति स्वमनसि निश्चलां प्रतिज्ञां योगीन्द्रो विमलदनङ्गसंगरङ्ग×[4]×।
समधित सत्समाधिमाधि-व्याधिद्रूत्खननकुठारकं कठोरम् ॥६९॥
धावित्वा प्रतिभरतं प्रकोपमल्लं हन्ति स्म स्व-परगतं य एक एव।
योऽक्षीणं व्यधित कुलाय कीर्तिदानं सोऽख्यात् त्रिभुवनवीरवीरमुष्टिः ॥७०॥

१ मूढाः। २ हिंस्रम्-हिंसाकरणस्वभावम्। ३ बाहुबलिः। पु० नास्ति। ४ पुस्तके न स्पष्टं प्रतीयते।

॥ ७१ ॥

इत्येवं गुणरसुनः प्रमोदसंगी संगीतं शुचि विरज्य तत् पुरस्तात् ।
सौधर्मं समगमद् देवराजः संयुक्तः सकलसुरैः प्रहृष्टचित्तैः ॥७१॥

। इति श्रीबाहुबलिमहिमोदयः ।

भरतस्य विमर्शः—

परिहृताखिलशस्त्रमसुवगं स्वमनुजं विगलद्विषयेन्द्रियम् ।
भरत एप विलोक्य पुरः स्थितः प्रविममर्श सुविस्मितदुःखितः ॥७२॥

विरहकृतसकलैरपि बान्धवैर्धिगिदमस्तु सुचक्रिपदं मम ।
ननु मधूकतरोः फलजन्म किं सरसपत्रविनाशि न निन्द्यते ? ॥७३॥

बलिभुजैकदृशाऽपि निजं बलिं परिजनेन विभज्य विभुञ्जता ।
विहगकेन नु नेत्रशतायितं तदहमस्य समोऽस्मि न संप्रति ॥७४॥

मम विभुः स युगादिविभुर्भवेदिति वदन्तममुं प्रजिगीषता ।
न गणितो जनकोऽपि मया ततो दुरिततोऽस्तबलो विजितो ध्रुवम् ॥७५॥

विजितवान् भुवनं कृतकेवलोत्सव ! भवान् सुकृतादहमग्रतः ।
ऋषभभक्तममुं परिखेदयन्–असुकृतिश्च श्रितवांश्च पराभवम् ॥७६॥

---

१ स्वकीयम्–लघुबन्धुम् । २ बलिभुक् काकः । ३ शतं नेत्राणां यस्य असौ नेत्रशतः–तद्वद् आचरितम्–एकदृशाऽपि काकेन सपरिजनं भोजनं कुर्वता नेत्रशतायितम् । ४ प्रजेतुम्–इच्छता । ५ नास्ति सुकृतिर्यस्य ।

॥७१॥

स सुचिरं शुचिरन्तरिलापतिः समनुचिन्त्य घनाश्रुविमिश्रदृक् ।
सपदि बाहुबलिं प्रणिपत्य तं विनयवान् गदति स्म सगद्गदम् ॥७७॥

भरतप्रार्थना—

४ शपथलोपिनि पापिनि तापिनि त्वमकरो रणे ऊर्ध्वंकरो दयाम् ।
अयि मयि प्रविधाय तथाऽद्य तां नरपतित्वमलंकुरु निर्मम ! ॥७८॥

परिहृतस्य समग्रसहोदरैः सुकृतगात्रमिदं मम सांप्रतम् ।
अपयशोरिपुभिः परिवेष्टितं त्वदितरेण न बान्धव ! रक्ष्यते ॥७९॥

८ ऋषभनन्दन ! वीरशिरोमणे ! कुचरितानि विपद्य नु चक्रिताम् ।
श्रय कृपाश्रय ! दासमहं श्रये तव बलेन हि बाहुबले ! जितः ॥८०॥

त्वमथ चैकवचोऽमृतबिन्दुना नुदं तमोः तनुतापममुं मम ।
इति विलापपरं तमिलापतिं निजगदुः सचिवाः शुचिवाचिनः ॥८१॥

१२ सचिवानां वाणी— त्वदनुजो मनुजोत्तम ! निस्तमःपदमदः सुयतिव्रतमाश्रितः ।
भवपरिभ्रमदं प्रसरन्मदं श्रयति चक्रिपदं न शिवेच्छया ॥८२॥

भरतवासव ! संपिहिताश्रवस्तव सहोदर एष महामुनिः ।

---

१ अन्तःशुचिः । २ सप्तमीएकवचनम्, पुस्तके तु 'रणस' इति दुर्गम् । ३ दूरीकुरु । ४ शुचि वक्ति इति शुचिवाचिन् । ५ तमोहीनं पदम् ।

स्वहृदभिग्रहयन्त्रितविग्रहो न हि महाऽऽग्रहितोऽपि वदत्यहो ! ॥८३॥
इति निशम्य स भारतभूपतिर्व्रतविभौरतमाह निजानुजम् ।
शिशिरयाऽथ रयान्निजया दृशा मुनिवर ! स्पृश मां प्रशमस्पृहा ॥८४॥

बाहुबलेः प्रसादः—

नवविभेव विवेकविवस्वतो नयनकान्तिरनेन निवेशिता । भरतभूमिधरस्य मनोगुहामकृत दुःखतमोरहितां क्षणात् ।
विगतसर्वधनोऽल्पधनादिव गलितविघ्न इवाऽल्पपदस्मृतेः । अनुजलोचनगोचरमात्रतः प्रमुमुदे भरतो व्रतिबान्धवः ।

भरतकृता बाहुबलिस्तुतिः— अथ मुनीश्वरमेनमनेनसं भरत एष मुदां भरतैस्ततः ।
विनयवान् नतवान् नुतवानयं स्वमतितः प्रवितत्य च वाङ्मयम् ॥८७॥

बाहुबले राज्ये अन्यराजस्थापना-भरतप्रत्यावर्तनं च—

इह च सोमयशाः प्रसरद्यशाः प्रचुरशौर्यमहा महतो यशोत् (?) ।
भरतभूपतिना बहलीपतिः स विहितोऽवहितोऽवनिपालने ॥८८॥
बलभरैर्दधतीं पृथुवेपथुं लघुकरग्रहवाननुरागिणीम् । उपबुभुक्षुरिलां भरतोऽविशत् स्वनगरं मणिचित्रगृहान्तरम्
यदनिविश्य न या (?) बुधमन्दिरं स किल बाहुबलिः परिखेदतः ।
धिगिह वक्रचरित्रमिदं ममेत्यजनि चक्रमहो ! प्रशमाश्रितम् ॥९०॥

---

१ व्रतस्य विभायां रतम् । २ अपापम् । ३ भरः-समूहः । ४ स्तुतवान् । ५ अकारान्तोऽपि 'यश' शब्दो भवेत् क्वचित् । ६ वेपथुः-कम्पः ।

अधिबलेऽपि हि वाहुवलौ व्रतं श्रितवति प्रतिवुद्धमिव स्वयम् ।
प्रविशति स तथा स्वगृहे यथा निरसरन्नहि चक्रमथैकदा ॥९१॥
अथ स पोडशयक्षसहस्रकैर्द्विगुणसंख्यनृपैश्च निपेवितः। शुचिगुणाभिरितो द्विगुणाभिरप्यनुदिनं प्रमदाभिरमोद्यत
चतुरशीतिमिताद्भुतवारणा-ऽश्व-रथलक्षदलैर्भटकोटिभिः ।
नवतिपद्प्रमिताभिरथो पुरैर्द्वियुतसप्ततिसंख्यसहस्रकैः ॥९३॥
सहितमद्भुतचक्रिपदं श्रितो नवनिधान-चतुर्दशरत्नभृत्।स्वसमयं समयन्तमयं तदा रसमयं न विवेद रसापतिः
इतश्च-वाहुवलितपः— हिम-समीरण-रेणु-महातपा-ऽम्बुद-लता-ऽहि-खगाश्रयदुःखदैः ।
स ऋतुभिः सुमना न मनाक् कदाप्यचलि वाहुवलिर्वलिनो व्रतात् ॥९५॥
किमु वशी स्ववशीकृतवानमून् पडपि पड्रिपुजैत्रमहाव्रतः ।
सखिभिरेभिरथारिचयं निजं मुनिरजारयदाशु +³+ तत् ॥९६॥
वाहुवलेः तपसा श्रीऋपभस्य ममता— जितपडंशकभारतवर्पजित् ऋतुयुतं च स वर्पमिदं मुनिः ।
निरशनो जितवान् कथमन्यथा निजपितुर्लभतां ममतां मताम् ॥९७॥
इह युगादिजिनोऽस्य सहोदरीयुगलवाक्श्रवणाद् मदनाशनम् ।

---

१ इतः । २ संगच्छमानम । ३ पु० खण्डितम । ४ जितपडंशकभारतवर्पो हि भरतः, तं जयति इति-जितपडंशक-भारतवर्पजित्-वाहुवलिः-तेन भरतस्य पराजयात् । ५ अशनरहितः-उपवासी । ६ श्रीऋपभदेवस्य-अधस्तने श्लोकद्वये सा ममता परिस्फुटा । ७ मदस्य नाशनम् ।

विदितवान् समयं च सुकेवलावरणकर्मविनाशकरं तदा ॥९८॥

श्रीयुगादिनिदेशेन बाहुबलिभगिनीद्वयेन 'अवतर आशु गजात्' इत्येवं बाहुरुपदिष्टः—

अथ युगादिजिनेशनिदेशतः स्वसृयुगं समुपेत्य तदन्तिके।
अवतराऽऽशु गजादपि बान्धवेत्यवदद्दुचगिरा युगपत् तदा ॥९९॥

प्रमुदितश्रवणस्तदुदीरितश्रवणतः श्रमणः स गतश्रमः।
हृदि विचारयति स्म सविस्मयः किमु मम स्वसृवाक्यमिदं मृदु ॥१००॥

न यदतोऽनृतमादिजिनेशितुर्दुहितरौ हितरोपितमानसे।
न हि मतंगजमस्मि च संश्रितस्तदनयोर्गदितं किमु वेद्मि नो ? ॥१०१॥

बाहुबलिविचारणा, तद्-माना-ऽपगमश्च— अहह ! तत्त्वयुतं च वचोऽनयोरहमवैमि बहिर्मुखधीर्युतम्।
यदिह मानमतंगजतोऽद्य मां द्रुतमिमे अवतारयतो हि ते ॥१०२॥

शिवपथस्य हि यः स्वकनामजाक्षरयुगेन करोति निषेधनम्।
तमविमान्य नु मा-नरिपुं कुधीरहमगां स्वपितुर्नतये न ही ॥१०३॥

भरतयुद्धमपास्य लघूनपि व्रतगुरून् शमिनः स्फुटकेवलान्।
स्वमनसैव विकल्प्य विरोधयन्-अहमनल्पमदादनृतंव्रतः ॥१०४॥

---

१ 'वदतः' तृतीयपुरुषद्विवचनम्। २ हिते रोपितं मानसं याभ्यां ते-। ३ वचसो विशेषणमेतत्। ४ प्रथमाद्विवचनम्।
५ 'मा-न' शब्दे 'मा'कार-'न'कारौ द्वौ अपि निषेधवाचकौ। ६ असत्यव्रतः।

सपरिवारयुगादिजिनानतेः सफलयामि निजं भवमद्य तत् ।
इति विनीतमतिः स यतिर्जवादचलदुच्चपदः किल यावता ॥१०५॥

तावत्-बाहुबलेः केवलम्—

प्रशमसौम्यतमः स रजस्तमश्चयमयं परिहाय मनो मुनिः । भृशमलोकसुलोकविलोकनप्रदमवाप महः किल केवलम् ॥१०६॥

सुराणां स्तुतिः— उदनदन् दिवि दुन्दुभयोऽभितः समभवन् कुसुमोत्करवृष्टयः ।
उपययुर्नवकेवलिनं मुनिं सुमनसः प्रमदात् प्रणिनंसवः ॥१०७॥

विमलवीरसुशान्तरसां स्तुतिं प्रकटयद्भिरथो दिविपद्गणैः ।
परिवृतो विवृतोत्सवसंमदैर्मुनिरयात् स रयात् प्रभुसंनिधौ ॥१०८॥

सुरवधूकृतमङ्गलगीतिको जिनपतिं च परीय विभावसुम् ।
मुनिवरः स उवाह सकेवलश्रियमिह स्फुटमौक्तिक(सत्) प्रभाम् ॥१०९॥

यदि न के बलिनोऽप्यभवन् समास्तदिह केवलिनोऽस्य भवन्त्वमी ।

---

१ रजसाम्, तमसां च चयमयं मनः । २ लोका-ऽलोकविलोकनकुशलम्-इति । ३ प्रणन्तुम्-इच्छवः-नम्राः सुमनसः-देवाः, सज्जनाश्च । ४ दिविषदो-देवाः । ५ लोके हि विभावसुम्-अग्निम् परिक्रम्य विवाहो वर-वध्वोः प्रसिद्धः-एवम् अत्राऽपि बाहुबलिः, विभावसुम्-केवलज्ञानरूपविभायुतं श्रीऋषभं परीय-प्रदक्षिणीकृत्य केवलेन सहितां श्रियम्-मुक्तिरमणीम् उवाह । श्रीऋषभपक्षे-विभा-शब्दः केवलज्ञानप्रभावाचकः, वसु-शब्दश्च धनवाचकः । ६ पूर्वं तावत् अस्य बाहुबलेः समाः-समानाः केऽपि बलिनो न अभवन् । परन्तु इह अस्मिन् काले (बाहुबलिकेवलितासमये) अस्य बाहुबलेः समानाः अमी केवलिनो भवन्तु-इति हृदयम् । अत्र ब-वयोरैक्यं नेयम् ।

इति वदत्सु सुरा-ऽसुर-किंनरेष्वधिजगाम स केवलिपर्षदि ॥११०॥
सकलतापहरं प्रशमात्मकं समयतो बहुतः सरसं मुनिः ।
अनुदिनं कवलोचयमेकशः स सततं बुभुजे त्वथ केवलम् ॥१११॥
[प्रथमतीर्थंपतेः स्फटिकाचले गमनम्—] सकलकेवलिलोकविदूरितामलमनोऽणुगणैरिव निर्मिते ।
४ प्रथमतीर्थपतिः समयासरत् यतिततिप्रयुतः स्फटिकाचले ॥११२॥
[प्रथमतीर्थंपतिदेशना—] विविधशालसुशालितमद्भुतं सदुपदेशसदो द्युसदो व्यधुः ।
चतुरवाक्चतुर्मुखरूपभागिह दिदेश स धर्ममधर्मभित् ॥११३॥
८ [तदा च-भरतदानम्—] प्रभुसमागमनं वदतां नृणामिह वितीर्य गिरं तमवाप सः
दशशतद्विकसार्धमिदं तदा कनककोटिचयं भरतो मुदा ।
अथ यथाविधिनैप परीय तं प्रथमतीर्थंपतिं भरतेश्वरः ।
समभिनम्य विधाय च संस्तुतिं सह सहस्रदृशा समुपाविशत् ॥११५॥
१२ [भरतो जगाद—] भरतचक्रपतिर्गुरु-देशनामिह निशम्य गतच्छलवत्सलः ।
निजसहोदरभोगविमुक्तये सपदि सोऽपि जगाद जगत्पतिम् ॥११६॥
प्रभुरभापत चक्रपते! भव-प्रभवभङ्गुरभोगभरे रतम् ।

१ केवलिनां हि मनांसि निरुपयोगीनि-अत एव तानि तैर्विदूरितानि, तेषां केवलिविदूरितमनसाम्-अणूनां विमलत्वेन तैरणुभिरिव निर्मिते अत एव विमले स्फटिकाचले। २ द्युसदो देवाः। ३ अधर्मं भिनत्ति-इति। ४ गिरं-वाणीम्। 'तम्' इति "लिङ्गमतन्त्रम्" इत्यनेन 'गिर्' शब्दस्य पुंलिङ्गत्वेन, अन्यथा 'ताम्' इति भवेत्। अथवा 'तम्' इति कोटिचयस्य विशेषणम्, गिरः-अन्तम्-'गिरन्तम्' इति समस्तं वा वाच्यम्। ५ इन्द्रो हि सहस्रदृक्-इति पौराणिकाः।

निजमनोऽपि विहाय सुसाधवो ह्यभिलपन्त्यपरं न तु भोजनात् ॥११७॥

[भरतो भोजनमानयत्—] इति निशम्य दृढप्रतिभो जनप्रभुरिहाद्भुतभोजनमानयत्।
अथ जगाद विभो ! मम बान्धवान् यतिवरान् विसृजाऽशनहेतवे ॥११८॥

जिनवरो न्यगदन्नवभोजनं सुयतिनामिह कल्पत एव न।
नृपतिपिण्ड[1]-निमित्तकृता-ऽऽहृतैस्त्रिभिरतिप्रकटैर्गुरुदूपणैः ॥११९॥

इति विभोर्वचनादतिदैन्यभाक् मुपितवद्[2] भरतोऽजनि चक्र्यपि।
स्वविभुता स्वजनानुपयोगिनी सुमनसां सुखयेन्न मनांस्यहो ! ॥१२०॥

[सुरपतिरवदत्—] सुरपतिर्दृढधार्मिकबान्धवेऽसुखनिराकृतयेऽस्य तदाऽवदत्।
सुयतिनां हि भवेयुरवग्रहा इह कियन्त इति प्रवद प्रभो ! ? ॥१२१॥

[अवग्रहाः पञ्च—] प्रभुरवोचत भारतभूतले प्रथमकल्पपतेरथ चक्रिणः।
नरपतेर्गृहिणः स्वगुरोरिति भवति पञ्चविधोऽयमवग्रहः ॥१२२॥

[सुरपति-जनपतिभ्याम्-अवग्रहदानम्—] इति तदा गदिते प्रभुणा दिवःप्रभुरवग्[3] जगदीश्वर ! नित्यशः।
विचरणाय मया यतिनां ददे ध्रुवमवग्रह[4] एप सुभारते ॥१२३॥

भरतभूपतिरप्यतिहर्षतः प्रथमतीर्थपतिं प्रणिपत्य सः। वसतये यतिनां प्रददौ तदा भरतभूमितले स्वमवग्रहम्

---

१ नृपातिपिण्डो-राजान्नम्। निमित्तकृतम्-साधून् उद्दिश्य हिंसादिकरणतो यद् भोजनादि कृतं तत्। आहृतम्-साधूनां भक्षणाय तेषां संमुखम्-यद् आनीतं तत्-एतत्त्रयविशेषणविशिष्टं भोजनं हिंसादिअनेकदोषजनकत्वेन न श्रमणानां कल्पते-इति। २ लुण्ठितवत्। ३ दिवःप्रभुः-इन्द्रः। ४ अवग्रह-शब्दः अनुज्ञा-पर्यायप्रायः।

कमहमद्य सुरेश्वर ! भोजये ? भरतभूपतिनेत्युदिते तदा ।
प्रतिजगाद दिवोऽधिपतिर्गुणाधिकजनेभ्य इदं प्रवितीर्यते ॥१२५॥

[जिनविहारः-भरतनगरीगमनं च—] इति निगद्य विभुं प्रणिपत्य च त्रिदिवमापदसौ त्रिदिवप्रभुः।
व्यहरदन्यत एष जिनेश्वरः स भरतस्तु निजां नगरीमगात् ॥१२६॥

[भरतः सुचिन्तितवान्—] अथ पुरं समुपेत्य सुचक्रभृत्-हृदि सुचिन्तितवान् सुकृतोत्सुकः ।
सुमुनयो न नयन्ति ममान्नमप्यथ गुणैर्भुवि को भविकोऽधिकः ॥१२७॥

अविरताद् मदमी प्रवरा जिनानुगहृदो विरताऽविरता नराः ।
अहममीषु सुवत्सलतां दधत् भुवि भवामि कृतार्थधनोऽधुना ॥१२८॥

[भरतेन साधर्मिकेभ्यः उक्तम्-मम गृहे भोजनं विधीयताम्—]
स भरतः सुकृतैकरतः कृती प्रमदतस्त्विति संसदि संस्थितः ।
अविचलान् सुकृती भविनो जनान् समनुहूय स भूयस इत्यवक् ॥१२९॥

ननु कृषिप्रमुखा निजजीविका अपि विहाय गृहे मम भोजनम् ।
इह भवद्भिरहो ! प्रविधीयतां सततधर्मरतैरथ भूयताम् ॥१३०॥

[साधर्मिका वदन्ति—] अनुदिनोदयमेत्य ममाग्रतः प्रपठनीयमिदम्-'विजितो भवान् ।
बहुतरं च भयं परिवर्धते-तदिह मा हन मा हन भूपते !' ॥१३१॥

---

१ मम भरतस्य अन्नम् । २ मत्-मत्तः-मदपेक्षया इति-'मत्' पञ्चमीएकवचनम् । ३ महाहिंसादिभ्यो विरताः, अल्पहिंसादितो न विरतास्ते । ४ प्रभूतान् ।
५ एतत्-अनुकरणम्-अत एव न शब्दशास्त्राद् विरुद्धम् ।

स्वयमिति स्वविबोधविधित्सया[1] स भरतो भविकाननुशिष्टवान् ।
शिरसि चाऽक्षतवर्धनपूर्वकं तिलकतोऽनुवचश्च वदन्त्यमी ॥१३२॥

[भरतभावनम्—] इह समुद्रससौख्यसमुद्रजाद्भुतमदभ्रमिविभ्रमितान्तरः[2] ।
तदुदितं वचनं च निशम्य तत् प्रतिदिनं हृदि चिन्तितवानिति ॥१३३॥

अहह !!! केन जितो ? विदितं ध्रुवं दृढतरैः प्रतिघ[3]प्रमुखैरहम् ।
इह च तद्भयमेव विवर्धते तदथ जीवदया क्रियतां मया ॥१३४॥

इति स तद्वचनैः प्रकटीकृताद्भुतविवेकहुताशनहेतिभिः[4] ।
निर्जरजो[5] ज्वलयंस्तु कुसंगतं सुयश एव सुवर्णमथाऽतनोत् ॥१३५॥

सुकृतिनोऽस्य मुखेन्दुविलोकनात् शिशिरता शुचिता च भवत्यहो ! ।
इति विचार्य जना अतिदूरतोऽशनमिषाद्[6] वनिनो[7]ऽत्र समाययुः ॥१३६॥

[साधर्मिकपरीक्षणम्—] अथ विवेक्य-ऽविवेकिविवेचने निपुणधीभिरथो सचिवैरयम् ।
निगदितो भरताधिपतिः स्वयं प्रकृतवानिह तेषु परीक्षणम् ॥१३७॥

अणु-गुणा-ऽद्भुत-शिक्षणसद्गुणव्रतविदः शुचयः स्वसदा[8] त्रिधा ।
इति दशद्विकपुण्ड्रयुताः कृताः त्रिरथ तेन च काकिणिरेखिताः ॥१३८॥

[भरतेन विहिता वेदचतुष्टयी—] स भविनां स्वयमात्मसधर्मिणां प्रपठनाय च वेदचतुष्टयम् ।

---

१ विधातुम् इच्छया । २ मुदासहितः समुद्रः, सौख्यसहितः ससौख्यः, समुद्रजा लक्ष्मीः, तस्या अद्भुतमदभ्रम्या विभ्रमितम् आन्तरं यस्य सः । ३ प्रतिघाः क्रोधादिकषायाः । ४ हेतयः-शस्त्राणि । ५ निजं रजो मलः । ६ भोजनव्याजात् । ७ वनवासिनः । ८ स्वलक्ष्मया ।

सुकृतनिर्मलसूक्तसमन्वितं रचितवानथ भारतभूपतिः ॥३९॥
(अन्नसत्राणां विधापनम्—) तदनु सत्रगृहाणि बृहत्तराण्यतिसितानि तु पञ्च शतानि सः।
स्थपतिरत्नकरेण च पूर्वदिग्भुवि पुरात् नृपतिर्निरमीमपत् ॥४०॥
रसवतीः सरसाः स रसाधिपोऽद्भुतरसात् तरसा स्थिरसारवान्।
प्रमुदितोऽनुदिनं समभोजयद् विमलसत्रगृहेषु परीक्षितान् ॥४१॥
स्वपुरपश्चिमभूमितलेऽमलैर्मरकतैर्मणिभिः स महीमणिः।
सपदि पञ्चशतीं सितवासनो व्यरचयत्-शुचिसत्रगृहाण्यसौ ॥४२॥
इह सुषेणनृपः सुकुटुम्बिना विहितमन्नचयं सरसं नवम्।
विविधशाकविपाकविशोभितं तदितरांश्च जनान् समभोजयत् ॥४३॥
(पाठकशालिका व्यरचयत्—) नगरदक्षिणतो हृदि दक्षिणो मणिविनीलितपाठकशालिकाः।
व्यरचयद् विपुला बहुशोऽभितः स सुकृतैर्विततैर्बहुशोभितः ॥४४॥
भरतभूमिभुजा त्रिरुपोष्य सा हृदि धृता मुदितैत्य सरस्वती।
विमलवेदचतुष्टयपुस्तकैरभृत ताः किल पाठकशालिकाः ॥४५॥
(रचयति सुपौषधशालिकाः—) निजपुरोऽन्तरतस्तु महत्तराः कनकपिङ्गमणीभिरयं नृपः।
सुरसहस्रयुजः स्थपतेः करात् रचयति स्म सुपौषधशालिकाः ॥४६॥

---

१ सत्रगृहम्–अन्नगृहम्–"छत्रं" इति तामिलभाषायां प्रासिद्धम्। २ रसाधिपः–भूमिपतिः। ३ सिता पवित्रा वासना वृत्तिर्यस्य सः। ४ सरसम्–रसेन सहितम्, सुन्दरं च। ५ दक्षिणो दक्षः। ६ अभितः सर्वतः।

अथ चतुर्ष्वपि ते श्रुतपर्वसु प्रचुरपुण्यपवित्रतरा नराः। विदधतेऽमलपौषधशालिकान्तरमुपेत्य सुपौषधमद्भुतम्

(विवाहविध्यादि—) अथ विवाहविधिप्रमुखं नृपोऽखिलजनव्यवहारममुं तदा।
भविषु तेषु निरोपयति स्म सोऽतुलविवेकितया मुदितो भृशम् ॥४८॥

सुकृतलोभरतो[1] भरतोऽनिशं विविधदानमिति प्रददन् मुदा।
सकलशारदचन्द्रवदुज्ज्वलं निजयशः प्रततान विशारदः ॥४९॥

(अष्टमतीर्थपतौ शिवं गते जिनधर्मविहीनता—)
किल गतेऽष्टमतीर्थपतौ शिवं समभवद्–जिनधर्मविहीनता।
अथ तदन्वयिनोऽसुकृते रता अजनि वेदचतुष्कमतोऽन्यथा[2] ॥५०॥

(श्रीऋषभः स्फटिकपर्वते, भरतप्रणतिश्च—) ऋषभदेवजिनः समवासरत् स्फटिकपर्वतशृङ्ग इति श्रुते।
भरतचक्रपतिः समुपेत्य स प्रणतवान् बहुभक्तिभरानतः ॥५१॥

मुकुलितात्मकरः स्थितलोचनः प्रभुमुखाम्बुजतो मसृणो[3]ऽशृणोत्।
सकलकृष्ण–बल–प्रतिकृष्णयुग्–जिनप–चक्रिनृणां चरितान्यसौ ॥५२॥

इति विचित्रचरित्रसमुच्चयं भरत एष निशम्य पवित्रहृत्।
विपुलकौतुकसंकुलमानसो जिनपतिं प्रणिपत्य पुनर्जगौ ॥५३॥

(भरतप्रश्नः—) इह हि संसदि कोऽपि नरोत्तमः किमु जिनाधिप! योऽस्ति स पुण्यमान्[4]।
जिनप–चक्रप–कृष्ण–बलादिपूत्तमनरेषु भविष्यति तेषु यः ॥५४॥

१ सुकृतलोभे रतः। २ इदानीं यद् वेदचतुष्कं वर्तते तद् एतद् अन्यथाभूतम्–इति सांप्रदायिकाः। ३ स्निग्धः। ४ 'पुण्यवान्' इति शिष्टतरम्।

(श्रीऋषभमतिवचः, मरीचिपरिचयश्च—) भरतभूमिपतिः प्रभुणा तदा निजगदे जगदेकदयालुना ।
शृणु मरीचिरयं तव यः सुतो मम पुरोऽस्ति गृहीतमुनिव्रतः ॥५५॥
बहुभवस्थितिकर्मवशादसौ न परिपालयितुं व्रतमीशिता[1] ।
अथ बिभर्ति सदाऽऽतपवारणं स्फुटमिवाऽऽवरणं[2] परमात्मनः ॥५६॥
मम मनः सकषायमतस्तनूमपि[3] वृणोति कषायितवाससा ।
इह च दण्डित एव भृशं त्रिधा त्रिविधदण्डधरोऽस्मि बहिस्ततः ॥५७॥
न निजकीर्तिसुगन्धियुतोऽस्मि तत् स हरिचन्दनमण्डलमण्डितः ।
इति च वेषधरो भ्रमति क्षितौ भवति नैव गृही कुललज्जया ॥५८॥
श्रित इतीह नवीनमिव व्रतं भविजनैर्गदितोऽतिकुतूहलात् ।
वद जवाश्चिजधर्ममथाह सः प्रभुमुखाभिहितोऽस्ति नहीतरः ॥५९॥
अहमशक्त इह व्रतपालने मशकवद् दुरितैरबलो हृदि ।
इति विबोध्य ममान्तिकमानयत्ययमनेकनरान् विमलान्तरः ॥६०॥
(चक्रधरः, प्रथमकृष्णः, अन्तिमजिनश्च मरीचिः—)
त्वमिव चक्रधरः प्रियमित्र इत्यथ विदेहजमूकपुरीपतिः[4] ।
प्रथमकृष्ण इतो भरतावनौ स भविताऽन्तिमतीर्थकरो ध्रुवम् ॥६१॥
(भरतः सहर्षं वक्ति, नमति च—) तनय एष जिनो भविता ममेत्युदितसंमदमेदुरमानसः ।

१ ईशिता समर्थः । २ आत्मनः परम्-आवरणम् । ३ शरीरम् । ४ 'विदेहक्षेत्रे मूकपुरी नाम नगरी' इति जैनसंप्रदायः ।

मुनिमरीचिमुपेत्य परीय च[2]स्थित उवाच पुरो भरतेश्वरः ॥६२॥

व्रतमिदं गततीव्रतमत्र नो न च शरीरमिदं तव किंतु भोः !।
किल भवान् भविता यदपश्चिमो जिनपतिस्तदहं प्रणमाम्यथ ॥६३॥

(मरीचिमदः—) इति निगद्य नमस्कृतवत्यथो प्रभुसमीपगते भरतेश्वरे।
मुनिमरीचिरसौ चिरसौहृदान्निजपितुर्नमनान्मदवानभूत् ॥६४॥

अहमहो ! प्रियमित्र इति ध्रुवं सुभगभोगयुतः किल चक्रभृत्।
अहमहो ! प्रथमः पुरुषोत्तमः प्रभविताऽहमहोऽत्र जिनेश्वरः ॥६५॥

विहितविश्वविवेकविलोचनो मम पितामह आद्यजिनेश्वरः।
भरतचक्रपतिश्च पिता ततो महदलं सकलं विमलं कुलम् ॥६६॥

इति मरीचिमुनिर्विदुरोऽन्तराप्रमदतुन्दिलहृत् प्रननर्त सः।
अबलधर्म–शरीरजुषामहो ! रसवती सहते न हि चक्रगीः ॥६७॥

(भरताभिग्रहग्रहणम्—) प्रतिदिनं विदधामि जिनार्चनं ध्रुवमभिग्रहमेनमथाग्रहात्।
जिनपतेः पुरतो भरतोऽग्रहीद् विमलवासनया कलितस्तदा ॥६८॥

(श्रीजिनबिम्ब–स्थापना—) प्रथमतीर्थपतिं प्रणिपत्य सोऽवतरति स्म ततः स्फटिकाचलात्
सुरपतिर्भरताय च हर्षितो मणिमयं जिनबिम्बमिहार्पयत् ॥६९॥

---

१ परीय–परिक्रम्य। २ गता तीव्रता यस्मिन्–व्रते तत्।

अथ पुरं समुरेत्य स चक्रभृत्-निजगृहस्य पुरो मणिधामनि ।
अनुपमेयममेयमहाविभुं जिनविभुं तमतिष्ठिपदुच्चधीः ॥७०॥
अभिधितो भरतं किल जाह्नवी जिनवरार्चनसंगतमानसम् ।
(जाह्नवीसमागमनम्—) सभवगत्य भृशं मुदिता हृदि सुखशयानममुं समुपागमत् ॥७१॥
सरभसं भरतो भृशनीरजःकृतमनाः स्मितलोचननीरजः ।
(भरत-जाह्नवी-मियालापः—) परिचितां च पुरा स्वपुरीस्थितां त्रिपथगाममरीमवदन्मुदा ॥७२॥
बहुतरादयि ! ते दयिते ! कथं समयतो भवदागमनं वद ।
किमु सहास्यमिहास्यसरोरुहं त्वमृतवर्षि बिभर्षि दृशोर्मम ॥७३॥
इति निशम्य वचः प्रियतः प्रियं स्मितरुचा सह सा सहसाऽवदत् ।
अदयतो विषयोदयतो मया सुभग ! तत्र तदाऽसि निषेवितः ॥७४॥
नयनसोम ! ततो मनसो मम त्वमसि विस्मृत एव कदापि न ।
अथ भवन्तमवेत्य जिनार्चनाच्छिवपथे प्रभवन्तमिहाऽऽगता ॥७५॥
अजननाय पुनर्जननायक! सुजिननायकमर्चय भावतः।अहमहर्निशमेव निषेवणं तव करोमि यथा विपर्ययचिना।
(गङ्गाकारितं भरतस्नानादि—) इति स चक्रपतिः शुचिजाह्नवी-वचनतोऽनलसो नल-सोमरुक् ।

१ स्वापयाचक्राणः । २ रजोरहितम् नीरजः । ३ नीरजं-कमलम् । ४ बहुतराद्-अयि-इति विश्लेषः । ५ इह-आस्यसरोरुहम्-इति पदभङ्गः । ६ दया-रहिताद्-इति गम्यते । ७ जन्मरहितपदप्राप्तये । ८ आलस्यहीनः । ९ नलनरपतिवत् सोमरुचिः ।

उपसि देहविशोधनतो जवादधिजगाम सुमज्जनशालिकाम् ॥७७॥
स्फटिकपीठनिविष्टममुं स्फुरप्रभजलैः प्रविमर्द्य सुगन्धिभिः ।
गगनगा स्वयमेव सुरापगा स्नपयति स्म गतस्मयमानसा ॥७८॥
४ जलकणप्रचयोऽलकलालितो गुरुरुचे रुरुचेऽस्य शिरःस्थितः ।
विमलकामतरोरिव शीर्षगः सुकृतबीजगणोऽस्य विधायकः ॥७९॥
विमलगाङ्गजलं वलयाकृति स्वशिरसि प्रदधत् पृथुनि स्फुटम् ।
निजगदेऽविजनैरयमीश्वरः प्रियतमां प्रविभर्ति नु जाह्नवीम् ॥८०॥
८ धवलगाङ्गजलप्रतिमप्रभं प्रविदलत्कदलीदलकोमलम् । वसनयुग्ममढौकयदद्भुतं नृपपतेः परिधानकृतेऽथ सा ॥
(प्रहासादितीर्थेश्वराः समीयुः—)
श्रीमत्प्रहास-वरदाम-सुमागधाख्य-तीर्थाधिपाः स्वपरिवारयुताः समग्राः ।
चक्रेश्वरं च जिनपूजनबद्धबुद्धिं मत्वा समीयुरमलान् प्रविधाय वेषान् ॥८२॥
१२ (श्रीजिनप्रतिमास्नपनादि—) जन्माभिषेकविधिमानपरासु सर्वदेवाङ्गनासु विलसन्मधुरस्वरासु ॥
गीर्वाणवाक्यसुभगं शुभगन्धवारिपूरैर्जिनस्नपनमेष चकार चक्री ॥८३॥
आनन्दतस्तदनु नन्दनचन्दनेन कृत्वा विलेपनमसौ विगतावलेपः ।

१ प्रातः । २ पुस्तके प्रायः सर्वत्र एव 'स्फटिक' स्थाने 'स्फुटिक' पाठः । ३ अलकैर्लालितः जलकणसमूहः । ४ महत्यै शोभायै । ५ परोक्षकालरूपम्—'रुच्' धातोः । ६ विस्तीर्णे शिरसि । ७ स्वजनैः—इत्यर्थः । ८ प्रभासादितीर्थनामानि जैनसंप्रदायप्रसिद्धानि । ९ अवलेपो गर्वः ।

अष्टप्रकारमपि पूजनमष्टकर्मच्छेदाय तत्र विचकार स निर्विकारः ॥८४॥
आरात्रिकं दशविधत्रिकभाववेत्ता निर्माय स ध्रुवममायमना[1] द्युनाथः।
सन्माङ्गलिक्यविधये वरमाङ्गलिक्यदीपं प्रदीपसुकृतः कृतवान् कृतीशः ॥८५॥
(श्रीवीतरागस्तवनम्—) अथो चतुर्विंशतितीर्थराज-नामाक्षराद्यं भरताधिराजः।
श्रीवीतरागस्तवनं प्रधानं चक्रे विधायाऽऽत्म-मनोनिधानम् ॥८६॥

तथाहि: —

(श्रीऋषभ-महावीरौ— )

श्रीकेवलज्ञानविभैक..........धाम !
ऋते भवन्तं हृदयं दुरीहो[2]।
पद्मशत्रुजातादतिदुःखरा.........वी[3]
भक्याऽऽगतोऽस्मीत्यथ रक्ष वीर ! ॥ ८७ ॥

1 मायारहितमनोयुतः । २ भवन्तं विना दुरीहा दुष्टा ईहा आगत्य हृदयं चित्तम् समलीकरोति-अपवित्रीकरोति-इति भावार्थः। ३ अतश्चाहम्-षड्रिपुसमूहात्-क्रोधादिकषायवर्गात् त्रस्तः सन् अतिदुःखरावी अतिदुःखरोदनशीलः भक्त्या आगतः, अतो हे भगवन् ! वीर ! अथ रक्ष-इति तत्त्वम्।

श्रीअजित-पार्श्वनाथौ—

श्रीवीतरागादुभुतमोह-ता.....पा
४ असंशयं जग्मुरकर्म पार्श्व ! ।
जिन ! त्वदास्यांशुसुधानिपाना
तथा तव स्नात्रजलेन ना....थ ! ॥ ८८ ॥

८ श्रीसंभव-नेमिनाथौ—

श्रीमज्जिन ! त्वां हृदि दुःखदूने
संस्थाप्य यद्देव ! सुखीभवामि ।
१२ भक्तिर्ममेयं न तु काऽपि नाना-
वर्णा कृपा ते जयतीह नाथ ! ॥ ८९ ॥

१ श्रीवीतराग ! पार्श्व ! अद्भुतमोह-तापाः त्वदास्यांशुसुधानिपानाः सन्तः-असंशयं अकर्म-निष्क्रियतां जग्मुः प्रापुः, तथा तव स्नात्रजलेन-अन्यत् सर्व स्फुटमेव । २ अत्र पूर्वार्धं प्रतीतम् । उत्तरार्धे तु-मम काऽपि भक्तिः; हे नाथ ! तव-ते-कृपा जयति-या न नानावर्णा-किन्तु एकरूपा-अखण्डा-इति यावत् ।

(श्रीअभिनन्दन-नमिजिनौ—)

अरूपिणी नष्टगुणा शिवश्रीर्-
भिन्ना कदाप्यस्तरसा. रसेन (!)
नन्दत्प्रभावा भवतोच्चकामि-
दमाश्रितास्तां जिन ! के न नेमुः ? ॥ ९० ॥

(श्रीसुमति-मुनिसुव्रतौ—)

न को मनोभूस्त्रिजगन्त्यमू-नि
सुखाद् बबन्ध त्वरितं मनस्सु !
मत्वेति हत्वा मन एव तीव्रं (!)
तिरोभवस्त्वं शुचिधर्मधातः ! ॥ ९१ ॥

१ हे जिन ! हे रसेन ! (रसानाम्-इनः स्वामी-रसेनः, तदामन्त्रणे) या शिवश्रीः, नष्टगुणा (रजस्-सत्वादिगुणरहितत्वेन, वा क्षायोपशमिकगुणहीनत्वेन, वा आत्मविशेषगुणाभावयुतत्वेन) अत एव भिन्ना, अस्तरसा, अरूपिणी च-एतादृशी अपि सा भवता (भवदाश्रिता सती) नन्दत्प्रभावा जाता-अत एव हे जिन ! तां शिवश्रियम्-उच्चकामिदमाश्रिताः के न नेमुः-सर्वे एव उच्चकामिनः उच्चस्थानाभिलाषिणः, दमाश्रिता दमयुताः श्रमणाः नेमुः इत्यर्थः। अथवा 'रसेन' इति तृतीया-एकवचनम्। अथवा हे भिन्न ! लोकोत्तरत्वेन सर्वतः पृथग्भूत ! अकदापि-निरन्तरम् अस्तरसा-रसहीना-इत्यादि पूर्ववत्। २ को मनोभूः कामदेवः-अमूनि त्रिजगन्ति अपि मनस्सु न बबन्ध-अपि तु सर्वे एव त्वरित बबन्ध, अत एव हे तीव्र ! हे शुचिधर्मधात ! त्वं मन एव हत्वा तिरोऽभवः-अतस्त्वयि न कदापि मनोभूसामर्थ्यं प्रभवितु प्रभु-इति। अथवा हे शुचिधर्मधातः ! त्वं तीव्रम्-एव मनो हत्वा इत्यादि प्रागवत्। 'तीव्रम्' इति पक्षे अस्य चित्रकाव्यत्वेन "नानुस्वार-विसर्गौ च चित्रभङ्गाय सम्मतौ" इति श्रीवाग्भटालंकारवचनत्वेन नात्र अनुस्वारः सन्नपि चित्रभङ्गं करोति।

(श्रीपद्मप्रभ-मल्लिजिनौ— )

पश्याऽऽहिता दुर्निगडे प्रमादेऽ-
भ्रको वयं दुःखकदम्नमेव !
प्रभोऽसि सौख्यामृतमात्तधाम !
भवे त्वदन्ता किमिदं न भक्तिः ॥ ९२ ॥

(श्रीसुपार्श्व-अरनाथौ— ) :

श्रीवीतरागेन्द्र ! शिवश्रिया अं-
सुखा-ऽऽसुखाद्यल्पविकल्पभा-र !
पार्श्वे न तस्याऽक्षरणोऽहिना ना (?)
र्थवृन्दमातिष्ठति नैव नाथ ! ॥ ९३ ॥

१ हे प्रभो ! हे आत्तधाम ! (प्राप्तज्योतीरूप !-धाम-शब्दः ज्योतिः-पर्यायः-अकारान्तश्च) वयं भवे संसारे, प्रमादरूपे दुर्निगडे आहिताः सन्तः दुःख-कदम्नकमेव अभ्रकः-अभ्रः (अभ्र एव अभ्रकः-स्वार्थिकः-कः) तत् त्व पश्य। अस्य एतादृशस्य दुःखस्य प्रतीकाररूपं किमिदं सौख्यामृतमेव त्वदन्ता भक्तिः-शर्म न ? अर्थात् त्वत्समीपस्थितं सौख्यामृतमेव तस्य कष्टस्य छेदनाय भक्तिः पर्याप्ता। २ हे श्रीवीतरागेन्द्र ! हे नाथ ! हे असुख-आसुखाद्यल्पविकल्पभार ! त्वं शिवश्रिया विराजसे (असुखं दुःखम्, आसुखं संसारसुखम्) तस्य वीतरागस्य पार्श्वे अहिना सर्पेण सह अक्ष-रणो न-रुद्राक्ष-ध्वनिर्न (अन्ये देवा रुद्राक्षेण जापं जपन्ति, ससर्पाश्च) एवमेव तस्य पार्श्वे श्ववृन्दमपि न आतिष्ठति (अन्येषां केषाञ्चित् पूज्यतमानां निकटे श्ववृन्दमपि दृश्यते) [अत्र 'श्ववृन्दम्' इत्यस्य उपरि गतो रेफः-चित्रकाव्यार्थमेव प्रयुक्त इति गम्यते.] नाऽत्र 'ना' शब्दार्थो गम्यते।

(श्रीचन्द्रप्रभ-कुन्थुनाथौ—)

चन्द्रो यथा नन्दति सर्वरी कुं
द्रवेत् तु चन्द्राश्मचयोऽमृतं थु।
प्रभो! तथा शान्तरसान्विता जना
भवन्ति ते वाग्भिरनूनवित्पथ! ॥ ९४ ॥

(श्रीसुविधि-शान्तिनाथौ—)

श्रीरज्जुबद्धां नृततिं दृढाशां
सुमोह एष भ्रमयन्नरातिर्।
विभो! तवाग्रे तु नयेत् कदा-ना-ऽऽ
धि-व्याधि वह्निप्रशमेऽसि पाथः ॥ ९५ ॥

१ पुस्तके तु 'चन्द्रो यथा नन्द ह सर्वकुं' इति पाठः। यथा सर्वरी-शर्वरी-रात्रौ चन्द्रः, कुं पृथिवीं नन्दति, एवमेव चन्द्राश्मचयो यथा थु इव अमृतं द्रवेत् तथा हे प्रभो!, हे अनूनवित्!-सर्ववित्!, हे पथ! मार्गरूप! ते तव वाग्भिः-देशनाभिः, जनाः शान्त-रसान्विता भवन्ति। २ एष अरातिः सुमोहः श्रीरज्जुबद्धां लक्ष्मीपाशबद्धाम्, अत एव दृढाशां नृततिं भ्रमयन् कदापि हे विभो! तव अग्रे न नयेत्-त्वं तु आधि-व्याधिवह्निप्रशमे जलरूपः-असि (पाथः-जलम्)।

(श्रीशीतल-धर्मनाथौ—)

श्रीमन्नहं[1] मोहतमोभिरन्धः
शीलाध्वहीनं कृतवान् कुकर्म।
तस्य क्षयोऽभूत् तव दर्शने ना-ऽ-
लसं मनो मेऽस्तु तवाङ्कितेऽथ ॥ ९६ ॥

(श्रीश्रेयांस-श्रीअनन्तौ—)

श्रीमन्![2] यथाऽऽर्यो लघुरष्टजुः श्री-
श्रेष्ठः प्रवृद्ध्यै वचनश्रिया अ।
यांस्त्वं नृचित्तेऽणुरपीह नूनं
सर्वोरुरेवाऽसि तथाऽद्य नेतः! ॥ ९७ ॥

१ हे श्रीमन्! अहं मोहतमोभिः अन्धः सन् शीलाध्वहीनं कुकर्म कृतवान्, तस्य कुकर्मणः तव दर्शने सति क्षयोऽभूत्, अथ तव आङ्किते मम मनः अलसं न भवतु-इति। २ हे श्रीमन्! यथा आर्यो लघुः-अकारः वचनश्रियाः प्रवृद्ध्यै श्रीश्रेष्ठः अष्टजुः ('अष्टजुः' इति न गम्यते) [अथवा अष्टौ गुणान् जुषति-इति भवेत्] तथा त्वम् अद्य हे नेतः! नृचित्ते यान् गच्छन्, अणुः अपि इह नूनं सर्वोरुरेव सर्वगुरुरेव असि इति।

(श्रीवासुपूज्य-श्रीविमलौ—)

वाग्मीश ! ते सर्वसमा वचःश्री
सुधास्रवा सद्भिरिति व्यभावि ।
पूर्णात् सुमात् त्वम्बुधितो निकामं
ज्यायोरसोल्लोलततिः समूल ! ॥ ९८ ॥

इत्थं श्रीजिनराजमव्ययसुखा-ऽऽयु-र्वीर्य-तेजोयुतं स्वस्थैः श्रीऋषभादिनाममणिभिः श्रेणिद्वयस्थैः क्रमात् ।
नित्यं भूषितमात्मचेतसि मुदा संस्थाप्य यो ध्यायति सिद्धिश्रीकमलप्रभः स भवति स्फूर्जद्यशःसौरभः॥
—स्तवनम् ।

इति विधाय जिनार्चनमन्वहं भरतभूमिसुरैर्भरतोऽन्वितः ।
भविजनान् बहुशो भुवि भोजयन् सुकृतवान् कृतवानथ भोजनम् ॥२००॥

सुरसरिद्-वरदाम-सुमागधाद्यधिपदेवकृतं स्नपनं तदा ।
हृदि निधाय नृपा बहवो भुवि विदधिरे जिनपूजनमन्वहम् ॥१॥ उक्तं च—

१ पूर्वार्धं प्रतीतम् । उत्तरार्धे तु-यथा पूर्णात् सुमात् चन्द्रात् ('तु' समुच्चयार्थे) अत एव पूर्णात् अम्बुधितः ज्यायोरसोल्लोलततिः जायते-इत्यादि-अन्यत् तु स्पष्टमेव । अत्रापि पुस्तके तु 'ज्यायोरसोल्लोलततिः' इति विभिन्नः पाठः । २ पूर्वनिर्दिष्टेषु श्लोकेषु श्रेणिद्वये श्रीजिनराजनामानि प्रतीतान्येव-तानि च अस्माभिः विशेषस्पष्टीकरणाय महाक्षरैः मुद्रितानि । ३ अयं च ग्रन्थकर्तुरपि नामनिर्देशः 'कमलप्रभ' इति । ४ भूमिसुराः भूदेवाः-ब्राह्मणा इति यावत् ।

शस्तसमस्तसरित्-समुद्र-तीर्थोदकानि घोषणया। स्मरयन् प्रागभिषेकं छेकः शेषं विधिं कुर्यात् ॥२॥

(भरतानुसरणम्-अन्यैः कृतम्—) भरतचक्रधराचरितं च तद् भविकभोजन-दानमपि क्षितौ।

सुकृतिभिर्विदधे निजशक्तितो नृपतिभिर्बहुभिर्बहुभावतः ॥३॥

४ (ऋषभसेनप्रश्नः स्फटिकाचले—)

ऋषभसेनगणः प्रथमोऽन्यदा ऋषभदेवविभुं प्रणिपत्य च। सविनयं स्फटिकाचलमूर्धनि सममपृच्छत केवलसंभवे

इह हि बाहुबलिप्रमुखाः प्रभो! यतिवरा अपि केवलिनोऽभवन्।

प्रथमतः श्रिततीव्रतरव्रतः कथमहं न लभे परमं महः? ॥५॥

८ बहुभवोपचितं दृढकेवलावरणनाम-कुकर्म मम प्रभो!।

व्रजति केन तपोविधिनाऽधुना रुचिरतीर्थभुवि क्व नु वा क्षयम् ॥६॥

(युगादिजिनो जगाद—) अथ जगाद युगादिजिनाधिपो विमलशैल इतोऽपरदिग्भुवि।

ध्रुवमनन्तमुनीश्वरमुक्तिदो विमलताकलितोऽस्ति पुराऽपि यः ॥७॥

२ विमलशैलवरस्य शिरस्यहो! गणपते! तव तस्य समीयुषः।

विमलता शिवसौख्यफलावलिप्रसवकल्पलताऽस्ति च भाविनी ॥८॥

पथि भविप्रतिबोधविधायिनो विमलशैलविभावविभासनम्।

तव च तत्र भवेद् बहुभावनोदय इति त्रितयं दुरितापहम् ॥९॥

१ छेकः चतुरः। २ शिरसि शिखरे। ३ विभावः प्रभावः। ४ भविप्रतिबोधः, विमलशैलविभासनम्, भावनोदयश्च-एतत् त्रितयम्।

यतः— त्रितयमेव तद् दर्शयति—

| | |
|---|---|
| "सयलम्मि जीवलोए तेण अहं घोसिउ एअमाघाओ। | सकले जीवलोके तेन अहं घोपयितुमेतद् आख्यातः। |
| इगं पि जो दुहत्तं सत्तं वोहेइ जिणवयणे ॥१०॥ | एकमपि यो दुःखार्तं सत्त्वं वोधयति जिनवचने ॥१०॥ |
| समत्तदायगाणं दुप्पडीयारं भवेसु बहुएसु। | सम्यक्त्वदायकानां दुष्प्रतीकारं भवेपु वहुकेपु। |
| सव्वगुणमीलियाहि वि उवयारसहस्सकोडीहिं ॥११॥ | सर्वगुणमीलिताभिरपि उपचा(का)र सहस्रकोटिभिः॥ |
| —एकम्। | —एकम्। |
| तित्थयराण गुरूणं साहूणं बंभयारीणं। | तीर्थंकराणां गुरूणां साधूनां ब्रह्मचारिणाम्। |
| तित्थाणं खु प्पहावो पयासिओ परमसुहहेउं ॥१२॥ | तीर्थानां खलु प्रभावः प्रकाशितः परमसुखहेतुम् १२ |
| तित्थयराण प्पहावं तित्थाणं चेव जो प्पयासेइ। | तीर्थंकराणां प्रभावं तीर्थानामेव यः प्रकाशयति। |
| खविऊण पावकम्मं सिद्धिसुहं सो लहइ जीवो १३ | क्षपयित्वा पापकर्म सिद्धिसुखं स लभते जीवः।१३ |
| तित्थाणं च जिणाणं मन्नेइ पूयं संपइ न प्पहावं। | तीर्थानां च जिनानां मन्यते पूजां संप्रति न प्रभावम्। |
| सो अत्थिक्कविहूणो दुल्लहबोही नरो होही ॥१४॥ | स आस्तिक्यविहीनः दुर्लभवोधिर्नरो भविष्यति १४ |
| —द्वितीयम्। | —द्वितीयम्। |
| जिणनाहा गणनाहा जत्थ य सिज्झन्ति कम्मपरिमुक्का। | जिननाथा गणनाथाः यत्र च सिध्यन्ति कर्मपरिमुक्ताः |
| भवियाण पूयणिज्जं सिद्धिखित्तं खु तं वत्तं ॥१५॥ | भव्यानां पूजनीयं सिद्धिक्षेत्रं खलु तद् वृत्तम्।१५। |
| सिद्धखित्तगयाणं भवियाणं भावणा भवे तिक्खा। | सिद्धक्षेत्रगतानां भव्यानां भावना भवेत् तीक्ष्णा। |

| | |
|---|---|
| ए भावणाए पावं कम्मं गलइ सयलं ॥१६॥ | तीक्ष्णया भावनया पापं कर्म गलति सकलम् ॥१६॥ |
| —तृतीयम् । | —तृतीयम् । |
| (सिद्धप्राभृते शत्रुंजय-वर्णिकाः गाथाः—) | |
| ४ तथा च सिद्धपाहुडे— | तथा च सिद्धप्राभृते— |
| पढमारए असीइं उसहे पन्नास जोयणा दिट्ठा । | प्रथमारके अशीतिः ऋषभे पञ्चाशद् योजनानि दृष्टानि। |
| वीरे जोयण बारस छट्ठ इए सत्त रयणीओ ॥१७॥ | वीरे योजनानि द्वादश षष्ठे इते सप्त रत्नयः ॥१७॥ |
| पुव्वमणंतं कालं ओसप्पिणि-सप्पिणीसु तित्थगरा। | पूर्वमनन्तं कालं अवसर्पिणी-उत्सर्पिणीषु तीर्थंकराः। |
| ८ सित्तुंजगिरिवरम्मि अ समोसरिउं सिवं पत्ता १८ | शत्रुंजयगिरिवरे च समवसृत्य शिवं प्राप्ताः ॥१८॥ |
| (श्रीपद्मनाभप्रमुखा जिनाः—) | |
| सिरिपउमनाहप्पमुहा तित्थयरा भाविणो असंखिज्जा। | श्रीपद्मनाभप्रमुखाः तीर्थंकरा भाविनोऽसंख्येयाः । |
| सिरिसित्तुंजगिरिम्मि उ विहित्ता निव्वुडिस्संति।१९। | श्रीशत्रुंजयगिरौ तु विहृत्य निर्वृतयिष्यन्ति ॥१९॥ |
| १२ (त्रयोविंशतिर्जिनाः-अन्ये राजानश्च—) | |
| तेवीसं तित्थयरा समोसढा नेमिवज्जिया जेण। | त्रयोविंशतिस्तीर्थंकरा समवसृता नेमिवर्जिता येन । |
| तं विमलगिरीतित्थं सुकयत्था केऽपि पिच्छंति २० | तद् विमलगिरितीर्थं सुकृतार्थाः केऽपि प्रेक्षन्ते ।२०। |
| पन्नास कोडिलक्खा अयराइं जाव अजियजिणो । | पञ्चाशत् कोटिलक्षाणि अतराणि यावत् अजितजिनः |
| आइधजसप्पमुहा रायाणो निव्वुइं पत्ता ॥२१॥ | आदित्ययशःप्रमुखा राजानो निर्वृतिं प्राप्ताः ॥२१॥ |

१ षष्ठे अरके इते प्राप्ते-आगते सति । २ रत्नयो हस्ताः । ३ अतराणि-सागरोपमानि-इति जैनानां सांप्रदायिकः कालमानसूचकः सकेतविशेषः ।

( चातुर्मासे श्रीअजित-शान्तिजिनौ— )

सिरिअजिय-संतिनाहा चाउम्मासम्मि संठिया जत्थ    श्रीअजित-शान्तिनाथाः चातुर्मासे संस्थिता यत्र ।

निम्मलनयवाणीए पडिबोहिस्संति भवियजणं॥२२॥    निर्मलनयवाण्या प्रतिबोधयिष्यन्ति भव्यजनम् ॥२२॥

( नारद प्रमुखाः— )

४ नारयरिसी अ समणा भद्दयभावा उ जत्थ महरिसिणो। नारदऋषिश्च श्रमणा भद्रकभावास्तु यत्र महर्षयः ।

एगाणउइलक्खा सिवं लहिस्संति तित्थम्मि ॥२३॥    एकनवतिलक्षाणि शिवं लप्स्यन्ते तीर्थे ॥२३॥

( पाण्डवाः— )

साहूण वीस कोडी पंडवसरिसाण धीरपुरिसाण।    साधूनां विंशतिः कोटिः पाण्डवसदृशानां धीरपुरुषाणाम् ।

८ सिद्धिं सिद्धिगिरिम्मि उ भगीरहे इत्थ सिज्झंति २४    सिद्धिं सिद्धिगिरौ तु भगीरथे अत्र सिध्यन्ति २४

कोडाकोडीसायर-मज्झे इच्चेवमाइया मुणिणो ।    कोटाकोटीसागर-मध्ये इत्येवमादिका मुनयः ।

सिद्धिसुहं संपत्ता तिलयम्मि इत्थ सेलम्मि ॥२५॥    सिद्धिसुखं संप्राप्ताः तिलके अत्र शैले ॥२५॥

१२ प्रतिदिनं भविनः प्रतिबोधयन् विदधदद्भुतभावविभासनम् ।

विमलयन् स्वमनो विमनोभवं व्रज मिहाविमलं विमलाचलम् ॥२६॥

इति निदेशमवाप्य जिनेशितुः सुयतिपञ्चशतीसहितस्तदा ।

अवततार ततः स्फटिकाचलाद् विमलशैलमभि प्रयियासया ॥२७॥

१ मनोभवः कामः—तद्रहितम् । २ मिहा प्रातःकाले पतद् हिम–सीकरम् । ३ प्रयातुम्, इच्छया ।

विमलभूमिधरं प्रति हर्षतः प्रचलिते प्रथमे गणनायके। हरिणवेषसुरं सह वासवः प्रहितवांस्तदुपासनहेतवे॥२२८॥
वातव्याधूतनूतध्वजभुजनिवहैरात्तनृत्तेव हृष्ट-स्वर्गस्त्रीवर्गगीतैरिव विहितमहामाङ्गलिक्योच्चरावा ।
नव्या दिव्या विमानावलिरिह विमलाद्रिं प्रति प्रस्थितस्य रेजे श्रीपुण्डरीकप्रथमगणधरस्यानुगा हर्षितेव ॥२२९॥
४ जय स्वामिन्! स्वामिन्निति हरिणवेषप्रभृतिभिः सुरैः स्तोत्रव्यग्रैरनुगतपदोऽयं गणधरः ।
चचाल श्रीशत्रुंजयगिरिवरं प्रत्यथ मुदा, चतुर्ज्ञानी सर्वागमवचनकर्पूरकलशः ॥ २३० ॥
श्रीरत्नप्रभसूरिसूरकरतो दोषानुपङ्गं त्यजन् यो जाड्यस्थितिरप्यभूत् प्रतिदिनं प्राप्याद्भुतप्रातिभः ।
तेन श्रीकमलप्रभेण रचिते श्रीपुण्डरीकप्रभोः श्रीशत्रुंजयदीपकस्य चरिते सर्गः तृतीयोऽभवत् ॥२३१॥
८ इति श्रीबाहुबलिकेवलज्ञान-भरतसाधर्मिकवात्सल्य-पुण्डरीकयात्राप्रचलनो नाम तृतीयः सर्गः ।

## चतुर्थः सर्गः ।

( विहरन्-श्रीपुण्डरीकः— )

श्रीपुण्डरीकः संमितोऽप्रतिमप्रतिभप्रभुः । बहूनदीक्षयद् भव्यान् विबोध्य विहरन् भुवि ॥ १ ॥

( पोतन पुरम्— )

धनुःपञ्चशतीदेहस्ततः साधुशतैर्वृतः । प्राप पापरिपुः पुण्योद्द्योतनं पोतनं पुरम् ॥ २ ॥
तस्योद्याने शुकैर्हंसैर्मङ्गलालापिभिर्वृते । मुनिप्रभावात् सर्वर्तुरमणीयतरूच्चये ॥ ३ ॥
१२ वातनिर्धूतपुष्पौघकृतचन्द्रोदयभ्रमे । यतिस्थितिकृते चक्रुस्ते देवा रत्नशालिकम् ॥ ४ ॥ ( युग्मम् )

---

१ हरिणवेषो नाम 'हरिणेगमेषी'नामा देवः प्रतीयते, स च जैनसंप्रदाये प्रसिद्धः । २ आत्तं नृत्तं यया सा-ईदृशी विमानावलिः । ३ रावो-ध्वनिः । ४ पूर्वगतश्लोकव्याख्यावद् अस्याऽपि व्याख्या आख्येया । ५ पञ्चभिः समितिभिः समितः । ६ अप्रतिमा-अनुपमेया । ७ पापशत्रुः । ८ सर्व-ऋतु-रमणीयः तरूणाम् उच्चयो यत्र । ९ चन्द्रोदयः-भाषायाम् चन्दरवो-इति ख्यातः ।

(देवता आगता—)
मुनेस्तत्र निविष्टस्य काचिदभ्येत्य देवता । नत्वांऽह्रियुगलं यावत् तस्थौ सुस्थमनाः पुरः ॥ ५ ॥
(श्रीरत्नचूडो राजा—)
तावत् कृतारिदैन्येन¹ सैन्येन परितो धृतः । अङ्गरक्षैर्महादक्षैः सुभटैरुद्भटैस्तथा ॥ ६ ॥
मन्त्रिणा मतिचन्द्रेण राजहंसेन सूनुना । युक्तः श्रीरत्नचूडाख्योऽभ्येत्य राजाऽनमद् मुनिम् ॥ ७ ॥
(सचिवप्रश्नः—)
स ततः सचिवः प्रोचे भगवन्! अस्य भूपतेः । देवः कोऽपि पुरा वैराद् जिह्वास्तम्भं चकार किम्? ॥ ८ ॥
कस्माद् वा भक्षणादेष जोषंदोषं² पुपोष किम् । यौवराज्येऽवदद् वाक्यं नो राज्यप्रापणात् कथम्? ॥ ९ ॥
(ऊचे मुनिः—)
मुनिरूचे पुराऽनेन कर्मबन्धकरं वचः । उक्त्वा ज्ञातमिदं पश्चात् क्षामितं विनयात् पुनः ॥ १० ॥
ततः पूर्वभवं स्मृत्वा बिभ्यत् वाक्-कर्मबन्धतः³ । नासौ वदति तद् नाऽन्यद् नृपमौनेऽस्ति कारणम् ॥ ११ ॥
(जगाद पुनर्मन्त्री—)
स जगाद पुनर्मन्त्री कोऽस्य पूर्वभवः प्रभो! । किं वा तद्वचनं चेति? कथ्यतां संसदि⁴ द्रुतम् ॥ १२ ॥
(स्वामिदेशना-रत्नचूडनृपपूर्वभवश्च—)
तेनेति पृष्टे तेनेऽथ⁵ स्वामिना देशनाऽमुना । संमोहगेहसंदेह-व्यपोहार्थं⁶ सुमन्त्रिणः ॥ १३ ॥
(विदेहे क्षेत्रे रत्नपुरम्—)
क्षेत्रे महाविदेहाख्ये विजयो मङ्गलावती । तत्र रत्नपुरं नाम नगरं पुण्यनागरम्⁷ ॥ १४ ॥
(वैरसिंहो राजा—)

---

१ कृतम् अरिषु दैन्यं येन । २ मूकतादोषम् । ३ वाचा जन्यः कर्म-बन्धः—ततः । ४ सभायाम् । ५ 'तन्' धातोः परोक्षकालरूपम्-विस्तारं कृतवान्-इत्यर्थः । ६ व्यपोहो-दूरीकरणम् । ७ पुण्याः नागरा नगरवासिनो यत्र तत् ।

वेरसिंहोऽत्र राजाऽपि नैव यः कुवलप्रियः। जगन्मित्रोऽपि सूरोऽपि नैव यः विश्वतापनः ॥ १५ ॥
( लीलावती राज्ञी— )
शीललीलावती तस्य नाम्ना लीलावती प्रिया । अक्षीणसत्यपीयूषा यस्या आस्यामृतद्युतिः ॥ १६ ॥
( पुत्रो मेघनादः— )
पूर्वपुण्यैस्तयोर्दत्तः पुत्रः सुत्रामविक्रमः । मेघनाद इति ख्यात्या ख्यातो ध्यातो जगज्जनैः ॥ १७ ॥
४ याल्यं क्रमेण तत्याज मौग्ध्यं सर्वत एव यः । यौवनं यः क्रमात् प्राप कलाः कीर्तिं च सर्वतः १८ ॥
( मेघनाददानव्यसनम्— )
सोक्षिणं शुद्धपुण्यं यः कृत्वा दत्त्वा निजं करम् । मैत्र्यं दानाख्यमित्रेण स्थिरं जग्राह साग्रहः ॥ १९ ॥
दत्त्वाऽर्थिभ्यः सुवर्णं यः सुवर्णं वादमग्रहीत् । विधाप्य पुण्यप्रासादान् प्रसादं पुण्यतोऽनयत् ॥ २० ॥
स दानं च सदानन्दकरं धीमान् सदा ददौ । यथा यथा तथाऽभ्येयुः कलापात्राण्यनन्तशः ॥ २१ ॥
८ महादानं ददानोऽयं वर्धमानमथो दिने । अष्टादश स्वर्णकोटीर्नृकोटीरैः प्रदत्तवान् ॥ २२ ॥
( दानव्यसनभीतो राजा जगौ— )
दानव्यसनतो भीतो राजा रहसि तं जगौ । वत्स ! स्वच्छतया भोगः कार्यो नौदार्यमद्भुतम् ॥ २३ ॥
( मेघनादप्रवासः— )
निशम्येति महादानी महामानी महानिशि । निस्ससार सदाचारसारः सारभृतो भृशम् ॥ २४ ॥
( ग्रीष्मः— )

---

१ राजा चन्द्रो हि कुवलं कुवलयम्–चन्द्रविकासि पद्मम्–तस्य प्रियः । अयं वैरसिंहो राजा–नृपः सन्नपि नैव कुबलानां निन्दितबलानां प्रियः–तेषां नाशकत्वात् । पुनश्च अयं वैरसिंहो नृपः जगन्मित्रः, सूरोऽपि सन् नैव विश्वतापनः, जगन्मित्रः–सूरः–भानुर्हि विश्वतापनः प्रतीतः इति विरोध–परिहारौ । २ अक्षीणं सत्यं पीयूषम्–अमृतं यस्यां सा । ३ यः शुद्धपुण्यं साक्षि विधाय, निजं हस्तं दत्त्वा दाननाम्ना मित्रेण स्थिरं मित्रत्वं संपादितवान्—दानशूर आसीद्–इति तत्त्वम् । ४ शोभना वर्णा यस्मिन्–यशोवादम्–इत्यर्थः । ५ पुण्यमहालयान् । ६ कलापात्राणि–कलानिपुणाः । ७ कोटीरो–मुकुटः । ८ कथयामास ।

भीष्मे ग्रीष्मेऽन्यदा गच्छन् वकुलस्य तरोस्तले । परिश्रान्तः सुविश्रान्तः शान्तस्वेदस्तु वायुना ॥ २५ ॥
( हष्टिर्क हरिणी— )
तत्राऽकस्माद् भयग्रस्ता सजला लोललोचना । हरिणी गर्भखिन्नाङ्गी वेगादागात् तदन्तिकम् ॥ २६ ॥
मनुष्यवाचं जल्पन्ती रक्ष रक्षेति सोत्सुकाम् । स्वहस्तेन ततस्तेनाऽऽस्पृष्टा हृष्टा स्थिताऽथ सा ॥ २७ ॥
४ मा भैर्मा भैरिति स्पष्टं कृपापुष्टं वदन् वचः । स्वोत्सङ्गे रङ्गतो नीत्वा स ददावभयं तदा ॥ २८ ॥
( आजगाम सिंहः— )
तदैव दैवयोगेन प्रहृताऽऽस्यः क्रुधा क्षुधा । आजगाम हरिः काममप्रेक्ष्यः कातराङ्गिनाम् ॥ २९ ॥
( सिंह-मेघनादयोः संलापः— )
८ मृगीं वीक्ष्य महानादो मेघनादाङ्कसंगताम् । स्थित्वा सुखं च संमील्याऽऽश्वस्य स्वागोंगदद् गिरम् ॥ ३० ॥
त्रिलङ्घन्याऽद्य दैवेन दत्तैषा यद् गता मृगी । कवलः किल वक्त्रस्थ इव ग्रस्तस्ततो मम ॥ ३१ ॥
जन्मसब्रह्मचारिण्या हा हा क्रूरतया तया । भवन्तं पुण्यवन्तं तु दृष्ट्वा मुक्तः करोमि किम् ॥ ३२ ॥
१२ अहं क्रूरोऽपि शूरोऽपि पशुरज्ञानवानपि । भूकल्पभूरुहं नत्वा हन्तुं कुर्वे मनोऽपि नो ॥ ३३ ॥
सदाकार ! सदाचार ! सदोपकृतिकारक ! ॥ कुमाराऽर्पय मे भक्ष्यं धर्मे सख्यं तवाऽस्ति चेत् ॥ ३४ ॥
स कुमारमन्मथो वाचमथोवाच नृपाङ्गभूः । अहो ! सिंह ! महोयुक्तं ! शृणु संवृणु मानसम् ॥ ३५ ॥
( क्षत्रियस्यार्थः— )
क्षत्रियाः सर्वतेजांसि समुच्छिद्य भुवस्तले । परप्राणपरित्राणकृते सृष्टिकृता कृताः ॥ ३६ ॥

१ ददौ अभयम् । २ कातरमनुष्यैः अप्रेक्ष्यः । ३ महानादोऽत्र सिंहः । ४ स्वाग्-शाटीति । ५ त्रयाणां लङ्घनानां समाहारः-उपवासत्रयी इत्यर्थः । ६ जन्मसहचारिण्या । ७ पृथिव्यां कल्पवृक्षरूपम् । ८ सखीत्वम् । ९ मूर्तिमान् अनङ्गः । १० तेजस्विन् ! । ११ रुन्ध कुरु । १२ सर्वतेजांसि संगृह्य ।

ततस्ते प्राज्यसाम्राज्य! देहगेहतनूद्भवान् । दानेनाऽपि सदा दद्युर्नत्वहो ! शरणागतम् ॥ ३७ ॥
प्रसन्नेनाद्य दैवेन पुण्यदेहस्य पोषदम् । भीतत्राणं महाभोज्यं दत्तं तत् किमहं त्यजे ॥ ३८ ॥

(सिंहाय मृगीस्थाने स्वदेहदानम्— )

मम भक्ष्यान्तरायेण सर्वमेतत् प्रलेष्यते । इति चेद् वदसि तद्देहं ममाऽऽस्वादय सत्वरम् ॥ ३९ ॥
इत्युक्त्वा पतितेऽग्रेऽस्मिन् सिंहोऽवोचन्नरोत्तम! । मानुषं जन्म दुष्प्रापं मोक्षदं किं परित्यज ॥ ४० ॥
मृगकान्ताकृते प्राणान् यच्छतस्तुच्छधीजुषः । भोक्ष्याम्यहं न मांसं ते गच्छ स्वच्छ ! विचारय ॥ ४१ ॥
स ऊचे जगृहे मोक्षो मया श्रेयःश्रियाऽनया । मृग्या जीवस्थापनिका मोक्षं कुर्यान्नपापदम् ॥ ४२ ॥
प्रसादं कुरु पारीन्द्र ! शरीरं मे कृतार्थय । वदन्निति पुनर्यावत् पपाताऽग्रेऽतिसाहसी ॥ ४३ ॥

(मृगी-सिंही अन्तर्हितौ— )

तावदग्रे मृगीं सिंहं नोऽपश्यद् विस्मितस्ततः । पित्तेन दूनचित्तेन ददृशे किमिदं मया ? ॥ ४४ ॥
इति विस्मित्य विस्मित्य स्वेन चित्तेन तच्चिरम् । वकुलादचलद् मेघ-नादो नाऽदो धिया त्यजन् ॥ ४५ ॥
पुण्येऽरण्येऽन्यदाऽनेन गच्छता स्वच्छताऽन्विता । फल-द्रुमालिकलिता नदी काचिददृश्यत ॥ ४६ ॥
हेलया संचरंस्तत्र पुलिने विपुलेऽमले । मेघनादः फलान्यादं पपौ नीरं च निर्मलम् ॥ ४७ ॥

(मेघनादो ददर्श प्रासादम्— )

पुरस्तदा स्फुरन्नानारत्नराशिप्रभाभरैः । पवित्रिताम्बरतलं प्रासादं प्रददर्श सः ॥ ४८ ॥

---

१ पुत्रान् । २ प्रलय यास्यति "लीङ्च् श्लेषणे" धातुः । ३ आत्मनेपदमनित्यम् । अत एव भोक्ष्यामि-भोजनं करिष्यामि । ४ जीवरक्षा । ५ अपापदम् । ६ सिंह ! । ७ पित्तेन शरीरस्थेन तन्नाम्ना धातुना-पित्तेन हि भ्रमो जायते इति प्रसिद्धः । ८ न अदः एतत् पूर्वोक्तं वैचित्र्यम् । ९ पुलिनः तटः । १० आद भक्षयामास ।

(कुमारस्य दृष्टिः—)
कुतूहलरसावेशस्फीतप्रीतविलोचनः । तद्द्वारे सुप्रभाधारे गत्वा मध्यं व्यलोकयत् ॥ ४९ ॥
एकया सुप्रतीहार्या छत्रधारिकयैकया । द्वाभ्यां चामरभृद्भ्यां च नारीभ्यां सेविता मुदा ॥ ५० ॥
४ आनन्दामृतकुल्येव कल्पवल्लीव जङ्गमा । सीमा सुदर्शनीयानां रेखा रूपभृतां भुवि ॥ ५१ ॥
अतीवदिव्यदेहाभिः देवीभिः परितो वृता । रत्नसिंहासनासीना दुःखदीनानना भृशम् ॥ ५२ ॥
सर्वदेवीश्वरी काचिद् विदुषा स्मितचक्षुषा । नृसारेण कुमारेण ददृशे हर्षदा दृशोः ॥ ५३ ॥ —कलापकम् ।
(देव्या विषादः—)
८ दृष्ट्वा दुःखमुखीश्यामसुखीमेनां सुमानसः । कामेकां सुमुखीमस्या दुःखहेतुं स पृष्टवान् ॥ ५४ ॥
मञ्जुवाचमथोवाच सा तदा कर्णसातदाम् । शृणु वृत्तं निजं चित्तं स्थिरीकृत्य सुकृत्यवित् ॥ ५५ ॥
स्वामिन्याः कुलवृत्तान्तं स्वामिनी ज्ञापयिष्यति । दुःखहेतुं मया कथ्यमानमाकर्णयाऽद्भुतम् ॥ ५६ ॥
(विषादकारणम्—)
१२ अत्र यक्षवने हर्षात् क्रीडन्त्या पुष्पकन्दुकः । सखीं प्रति स्वहस्तेन स्वामिन्या प्रेरितो यदा ॥ ५७ ॥
तदाऽङ्गुलीयोऽप्यङ्गुल्याश्चिन्तामणिविभूषितः । पार्श्वे दिव्याग्निसंपूर्णकुण्डे स सहसाऽविशत् ॥ ५८ ॥
तस्य दिव्यस्य कुण्डस्य वह्निज्वाला कलोच्चयैः । न शाम्यति विना सत्त्वं सात्त्विकानां महात्मनाम् ॥ ५९ ॥
मनःपुराद् विनिर्वास्य हर्षराजं म(हा)या हठात् । विषादो(त्थ)ह्लनिर्पादोऽस्याः तदा प्रभृति स्थितवान् ॥ ६० ॥

१ समस्तमेतत् । २ सुदर्शनीयानां सीमा–नातः परा सुदर्शनीया । ३ नातः परा रूपवती । ४ आसीना–स्थिता । ५ कर्णसुखदाम् । ६ कन्दुको हि भाषायाम् 'दडो' इति । ७ अङ्गलीपरिधेयः–चिन्तामणिः ८ ( ) एतचिह्नगतः पाठः कल्पितः शोधकेन ।

( तद्विपादनाशाय मेघनादपोद्यम – )

इति मौनावलम्बिन्यां कामिन्यां स व्यचिन्तयत् । निशम्याऽपि महादुःखं चेन्न हन्मि ततः पशुः ॥६१॥
विश्वेऽस्मिन् दीनताभीतो न दुःखं कथयेज्जनः । कथयेचेत् तदा दुःखनाशमाशास्यं चेतसा ॥ ६२ ॥
अस्मात् कायव्ययादेव स्थिरां पुण्यतनूं लभे । अथवा मन्दभाग्यत्वं पुरः मद्धुरभूद् मम ॥ ६३ ॥
न मां वदति जिह्वाऽस्या यावद् दुःखापनीतये । तावत् करोमि–मे वाञ्छा पुण्यैर्भूयात् फलेग्रहिः? ॥६४॥
सतां मान्यः स तां देवीमवदत् तदनु स्फुटम् । वह्निकुण्डस्थितं शीघ्रमङ्गुलीयं प्रदर्शय ॥ ६५ ॥
साऽऽक्रम्य भूमिकां स्तोकां तर्जन्या तद्वचोऽकरोत् । मुमुदेऽथ स तं दृष्ट्वा मुनिवद् वह्नितापनम् ॥६६॥
परदुःखविनाशाय कार्यं कुर्यात् पुनर्विधिः । इत्युदित्वा ददौ झम्पां निष्कम्पाङ्ग–मनस्थितिः ॥ ६७ ॥

( वह्नेर्जलीभावः— )

तस्मिन् सत्त्वसुधाकुण्डे संगते कुण्डमण्डनम् । वह्निः स जलतां भेजे कीर्तिबीजलतां तदा ॥ ६८ ॥

( मेघनादस्य साफल्यम्— )

जयनादैन देवीनां स्फीतेन यशसा समम् । मूर्तां मुदमिवैतस्या मुद्रां नीत्वा स निर्ययौ ॥ ६९ ॥

( देवीप्रसन्नता— )

सत्त्वेन तुष्टाऽतुष्टाऽहं वत्स ! स्वच्छ ! वरं वृणु । देव्या एवं वदन्त्यास्तं पुरो मुक्त्वा ननाम सः ॥७० ॥
तस्याः प्रसन्नचित्ताया आलोक्याऽऽलोकनिर्मलम् । मुखचन्द्रमदुःखाभ्रमथाऽवादीत् कृताञ्जलिः ॥ ७१ ॥
यद्वरं दर्शनं स्वीयं दत्तं सोऽभूद् महावरः । पूर्ववृत्ते तु संदेहमन्देहं मतिररित मे ॥ ७२ ॥

१ आशां कृता । २ फलवान् । ३ आतापनासेवन यथा मुनिः करोति । ४ मेघनादे । ५ एतस्याः पूर्वोक्ताया देव्याः । ६ दुःख–अभ्रहीनम् । ७ इह सदेहमन्दा ।

(देवीपुरस्सरा—)

देव्युते मत्प्रपूरं कर्णपूरं कुरु स्थिरम् । कुमार ! सद्गुणाधार ! मन्मनःप्रमदप्रद ! ॥ ७३ ॥

सर्वराज्याधिदेवीं मां विद्धि सिद्धिप्रदां सदा । एताश्चतस्रः सैन्यस्य चतुरङ्गस्य देवताः ॥ ७४ ॥

(मेघनादस्याप्रतीहार्थमेव एतद् देवीदानम्—)

ममात्मस्थानमासीन—देवीजिह्वाभिरागता । त्वद्दानसंभवा कीर्तिः कर्णाकर्ण चंकर्प सा ॥ ७५ ॥

सदैन्या-ऽदैन्यरूपाभ्यां मृगनारी-मृगेन्द्रयोः । अपि क्षत्त्रं च सत्त्वं च वीक्षितं च परीक्षितम् ॥ ७६ ॥

तव मार्गविपण्णस्य निषण्णस्य तरोस्तले । देहाद् दार्ढ्यमहं प्रापं सुदुष्प्रापं तदा यतः ॥ ७७ ॥

जना ज्ञातमहत्त्वाय प्रायः स्वमुपकुर्वते । त्वं तु मामप्यविज्ञायो-पचक्रे तद् भृशार्यते ॥ ७८ ॥

(मेघनादं गाढीतो करोमि— )

योग्याः स्वल्पस्य राज्यस्य सेवका बहवोऽपि मे । अत्यद्भुतगुणं त्वां तु सार्वभौमं करोम्यहम् ॥ ७९ ॥

इत्यूचाना प्रसन्नास्या पृष्ठेऽस्थं करपङ्कजम् । निवेश्योत्थापयांचक्रे राज्यदेवी कुमारकम् ॥ ८० ॥

माणिक्यमणिरत्नाढ्यशिरःकोटीरमध्यतः । मन्दारपुष्पं हस्तेन नीत्वा तस्मै ददौ सुरी ॥ ८१ ॥

राजसूनो ! प्रसूनेनाऽनेनाऽवश्यं वशंवदाः । भविष्यन्ति नृपाः सर्वे तमित्यूचेऽथ देवता ॥ ८२ ॥

(मेघनादप्रयाणः—)

राज्यदेवी तिरोभूता सा प्रभूताऽमरीवृता । सोऽप्यचालीदिलाऽऽलोककुतूहलरसाकुलः ॥ ८३ ॥

---

१ कृतवान् । २ मृगी सदैन्या, सिंह -अदैन्यः । ३ तव देहाद् अहं एतादृशं दार्ढ्यं प्रापम्-अर्थात् तव देहे अहम् एतादृशं दार्ढ्यं निरीक्षितवती-यद् अन्यत्र सुदुर्लभम् । ४ प्रभूतीभवति । ५ सर्वभूमीश्वरम्-सर्वमुख्यम् । ६ उक्तवती । ७ अस्य मेघनादस्य पृष्ठे । ८ मन्दारः-कल्पतरुः । ९ प्रसूनं पुष्पम् । १० इला-भूमिः ।

(विशाला नगरी —)

भूपभूर्भूतलं भ्राम्यन्–अन्यदा दानिनां नृणाम्। कुञ्जराणां च शालायां विशालायां ययौ पुरि ॥ ८४ ॥

सहेलाभिर्महेलाभिः पुरुषैः धनपूरुषैः। कन्याभिर्गुणधन्याभिः पण्डितैश्चातिमण्डितैः ॥ ८५ ॥

सशृङ्गारैर्मुदागारैर्जनैः सुकृतसज्जनैः अश्वैरनिःश्वैर्महसा वारणैररिवारणैः ॥ ८६ ॥—युग्मम्।

सकौतुकां पुरीं प्रेक्ष्य किञ्चित् पप्रच्छ पौरुषम्। उत्सवैरुत्सवो लोको भद्रेह किमु दृश्यते? ॥ ८७ ॥

(राजेन्द्रो राजशेखरः—)

सोऽवदत् कार्यवानस्मि तथाऽपि शृणु कारणम्। यशोगङ्गागिरीन्द्रोऽस्ति राजेन्द्रो राजशेखरः ॥ ८८ ॥

(हेमवती राज्ञी, तत्पुत्री त्रैलोक्यसुन्दरी च—)

तस्य हेमवतीभार्या–कुक्षिभूताऽद्भुता सुता। त्रैलोक्यसुन्दरी नाम कामधाम महोज्ज्वलम् ॥ ८९ ॥

कलालीकोकिलोद्यानं गुणहंसालिमानसम्। युवन्मयूरजीमूतं लज्जामृतहिमद्युति ॥ ९० ॥

राजधाम सुकामस्य सदाचारस्य वासभूः। प्रापाऽतीव निष्पापा यौवनं रूपपावनम् ॥ ९१ ॥

(यशोमती गणिनी–तद्दत्तो महालक्ष्मीमन्त्रः—)

मातृष्वस्रा यशोमत्या गणिन्या ह्यर्पितोऽर्पितम्। सा सस्मार महालक्ष्मीमन्त्रं स्थिरमना भृशम् ॥९२॥

प्रत्यक्षीभूय सा लक्ष्मी–देवी प्राह कुमारिकाम्। मम हंसेन निर्दिष्टं वृणीष्व मण्डपे नरम् ॥ ९३ ॥

इत्युक्त्वाऽथ कुमारीं सा महालक्ष्मीस्तिरोदधे। इतश्चेमां सुतां राजा यौवनस्थां व्यलोकयत् ॥९४॥

---

१ दानिनाम्–दानशीलकानाम्, मदवतां च। २ निःस्वो निर्धनः–अनिःस्वो धनाढ्यः–अनिःश्वाः भूषणादिसहिता अश्वाः। अत्र स–शयोरैक्यम्। ३ वारणो रोधकः। ४ पुरुष एव पौरुषम्–पुरुषम्–इत्यर्थः। ५ कार्यव्यग्रः। ६ कामगृहम्। ७ समस्तम्। ८ मानसं मानससरोवरम्। ९ 'युवमयूर' इति भवेत्। १० हिमदीधितिश्चन्द्रः। ११ राजधानी। १२ भगिन्या 'मासी'–मातुर्भगिनी–तया। १३ गणिनी–साध्वीगणस्वामिनी।

([illegible], [illegible] भूपागमनम्— )

चिन्ताकृष्टमगो भूपचित्तं तद्रूपदर्शनात्। पपात स तदाकृष्टिहेतोर्भूपानजूहवत् ॥ ९५ ॥

पुरीपूर्वदिशो भागे स्वयंवरणमण्डपे। समेत्यन्त्यत्र सर्वेऽपि निमन्त्रितमहीभृतः ॥ ९६ ॥

कुमारी सुमनीहारी मुखान् ज्ञात्वा नवं वरम्। समेममालया पुष्पमालया केलयिष्यति ॥ ९७ ॥

नवग्रहाभरत्नौघत्सकणे करकङ्कणे। इमे नीत्वाऽसि यास्यऽस्या भूपार्य सिद्धिरस्तु ते ॥ ९८ ॥

इत्युदित्वोत्सुके याते तस्मिन् सोऽथ व्यचिन्तयत्। संमुखे कङ्कणे श्रेष्ठं शकुनं समभूद् मम ॥ ९९ ॥

(मेघनादः [illegible] चचाल— )

माङ्गल्यं वचनं चैतत् भूपार्य सिद्धिरस्त्विति। ततो यामीति निश्चित्य चचाल किल तद्दिशि ॥ १०० ॥

( [illegible]— )

विस्फुरत्स्वर्णकलसं रणत्किङ्किणितोरणम्। मुक्तावचूलमालाभिर्मालितं शालितं ध्वजैः ॥ १ ॥

कर्पूरपूरकस्तूरीमण्डलीमण्डितक्षितिम्। मौक्तिकस्वस्तिकाकीर्णं विस्तीर्णं तीर्णखार्णवम् ॥ २ ॥

रमणीरमणीयं तमनणीयःश्रिया श्रितम्। मुमुदे मण्डपं दृष्ट्वा मण्डितं नरमण्डनः ॥ ३ ॥ ( विशेषकम् )

( स्वयंवरागतनरपतिवर्णना — )

येषां घनेषु सैन्येषु स्फूर्जद्दुर्जायितं रवेः। ज्वालाभिः खड्गमालानामुद्यद्विद्युच्छतायितम् ॥ ४ ॥

येषां सहीरैः कोटीरैः स्फुरत्सूर्यशतायितम्। निर्मलैश्चातपत्रैश्च व्योम्नि सोमशतायितम् ॥ ५ ॥

यान् सुवर्णसवर्णाङ्गान् रत्नालंकृत्यलंकृतान्। राजन्यान् रोहणालीनान् चलान् स्वर्णाचलानिव ॥ ६ ॥

१ चिन्ताकृष्टिः–चिन्ताकूपपतितचित्तस्य आकर्षणम्। २ सूर्याद्या नव ग्रहाः। ३ अनणीयो महत्। ४ विद्युच्छतमिव आचरितम्। ५ कोटीरा मुकुटाः। ६ चन्द्रशतवद् आचरितम्। ७ रोहणाख्ये पर्वते आलीनान्।

कुञ्जरेन्द्रसमारूढान् सिंहान् शृङ्गगतानिव । वर्षतश्च सुवर्णानि जलानि जलदानिव ॥ ७ ॥
दिशो दिशः सशतशः-तान् समेतान् नृपोत्तमान् । दृष्ट्वा व्यचिन्तयदहो ! स्त्रीनामाऽप्यतिमोहनम् ॥ ८ ॥
अत्युच्चचारुमञ्चस्था रत्नसिंहासनावलिः । तैर्नरेन्द्रैरलंचक्रे मित्र-मन्त्रिवरावृतैः ॥ ९ ॥
( मेघनादकुमारम् काऽपि देवी अवदत्— )
अथो कुमारमागत्य देवी काऽप्यवदद् वचः । लक्ष्म्या दत्तममुं हंसं पुण्याश्रय ! समाश्रय ॥ १० ॥
नृराजं राजहंसस्थं कृत्वा देवी दिवं ययौ । स दध्यौ मयि साम्राज्यदेवता ममतायुता ॥ ११ ॥
दृष्ट्वा व्योम्नि मरालस्थं भूपा विस्मयमित्ययुः । सभालोकसमालोकपरः किं कोऽप्ययं सुरः ? ॥ १२ ॥
( कन्या त्रैलोक्यसुन्दरी— )
ततः श्रीचन्दनालेपा सुधांशुविमलांशुका । सरत्नकोटीकोटीरप्रमुखाभरणभारिणी ॥ १३ ॥
नरयानसमारूढा शतसंख्यसखीवृता । वुद्धिपारीप्रतीहारीनीतमालास्थलोचना ॥ १४ ॥
श्रीः पुण्याद् दानतः कीर्तिः सिद्धिर्ज्ञानाद् मतिःश्रुतात् । प्रादुरासीत् तथा सौधात् कन्या त्रैलोक्यसुन्दरी ॥
शृङ्गाराम्भोघनालीव नृपचित्तसरस्ततिम् । सा तत्रोत्तरलीचक्रे न तु तं सत्त्वसागरम् ॥ १६ ॥
कुमरी सन्मुखं पाणिमुध्धृत्य वचनोद्वरा । प्रतिहारी समारेभे सुरूपं भूपवर्णनम् ॥ १७ ॥
( काञ्चनपुरीपतिर्नृपः अमरचन्द्रः-- )
अयि कुवलयनेत्रे ! काञ्चनाया नगर्याः नृपतिरमरचन्द्रः कीर्ति-चन्द्रातपाढ्यः ।
अनुमितिविमलाङ्गं लोचनाभ्यां निपीय । त्वमसि रसचकोरि ! प्राप्नुहि प्रौढहर्षम् ॥ १८ ॥

१ मेघानिव । २ मरालो-हंसः । ३ अंशुकं-वस्त्रम् । ४ पारी पात्रविशेषः । ५ चञ्चलीचक्रे । ६ तं मेघनादम् । ७ वरवचना ।

तत्रैतेन महोदधेरपि महागम्भीरमत्यद्भुतं । प्रौढैरष्टशतैस्तथाऽष्टसहितै रम्यैश्चतुर्द्वा(र्द्वा)रिभिः ।
श्रीजैनप्रतिमाऽऽलिमालितमहाप्रासादराजैर्वृतं । पीयूषोज्ज्वलनीरपूरभरितं सारं सरः कारितम् ॥ १९ ॥
द्वात्रिंशत् शतान्येवं द्वात्रिंशदधिकान्यसौ । जैनबिम्बानि निर्माय निर्मायः समपूपुजत् ॥ २० ॥
[* कवित्वस्य व्याख्यां नृपविगणनां मस्तकधुतेः ।
4 (गौडभूमीमहेन्द्रः)
अयि ! कनकरथोऽयं गौडभूमीमहेन्द्रः स्ववितरणयशोभिर्येन धूतो महेन्द्रः ।
गुणिगणगुणविज्ञे ! तं शृणु त्वं प्रमोदात् शृणु च सुकृतगीतान्यस्य कर्णामृतानि ॥ २१ ॥
आबाल्यात् शिक्षितानां सुविमलकरिणां विंशतेः पृष्ठभागे यश्च श्रीखण्डपट्टैरतिदृढरचनं पीठबन्धं निधाय ।
सौवर्णं जैनहर्म्यं तदुपरि च चतुर्द्वाररम्यं सुनाट्यं । गर्जन्निस्वाननादैरखिलदलवृतो योऽकरोत् तीर्थयात्राम्॥
8 [* प्रदेशन्यङ्गुल्या अपि विचलनाद् वाक्यविरतौ ।
(कान्तीनगरीशः पद्मः—)
कान्तीनगर्यां नृप एष पद्मः साम्राज्यपद्मास्थिरवासपद्मः ।
यः कीर्तिपत्रैर्भुवनं सरोवत् व्यापत् पुनः कण्टकसंगहीनः ॥ २३ ॥
12 सम्यक्त्वस्य परीक्षणात् प्रमुदितेन्द्रेण दत्ताद् वराद् विश्वाजेयो विजित्य प्रतिनृपतिवरान् यश्चतुष्षष्टिसंख्यान्।
चक्रे तेषां करस्थैः शुचिजलकलसैः स्नात्रपूर्वं महात्मा ब्रह्मण्यास्थाप्य चित्तं शशिमणिविहितश्रीजिनस्य
प्रतिष्ठा–राजसूयाख्यमुत्सवं प्रविधाय सः । सम्राट् संस्थापयामास स्वस्वराज्येषु भूपतीन् ॥२५॥ [प्रतिष्ठाम्॥२४॥
[* मुखे हस्तादानात् ।
(प्रतिष्ठानपुरनाथो हेमचूडः—)
एनं प्रतिष्ठानपुरस्य नाथं श्रीहेमचूडं प्रथितं पृथिव्याम् । शृङ्गारपूरामृतवल्लिविश्वकल्पद्रुमालिङ्गय कोमलाङ्गि ! ॥२६॥

* एतच्चिह्नितानि वाक्यानि त्रैलोक्यसुन्दर्या अस्वीकारसूचकानि । १ वितरणं दानम् । २ पद्यमिदं विचिन्त्यम् ।

यः पूर्वं रचितस्य पत्रनिचये सौवर्ण्यवर्णालिभिः संलेख्य श्रुतपुस्तकान् सुयतिनां प्रादात् पितृश्रेयसे।
श्रीतीर्थेशपदप्रणामकृतये देवेश्वरैरागतैः दृष्ट्वा ताननतिपुण्यहृष्टहृदयैर्धूतं शिरो विस्मयात् ॥ २७ ॥
[ *त्वमतिनिपुणा–इति प्रवचनात्।

(अन्ये नृपा.—)

4 हेमाङ्गद-श्रीधर-पुष्पचूल-वज्रायुध-स्वर्णभुजादयोऽमी। महीमहेन्द्रान् मनसा परीक्ष्य पुण्यानुमानेन लभस्व तन्वि!॥
*कुमारी न त्वेवम्–पुनरपि पुनः प्रैरयदिमाम्।
इति प्रतीहारिकया प्रधानपृथ्वीभुजां वर्णनसिन्धुमध्ये। तथा कथंचिद् निहितं यथाऽस्या मनोऽतिमूढं न विवेद
कन्याकरग्रहावेश–रज्जुविश्लेपतस्तदा। नृपचित्तमहाकुम्भाः पेतुर्दुःखमहाऽवटे' ॥ ३० ॥ [ कार्यम् ॥ २९ ॥
8 वुक्षेपु वुद्ध्या चक्षेपु विमुखीपु सखीपु च। पुण्याद् वर इति स्वस्थे राजशेखरभूपतौ ॥ ३१ ॥

( हंसो मेघनादमवर्णयत्— )

स्वःसुवर्णविसाहारात् किं सुवर्णं सुकोमलम्। हंसो वाणीमतोऽभाणीत् कुमारं पृष्ठतो वहन् ॥ ३२ ॥
चक्रेशो जयदेवनामनृपतिः षट्खण्डपृथ्वीजयात् भुञ्जानो विषयान् मुदा प्रतिदिनं लक्षद्वयीसंख्यया।
12 दत्त्वा हेम ददौ पदं स्वशयनात् भूमौ प्रियाभिर्मितान् प्रासादान् स कृती चकार सुकृती दानैकवीरस्तु यः ॥
पुत्रस्तदीयो नृपवैरसिंहो जीयाच्चिरं निर्मलधर्मधीरः। तदङ्गजोऽयं विजयी जगत्यां श्रीमेघनादः स्फुटकीर्तिवादः॥
विततसुकृततस्त्वयि प्रसन्ना समजनि राज्यसुरी ततस्तयाऽयम्। सकलनृपगुणैः परीक्ष्य दत्तो वृणु तदमुं मम
[ पृष्ठगं कुमारम् ॥ ३५ ॥

* त्रैलोक्यसुन्दर्याः अस्वीकारसूचकानि वाक्यानि। १ अवटे–कूपे।

तदति परिहर मद्‌धचिन्तां स्वजनविषादविनाशहेतवे त्वम् ।
तदति परिहर मद्‌धचिन्तां स्वजनविषादविनाशहेतवे त्वम् । भज सुखमखसंमदं हृदन्तः कुरु मुखचन्द्ररुचा शुभां सभां त्वम् ॥ ३६ ॥

तदनु तदनुरागपत्रपात्रात् नृपतनयाहृदयाम्बुजाद् विनिद्रात् । अरुणवदनहंसवाक्प्रभाभिर्भ्रमर इवाऽपगतोऽभितो विषादः ॥३७॥

अवहृपिततनूरुहा नताङ्गी स्फुरदुरुवेपथुवेपमानवस्त्रा । तरलतरुकटाक्षलोलनेत्रा नृपदुहिता सहिता [ ह्यनेकभावैः ॥ ३८ ॥

( गेपगादस्य मालारोपणम्– )

परिमलमुदितालिगीयमानां स्वकरसरोजयुगेन संगमय्य । परिमलमुदितालिगीयमानां स्वकरसरोजयुगेन संगमय्य । विधिविलसितविस्मितस्य कण्ठे नृपतिसुतस्य मुदा न्यधत्त मालाम् ॥ ३९ ॥ तदा च—

हंसास्यद्वारनिर्यातसौभाग्याकृष्टया तया । समं गत्वा नृपदृशः कुमारे विस्मयात् स्थिताः ॥ ४० ॥

देवीदत्तमसूनेऽथ भ्रामिते तद्‌दृशां पुरः । नीतास्तेन विशामीशास्ते विश्वेऽपि स्ववश्यताम् ॥ ४१ ॥

( लक्ष्मीदेवी अब्रवीत— )

सुप्रकाशे तदाकाशे सिंहासनसमाश्रिता । देवताभिर्युता ताभिर्लक्ष्मीर्हृष्टा ततोऽब्रवीत् ॥ ४२ ॥

हंहो ! निरंहोर्मनसः श्रूयतां वचनं नृपाः ! । त्रिखण्डानामखण्डानामथो नाथो भवत्यसौ ॥ ४३ ॥

यतः शुचिर्दानरुचिः सुकृती च कलाकृती । तात्त्विकः सात्त्विकश्चैष गुणज्ञो गुणिनां गणे ॥ ४४ ॥

पुरा परीक्ष्य वीक्षायां वद्धनस्य गुणैर्हृढैः । मन्मनोऽन्यं मनोज्ञं नो मन्यते भुवने नृपम् ॥ ४५ ॥

आज्ञा मान्या ततोऽस्यैव मान्याः कुरुत कल्पनाः । स्वामिनं स्वसमानं तन्नमतैनं गतैनसं ॥ ४६ ॥

१ अरां मनः–इति गम्यते । २ अहः–पापम् । ३ पु. मनोऽन्यम्–४ ४ एनः–पापम् ।

एवमुक्त्वाऽऽसनं मुक्त्वा श्रीरेत्याऽम्बरतः पुरः । नमत्सु तेषु भूते(पे)षु पुण्ड्रं चक्रे च चान्दनम् ॥ ४७ ॥
चतुरङ्गचमूचक्रस्वामिनीभिर्मुदा महत् । वर्धापनं प्रवर्धिष्णु दिव्याक्षतभरैः कृतम् ॥ ४८ ॥
दिवि दुन्दुभयो नेदुः प्रसेदुः सकला दिशः । रसस्फीतं जगुर्गीतं देव्यो दिव्याङ्गकान्तयः ॥ ४९ ॥
अङ्गनागानपीयूष—धाराभिर्व्योमपल्वलम् । भृतं ततोऽनृणीभूता भूर्मेघोपकृतेस्तदा ॥ ५० ॥
सत्प्रभावनया धर्मो न्यायो बुद्ध्या यथा तथा । स तया सप्रभो रेजे पद्मया पद्मनाभवत् ॥ ५१ ॥

( कृतत्रैलोक्य-सुन्दरीपाणिग्रहणो मेघनादः प्रासादं समासदत् )

ततश्च पञ्चशब्देषु वाद्यमानेषु निर्भरम् । स्तुवत्सु कविवृन्देषु जयवादिषु बन्दिषु ॥ ५२ ॥
ददानः स्वर्णदानानि राजहंसासनोऽम्बरे । सकलः कलभारूढः प्रौढभूपतिशोभितः ॥ ५३ ॥
अहंपूर्विकया लोकनेत्रैः पीतप्रभामृतः । राजशेखरराजस्य प्रासादं स समासदत् ॥ ५४ ॥
मिष्टान्नैः प्राज्यपक्वान्नैः सारैः सरसभोजनैः । सुवर्ण—वस्त्राभरणैर्दुकूलैर्मृदुलैस्तथा ॥ ५५ ॥
महोत्सवे महीनाथान् राजा श्रीराजशेखरः । सच्चकार चमत्कारयुतचित्तोऽतिचित्रितः ॥५६॥ (युग्मविशेषकम्)

( मेघनादो भूमिं विजेतुं चचाल— )

चचाल सोऽचलां जेतुमथो राजकराजिकः । अग्रे तथा प्रतापोऽपि ग्रहराजकराजितः ॥ ५७ ॥
निस्वानैर्घननिस्वानैर्गर्जितैर्मञ्जुसंजितैः । ढक्काभिर्भटहक्काभिः शब्दाद्वैतं तदाऽभवत् ॥ ५८ ॥
रथवजहुंजनाः कार्यं हृदिस्थं हस्तसंज्ञया । तदा बाधिर्यतोऽद्यापि ददते नोत्तरं दिशः ॥ ५९ ॥
इभकुम्भस्थलस्थानि सिन्दूरपटलान्यमुः । सूरेणाऽनेन विहिता किं संध्याऽरिग्रहापहा ॥ ६० ॥

---

१ भावावाम्—'रवावड्ं'। २ मेघः, मेघनादोऽपि। ३ ग्रहराजस्य करैः किरणैः—अजितः—बलोऽपि विशिष्ट इति। ४ मर्जुः—चाटुवादी चारणः। ५ भटानां हक्काररूपाभिः।

यौष्माकं सुदर्शनचक्रं भ्रान्तमास्माकचक्रवत् । तद् यातेति रथाः शत्रून् प्रेरयन्ति स्म किं ध्वजैः ॥६१॥
सहेतयश्च सस्नेहा दुर्जया मरुता अपि । वेलुः शस्त्रपतंगानां सदीपा इव पत्तयः ॥ ६२ ॥
दान्ताः कृत्वाऽथ दुर्दान्तानीन्द्रियाणि सुसाधुवत् । ज्ञानीव क्रूरकर्माणि विनाश्य क्रूरचेतसः ॥ ६३ ॥
संस्थाप्य धर्मिणो राज्यप्रासादान् भूतले यथा । नीत्वा सार्धं च सद्बुकान् चण्डो दण्ड–धनानि च ॥६४॥

( मेघनादः सर्वं जित्वा प्रतिनिवृत्तः— )

इति जित्वा दिशः सर्वाः सर्वोर्वीशसमन्वितः । प्रार्थितः स्वसुरेणाथ विशालां प्रति सोऽचलत् ॥६५॥

( सरोवरम्— )

इतश्च पञ्चगव्यूतिशेषे पुरपथि स्थितम् । सरोवरं नरोत्तंसः प्रेक्ष्याऽस्थात् सपरिच्छदः ॥ ६६ ॥
केऽपि छायासु विश्रान्ताः श्रान्तरश्रमपीडिताः । अन्धा इव भवं भ्रान्त्वा धर्मस्थानेषु धर्मिणः ॥ ६७ ॥
तृषातुराः पपुर्नीरं शास्त्रं प्रज्ञापरा इव । मनसीव महाज्ञानाः स्नानं तत्र व्यधुर्जनाः ॥ ६८ ॥
मन्त्रिभिः कारितं तत्र मेघनादो महत्तरम् । राजराजेश्वरो हर्षात् राजावासं समाश्रयत् ॥ ६९ ॥
भूमीरुहारिशीर्षाणि संचूर्ण्य यशसः कणाः । राशीकृता इवाऽनेन राज्ञां तस्थुर्गुरुदराः ॥ ७० ॥

( वनपालविहित–उपायनवर्णना— )

सिंहासने निविष्टस्य सेवितस्य नरेश्वरैः । तस्य पद्मचयश्चक्रे वनपालैरुपायनम् ॥ ७१ ॥
तत्र पत्रशताकीर्णमेकं स्वर्णसरोरुहम् । स ईशः स्वशये निन्ये नासा–नेत्रमदप्रदम् ॥ ७२ ॥
तद्घ्राणप्राणपीयूषं गन्धं जिघ्रन्नरानमून् । व्यलोकयदिलापालो लीलाललितलोचनः ॥ ७३ ॥

१ प्रान्तरो दूरस्थो मार्गः । २ भूमीरुहारिः—अग्निः । ३ शयो हस्तः

( इद सरः केन कारितम् ?— )

सरः साररसाऽऽपूर्णं किमेतत् केन कारितम् ? । अप्राक्षीद् वनपालान् सोऽवनिपालावलीवृतः ॥ ७४ ॥

( सरोवरस्य प्रणेता— )

ऊचुस्ते देवराजोऽस्य स्वसुरस्य पुरा तव । पितामहो महोयुक्तोऽभूद् मनोरथसंज्ञकः ॥ ७५ ॥
धृतं भूतचतुःशत्या द्वारैरष्टभिरेव च । सव्याऽपसव्यपक्षस्थसत्रप्रासादशोभितैः ॥ ७६ ॥
धर्मकर्ममहोत्कण्ठामकुण्ठां वहता हृदि । कारितं तेन तत् ख्यातं मनोरथसरो ह्रदः ॥ ७७ ॥
सूपकारैः सुपक्वानि सत्रेष्वन्नानि भावतः । स सदाऽदापयद् धर्मी धर्माधिकृतमन्त्रिभिः ॥ ७८ ॥
पूर्णिमास्याममावास्यां चतुर्दश्या(म)ष्टमीदिने । षष्ठाख्यं च चतुर्थाख्यं तपः कृत्वाऽभ्यगादिह ॥ ७९ ॥
अष्टासु जैनगेहेषु पूजामष्टविधां स्वयम् । कृत्वाऽष्टसु च सत्रेषु हृष्टो पान्थानभोजयत् ॥ ८० ॥
पारणस्य दिने स्वर्णदानं दानेश्वरो मुदा । यावद्वेदं सुपान्थेभ्यो यावज्जीवं स्वयं ददौ ॥ ८१ ॥
कालं कृत्वा शुभध्यानादिन्द्रसामानिकः सुरः । ईशानदेवलोकेऽभूत् स राजर्षिर्महर्द्धिमान् ॥ ८२ ॥
यदा नन्दीश्वरे याति ससुरस्तीर्थयात्रया । सरोवरे तदाऽत्रापि समायाति कदाचन ॥ ८३ ॥
वयं तेन सरः-सत्र-प्रासाद-तरुपालने । नियुक्ता धर्मिणो नित्यं ततो रक्षां विदध्महे ॥ ८४ ॥
इत्युक्त्वा सरसो वृत्तं सारसान् स रसाधिपः । जगन्मान्यः स संमान्यः तुष्टा दानाद् व्यसर्जयत् ॥ ८५ ॥
ततः सोऽचिन्तयच्चित्ते चित्रः पद्मे गुणोच्चयः । सौरभ्यं सौकुमार्यं च साधुवत् सुकुलीनता ॥ ८६ ॥
अहो! घ्राणं विनिद्राणं प्राणितोऽकारि येन मे । क्वाऽपि पत्रे स पद्मस्य गन्धो मूर्तोऽपि वीक्ष्यते ॥८७॥

१ सव्य–अपसव्यौ—दक्षिण—वामौ । २ पद्मपक्षे सुकुलः—सभामिः. तत्र लीनता ।

तेनेति पत्रविततिर्वितेने वितना यदा । तदा मुदाऽत्र मुद्राङ्कमेकं लेखमलोकत ॥ ८८ ॥
तेनेति पत्रविततिर्वितेने वितना यदा । इति प्रेक्ष्याऽक्षरश्रेणिं रसनिश्रेणिमारुहत् ॥८९॥
(मुमूर्छ मेघनादः—) 'श्रीवैरसिंहराजेन मेघनादप्रसादतः' । इति प्रेक्ष्याऽक्षरश्रेणिं रसनिश्रेणिमारुहत् ॥८९॥
पितृनामावलोकेन हर्षं दुःखं वियोगतः । आत्मनिन्दामविनयात् विपापः प्राप भूमिकाम् ॥९०॥ तथाहि—
(मेघनादमिषा प्रहितो लेखः—)
स्वस्तिश्रीरत्नपुर्याः सुकृतकृतमतिर्भूपतिर्वैरसिंहः । क्वाऽपि स्थाने स्वपुत्रं दिशति गुणशतालंकृतं मेघनादम् ।
वत्साऽनिच्छासुखं मां तव विरहभराद् राज्यभाराच्च खिन्नं । तूर्णं भो ! भक्तिपूरामृतकलसनिभात् मोदय [स्वाङ्गसंगात् ॥
उत्कण्ठातस्ततार्चेशस्तातादेशस्य पत्रिकम् । इति प्रवाच्याऽनिर्वाच्यसंमर्दं स दधौ हृदि ॥९२॥
ततो विचार-वित्तेशः स्वचित्ते स व्यचिन्तयत् । अहो ! पितृगिरोऽतुच्छसद्वात्सल्यगिरो भृशम् ॥९३॥ यतः—
(मेघनादगतं पितृवात्सल्यम्—)
पितुर्मनोरोहणभूमिकाया अपूर्वमेतत् किल भेदकत्वम् । यत्र स्थिता पुत्रकुदोषधूलिर्भजेदवश्यं गुणरत्नभावम्॥
जनकस्य तनूजा न मान्यताजनकस्य च । प्राप्य शिक्षावचोऽप्येकं कुप्यन्ते ते कुपुत्रकाः ॥ ९५ ॥
निजभाग्यलतोद्भूतं प्रभूतापुष्पमद्भुतम् । प्राप्य यः पूजयेत् पित्रोश्चरणौ स नरोत्तमः ॥ ९६ ॥
करकोमलितैर्भोज्यैर्भाजने येन भोजितः । तं तातं विस्मृतं मोहाद् हा ! हाऽहं स्मारितोऽक्षरैः ॥९७॥
लोभाद् धर्मं स्मरात्छीलं प्रतिपन्नमसत्त्वतः । स्नेहं च विस्मरेद् वृद्धैयैः स जीवेत् पुमान् कथम् ? ॥ ९८ ॥
(पुनरपि मेघनादमूर्छा–) इति दुःखभराक्रान्तः सोऽपतद् मूर्छया भुवि । विनयस्य मनस्थस्य गुरोः शिक्षाहतेरिव ॥

१ ऐच्छिकसुखहीनम् । २ ततो विस्तारयुतः—आवेशो यस्य । ३ गिरन्ति इति–गिरः । ४ मान्यतया जनकस्य गुरोः । ५ ये तनूजा जनकस्य मान्यताजनकविशेषणविशिष्टस्य शिक्षावचः प्राप्य कुप्यन्ते ते न तनूजाः, किन्तु कुपुत्रका एव–इति ज्ञायते । ६ असत्त्वतो निर्बलत्वेन, प्रतिपन्नं शरणागतम् । ७ वृद्धैः—धन–धान्य–राज्य–सुखादिवृद्धैः । ८ विनयरूपोऽत्र गुरुः ।

( तदुपचाराः— )

श्रीमेघनादं राजेन्द्रं स राजा राजशेखरः। समुपाचीचरचारुविधैः स सविधस्थितः ॥ २०० ॥ ततश्च—
सिञ्चन्ति स्म जलं केचित् मुञ्चन्ति साऽम्बुजानि के। समीरमीरयन्ति स्म केऽस्मिन् विस्मितदुःखिताः ॥१॥
मसृणैर्घुसृणैश्चारु चन्दनैरङ्गवन्दनैः। तस्याऽवशा विवशता लेपितैर्न व्यलोपि तैः ॥ २ ॥
उपचाराः कृताः सर्वे तस्मिन्न परिचक्रमुः। पटूनि वाऽथ चाटूनि हितान्यज्ञे जने यथा ॥ ३ ॥
विद्यावैशारद्यैस्तैर्वैद्यैर्देहेऽस्य वीक्षिते। नात्मा लक्षयते लक्ष्यं तद्दक्षाः प्रवदन्ति तम् ॥ ४ ॥

( मूर्छनाशे वैद्यानामपि वैफल्यम्— )

तस्याङ्गारोग्यसाध्यं ते मत्वाऽसाध्यं विचक्षणाः। क्षणाद् वैद्या ययुर्दुःखात् श्राद्धहीना इव द्विजाः ॥५॥
( शोकक्षणः— ) एवं जाते महोत्पाते ह्यापाते दुःखवैरिणः। लुलुठुः केऽपि भूपीठे तःमहारहता इव ॥६॥
कस्मादकस्मादस्माकं पश्यतां नय दुर्नय!। राजेन्द्रं यमराजेति महीशा मुमुहुर्मुहुः ॥ ७ ॥
आजन्माराधिते! बुद्धे! सा काऽपि प्रकटा भव। जयी त्वयाऽयं जायेत सचिवा इत्यचिन्तयन् ॥ ८ ॥
गरीयसां गुणानां क्व स्थानमेनं विना भुवि। शात्रवैरपि तत्रेत्थं दुःखांचक्रे चिरं चरैः ॥ ९ ॥
(त्रैलोक्यसुन्दरीशोकः—) अथाऽग्रमहिषी तस्य देवी त्रैलोक्यसुन्दरी। बहुशोकमलं गाढं तुमैलं बहुशोऽशृणोत् ॥
विदुषी सा सखीमेवमवादीत् तां प्रियंवदाम्। दुःखगुर्वीरोहाब्दः कः शब्दः श्रूयते सखि! ॥ ११ ॥
अनाकर्ण्यैव तत् सोचे तदीयं वलयद्वयम्। स्पृशन्ती निजहस्तेन स्फारयन्ती स्वलोचने ॥ १२ ॥
प्राप्याऽपि पाणिकमलं तव स्थानमदोऽद्भुतम्। किं कङ्कणे गतच्छाये इव त्रैलोक्यसुन्दरि! ॥ १३ ॥

१ तैस्तैर्लेपितैः तस्य मेघनादस्य विवशता न व्यलोपि। २ द्विजानां श्राद्धं हि प्रियम्—यतो मोदकप्राप्तिः। ३ कोलाहलम्। ४ गुर्वी—भाषायाम्—' गर्भो '

सोचे भङ्क्त्वा नवैः स्वर्णैरित्यथोक्ते विषादिनी। दध्यौ भाव्यऽशुभं किञ्चित् नववाक्याद् विलस्यते ॥१४॥
हा! हित्वाऽस्मान् कथं स्वामिन्! यासि लोकान्तरं स्वयम्। इत्युचै रुदितं श्रुत्वा दध्यौ त्रैलोक्यसुन्दरी ॥१५॥
स्वामिचामरधारिण्यौ विमला-कमलाभिधौ। कथं चक्रन्दतुः सेति समुत्तस्थौ समुत्सुका ॥ १६ ॥
संभ्रान्ता सा ततो यान्ती त्रुटितात् सारहारतः। चिक्षेप मौक्तिकश्रेणीं पुण्यबीजमिव क्षितौ ॥ १७ ॥
कुर्वन्त्य इवाऽसौख्यस्याऽऽगच्छतोऽनुपदं मुदे ॥१८॥
[1]प्रियंवदादयः सख्यश्चेलुरलक्त-काङ्कण(न)म् (?)। (त्रैलोक्यसुन्दरी-मूर्छा-विलापौ)
ततः प्रेक्ष्याऽतिदुष्प्रेक्ष्यामवस्थां भर्तुरात्मनः। वियोगोष्णतुसंतप्ता पद्मिनी साऽपतद् भुवि ॥ १९ ॥
सखीशीतापचारैः स्राग् मूर्छाऽगच्छत् तदङ्गतः। ज्वलद्वियोगज्वलनज्वलज्जालभयादिव ॥ २० ॥
यद्वियोगव्यथामन्था ममन्थाऽस्या मनोऽम्बुधिम्। दुःखक्षाराम्बुयुग्वाणीमणीश्रेणी तदुद्ययौ ॥ २१ ॥
आश्वस्य स्वामिनः स्वस्योन्नमय्यास्यमथाऽब्रवीत्। ब्रूहि नाथ! यतो नाऽथ करिष्ये विप्रियं प्रिय! ॥२२॥
वाक्यं देहि दृशं देहि स्मितं वा देहि वल्लभ!। एकेनाऽप्येषु दत्तेन जीवाम्येपाऽन्यथा कथम्? ॥२३ ॥
श्यामास्यताऽक्षिसंकोचो मानाद् मौनं चिरं कृतम्। स्नेहं हन्ति त्वयेत्युक्तं मयि स्मरं भृतास्मर! ॥२४॥
शत्रूणामपि नम्राणां त्वं प्रसादपरः सदा। मयि नाऽसि कथं मानादपमानमनुस्मरन् ॥ २५ ॥
यावदेवमपि प्रोक्ते न रेजे च ततस्तथा। व्यचिन्ति स्वगतं धर्मवाक्यादेष वदिष्यति ॥ २६ ॥
प्रोचे प्राणेश! मध्याह्नस्वपनं न वरं बहु। उत्तिष्ठाऽमी निविष्टा हि विद्वांसो वचनेच्छवः ॥ २७ ॥
त्वद्दानयशसाऽऽनीता द्वारे सन्त्यर्थिनोऽर्थिनः। दानप्रिय! प्रियं दानं तेभ्यो देहि मुदे हि मे ॥ २८ ॥

१ न गम्यतेऽस्य भावः। २ स्मृतिं नय।

सायंतनी जिने पूजा भूजाने ! क्रियतां त्वया । त्वं पूजापुण्यतः कालं त्रिकालमपि वञ्चसे ॥ २९ ॥
तद्वचोऽनाप्य साऽमूर्छद् मूर्छयन्ती सभासदः। सखीभिः शिक्षिताऽरोदीद् रोदयन्तीव रोदसी ॥३०॥

( त्रैलोक्यसुन्दरी परलोकप्रयाणाय प्रोत्तस्थौ— )

परासुं तं परिज्ञाय प्राणनाथं महासती । परलोकप्रयाणाय प्रोत्तस्थौ सुस्थिरा तदा ॥ ३१ ॥

( तदकरणाय अन्येषाम् उपरोधः— )

सतां सद्वाक्यसंबोधम्–उपरोधं महीभृताम् । नाऽमंस्त शस्तशास्त्रार्थानुक्त्वा विनयवाक्यतः ॥ ३२ ॥
विश्वाग्निःस्वामिकाच्छन्याद् बिभ्यती वाऽमुना समम् । निजालीषु नृपालीषु साऽचालीद् दुःखितास्वथ ॥३३॥
(प्रियंवदा प्रोचे-) तदा प्रियंवदा प्रोचे पृथ्विपत्नीयुतः पतिः । याति ते किं ततोऽस्वस्था ज्ञातं वाऽसि रजोमयी ॥
लोकाः कुलबलं भूपाः हृद्बलं मुनयस्तदा । सुस्नेहबलमित्याहुर्दक्षं सर्वं तु साहसे ॥ ३५ ॥
(सर्वेषां विस्मयः-) प्रजापाश्च प्रजापाश्च प्रजाः सर्वाश्च विस्मिताः । भवामोहेन सत्त्वेन तस्या रूपेण च क्रमात् ॥
(चिता-) रचितायां चितायां सा दध्यौ–श्रीचन्दनादयः । स्पर्शस्नेहात् समं तस्थुर्भूभुजाऽत्र हविर्भुजि ॥

( त्रैलोक्यसुन्दरीजननी दुःखिनी— )

दुःखिनीं जननीं सोचे किं दुःखायस्व मानसे ! विवाह इव मन्येऽग्निमयाऽम्ब ! पतिपार्श्वगा ॥ ३८ ॥

( जीवन्तौ दम्पती— )

इत्युक्त्वा त्यक्तहृत्कम्पा यावज्झम्पामदादसौ । जीवन्तौ दम्पती तावद् दृष्टौ सिंहासने जनैः ॥ ३९ ॥
एष धन्यः पितुर्भक्तो धन्यैषाऽतिपतिव्रता । स्तुवन्तो ददृशुश्चैवं सुरं लोकाः पुरस्सरम् ॥ ४० ॥

१ पृथ्वीपते ! । २ परासुम्–गतप्राणम् । ३ प्रकर्षेण जापसहिता इति ।

( मधनादजनक—दयाः सगमः, सल.पथ— )

आगच्छन् स्वर्गतोऽद्राक्षमहं रत्नपुरेश्वरम् । गवाक्षे दुःखिनं लेखलेखिनं भूविलेखिनम्[1] ॥ ४६ ॥
परोपकृतिलोभेन दुःखक्षोभेण तस्य च । प्रेरितः पार्श्वमेत्याऽहमपृच्छमसुखं नृपम् ॥ ४७ ॥
वैरसिंहनृपः प्रोचे प्रमृज्य निजलोचने । गीर्वाण ! शृणु मे वाणीमन्तर्वाणि[2]गणाग्रणीः ॥ ४८ ॥
सुतो गुणयुतो देव ! भूविभूषणमद्भुतः । ययौ देशान्तरे क्वाऽपि मया प्रापि पुनः स न ॥४९॥
अथ द्वादश वर्षाणि पश्यतः स्वैस्त्यशीः (?) सुतम् । जग्मुर्वार्तास्तु नाऽऽजग्मुस्तस्य[3] प्रीतिप्रदा मम ॥ यतः—
भृशायतेऽन्वहं धर्मः स्वजनश्च सुखायते । वंशः शस्तायते येन को वाञ्छति न तं सुतम् ॥५१॥
देवीदत्तप्रसादोऽयं खण्डत्रितयनायकः । यः श्रूयते स मे पुत्रो नामसाम्येन भूतले ॥५२॥
व्यामोहमेघसंपूर्णं प्रावृड्वद् यौवनं ययौ । शरद्वद् वार्धके हंसप्रकाशं[4] संस्मराम्यहम् ॥५३॥
सुरप्रवर ! चेल्लेखमसुमाप्य ममेति सः । तस्य न्यस्य महीमंसे[5] मुनीन् सेवे स्वमुक्तये ॥ ५४ ॥

१ भुव विलिखति–इति । २ अन्तर्वाणिः—पण्डितः । ३ न अवगतम् । ४ हंसतुल्यं पुत्रम् । ५ तस्य अंसे स्कन्धे महीं भूमिम्–राज्यं न्यस्य मुनीन् सेवे–संयमं समाश्रये ।

प्रोच्येति स शुचिर्वाचं तस्थौ प्रोचे मया ततः। लेखं स्थापय मत्पाणौ हर्षं स्वं मानसं नृप ! ॥ ५५ ॥
त्वत्पुत्रं मेलयिष्यामि खेलयिष्यामि ते मनः। तत्रेत्युक्त्वा गृहीत्वाऽहमागच्छं स्वसरोवरे ॥ ५६ ॥

( देवकृता मेघनाद-परीक्षा— )

सैन्यावासांस्तव प्रेक्ष्य चित्तेऽचिन्ति मया ततः। परीक्षेऽहं पितुर्भक्तिमस्मिन् विश्वेश्वरे स्थिराम् ॥ ५७ ॥
एष लेखस्ततोऽक्षेपि छद्मना पद्मनालके। ततो मूर्छां मया प्रेक्ष्य विस्मृतं विनयात् तव ॥ ५८ ॥
मम पौत्रस्य पुत्रीति ज्ञात्वा त्वन्मूर्छया ततः। पतिव्रताव्रतस्थैर्यमस्याः सत्या मयेक्षितम् ॥ ५९ ॥ यतः—
दानवान् धनवान् श्रेयान् विद्यावान् बलवान् पुमान्। पितृ-मातृ-गुरुष्वेषु विनयेनैव राजते ॥६०॥
चातुर्यमार्जवं रूपं कलासु किल कौशलम्। पतिव्रताव्रतेनैव कुलवध्वाः सुशोभते ॥६१॥ अतः—
(देवस्तुष्टः-) तुष्टस्त्वयि पितुर्भक्त्या हृष्टोऽस्या भर्तृभक्तितः। आचक्ष्व तद् वरं राजन्! पुत्रि! त्वमपि सत्वरम् ॥
अमरो विररामैवमुक्त्वा तावूचतुस्ततः। नास्ति वाञ्छा तवाऽऽलोकादावयोस्तुष्टभावयोः ॥६३॥

( देवदत्ता विद्या, प्रतिमा च- )

श्रीमेघनादराजस्याऽनिच्छतोऽप्यमरोत्तमः। आकाशयानविद्यायाः कर्णे मन्त्रमदात् तदा ॥ ६४ ॥
विद्येयं विद्यमाना न प्रकाश्या कस्यचित् पुरः। सुरः शिक्षां प्रदायेति प्रोचे त्रैलोक्यसुन्दरीम् ॥ ६५ ॥
देवाधिदेवप्रतिमा गुणैरप्रतिमा त्वया। इयं सति! सुते! पूज्या भक्त्या चित्तस्य नित्यशः ॥ ६६ ॥
वत्से! चित्तेऽथ किंचित् तेऽसाध्यं साध्यं भवेत् तदा। स्मर्तव्य एव देवोऽहं समेष्यामि क्षणादिह ॥६७॥
(देवो गतः— ) अहो! महाप्रसादोऽयं तयेत्युक्ते कृतेऽञ्जलौ। दिवं विद्योतयन् देवो महसा सहसाऽगमत् ॥६८॥

१ लेखम्।

मूर्तिं देवाधिदेवस्य तदा स्वर्णसमुद्गके। संस्थाप्याऽऽरोहयत् पद्मगजं भूपो निजं मुदा ॥ ६९ ॥

( तातदर्शनाय अचलद् मेघनादः— )

द्विविधात्मबलेनैष द्विधा भूमिधरो धरान्। चालयन्नचलापालोऽचलन्निश्चलमानसः ॥ ७० ॥

तातदर्शनपीयूषभोज्यं द्वादशवार्षिकम्। बुभुक्षुभ्यां स्वचक्षुर्भ्यां दृष्टं तेन रजः पुरः ॥ ७१ ॥

४ प्रेक्ष्यान्तरिक्षे तद्धूलीमण्डलं मण्डलाधिपान्। निजान् प्रैषीत् परिज्ञानहेतवे वेगतो नृपः ॥ ७२ ॥

गत्वा ज्ञात्वा समागत्य तं प्रणत्य प्रहर्षिताः । याचमानास्तुष्टिदानं तेऽथ भूपं व्यजिज्ञपन् ॥ ७३ ॥

( मेघनादपिता वैरसिंहो मेघनादं समभ्येति— )

८ श्रीवैरसिंहभूपस्य स सुरस्त्वत्पितुः पुरः । स्वरूपं सकलं स्वामिन्! दर्पतोऽकथयत् पुरा ॥ ७४ ॥

ततस्त्वन्मिलनोत्कण्ठामकुण्ठां मनसा वहन्। देव! तातस्तवाऽभ्येति दैवतैः कृतागमः ॥ ७५ ॥

इति वाक्यसुधाप्रीतौ कर्णौ तस्याऽवगम्य च। संरम्भाल्लोचने मौढे हसतेऽथ प्रसस्रतुः ॥ ७६ ॥

( मेघनादो तातं ददर्श, प्रणनाम च— )

मेघनादोऽथ सानन्दः प्रफुल्लाक्षो विलोकते । यावत् तावत् पुरस्तात् तं हर्षात् तातं ददर्श सः ॥ ७७ ॥

तदा सर्वं सहायं स विहाय सहसा स्वयम् । प्रलुठन् प्रणनामैष पदपङ्केरुहे पितुः ॥ ७८ ॥

अकस्मात् पुत्रसंस्पर्शात् पित्रा प्रीतेन मुक्तयोः । हर्षाऽश्रुकणयोः पृष्ठे हृष्टैः (?) पर्यस्तयोस्तयोः ॥७९॥

( प्रीतः पिता- ) पिताऽपि तापितः स्वाङ्गस्वाङ्गजं संगमय्य सः । प्राप प्रीतिं परां काञ्चित् वेत्ति यां तन्मनो मनाक्॥

(मेघनादनगरप्रवेशः-) स्वाङ्गजं गजमारोप्य जनको जनकोटिभिः। परीतः स्वपुरीमध्ये शुभे प्रावीविशद् दिने ॥८१॥

सहाऽस्माभिः कृता क्रीडाऽनेन क्रीडाऽपि ना कृता । तत्र क्षत्रियपुत्राः के वावदूकास्तदाऽवदन् ॥ ८२ ॥

१ समुद्गको मञ्जूषाविशेषः–भाषायां ' डाबडो ' इति । २ विद्याबलेन, सैन्यबलेन च । ३ धरान् महीधरान् नृपान् अथवा अकारसंश्लेषे अधरान् अन्यान् सर्वान्। ४ देवसहायतः । ५ सांदिग्धमेतत् । ६ वाचालाः ।

लक्ष्मीवल्लीफलानीव स्वर्णपिण्डानदादसौ । मेघनादः स एवेति जगदुर्मागधा[1] गिरम् ॥ ८३ ॥
उत्सङ्गेऽस्माकमेतेन बालेन क्रीडितं चिरम् । वृद्धा धात्र्य इति प्रोच्य स्वचित्तेऽन्वभवन् मुदम् ॥ ८४ ॥
मङ्गलानि वधूवृन्दाद् आशीर्वादान् गुरुव्रजात् । उपायनान्यभीष्टेभ्यो गृह्णन् प्रीतिवचो जनात् ॥ ८५ ॥
ईक्षणे प्रेक्षणेऽर्थिजने जाम्बूनदोच्चयम् । ग्रामग्रामं[2] कवीन्द्रेभ्योऽगच्छद् यच्छन् पुरान्तरम् ॥८६॥ (युग्मम्)
(मेघनादपितृभक्तिः-) सौधान्तर्वैरसिंहोऽथ स्वासने संनिवेशयन् । जगदे मेघनादेन नत्वा कृत्वाऽञ्जलिं पुरः ॥८७॥
तात ! सर्वाणि सौख्यानि विना त्वत्पादसेवनम् । न रोचन्ते यथा प्रौढमोदका हीनशर्कराः[3] ॥ ८८ ॥
यतः-पितस्तवाऽपत्यमाधिपत्यं यदाऽऽप्नुवम्[4] । हेतुस्त्वं तत्र पुण्यस्य गन्धे मूलं यथा तरोः ॥ ८९ ॥
एवं विनयतः पाद-पीठेऽथ निविशन्[5] पितुः । स चमत्कारयांचक्रे सद्भक्तीनपि भूपतीन् ॥ ९० ॥
(प्रमनः पिता-) अथ द्वादशवर्षेभ्यः स्वसुतस्य समागमात् । प्रीतः स्वजनवर्गेभ्यो राजा भोज्यमदाद् मुदा ॥९१॥
(मेघनादे राज्यभारः, वैरसिंहव्रतग्रहणं च-)
ततोऽवादीत् सुतं पुत्र ! नय राज्यं नयस्थिरः । भोगेषु गतनिर्बन्धोऽनिर्बन्धो यास्य(स्य)तः शिवम् ॥९२॥
अनिच्छतोऽपि पुत्रस्य दत्त्वा राज्यं नरोत्तमः । चक्रेश्वरगुरोः पार्श्वे साग्रहः सोऽग्रहीद् व्रतम् ॥ ९३ ॥
वैरसिंहं विनेशं हि कथं स्यामिति दुःखिनीम् । गोत्रवृद्धां भुवं भूपः सहसा स शशास तत् ॥ ९४ ॥
(मेघनादसमृद्धिः) प्रातर्मध्यंदिने सायं पूजयित्वा जिनेश्वरम् । अदात् सदा स दानेशः स्वर्णकोटित्रिकं मुदा ॥९५॥
(मेघनादो नन्दीश्वरद्वीपं ययौ—)
देव्या त्रैलोक्यसुन्दर्या युतः शय्यागतोऽन्यदा । जागरूकोऽम्बरे रात्रौ किञ्चित् तेजो ददर्श सः ॥ ९६ ॥

१ सुवर्णोच्चयम् । २ ग्रामसमूहम् । ३ शर्करा-भाषायाम्-'साकर' इति । ४ हे पितः ! अहं तव अपत्यं यद् आधिपत्यं प्राप्नुवम्-इति । ५ अत्र 'निविशमानः' इति युक्तम्-निपूर्वस्य विशः-आत्मनेपदित्वात् ।

तदालोकविलोकाय प्रोत्थितोऽपि व्यलोकयत् । प्रधानानि विमानानि वृन्दारकैभृतानि च ॥ ९७ ॥
स देवविस्मयाऽचालीदम्बरे संवृताम्बरः । मिलित्वा सह तैरेकमप्राक्षीत् क्व प्रयास्यथ ?-॥ ९८ ॥
वाणीमवाणीद् गीर्वाणः शृणु नन्दीश्वरे वरे । सुराः शाश्वततीर्थेश-प्रणामाय प्रयान्त्यहो ! ॥ ९९ ॥
कुतुकिन् ! कौतुकाच्चेत्थं समायासि मया सह । सुप्रतिष्ठस्ततस्तिष्ठ विमाने मन्मनोमुदे ॥ २०० ॥
देवसन्माननादेवमासीनः स तदासने । ययौ नन्दीश्वरद्वीपसमीपममरैः समम् ॥ १ ॥

( नन्दीश्वरगतो जिनदेवप्रासादः- )

सुधासधर्मसंगीतं कुर्वतीष्वमरीष्वथ । खे विमुच्य विमानानि देवाः प्रासादमासदन् ॥ २ ॥
( देवकृता जिनपूजा- ) तीर्थाम्भःकलसैः स्नानं दिव्यपुष्पैश्च पूजनम् । धनुःपञ्चशतोन्मानमूर्तीनां विदधुः सुराः ॥३॥
अथो इन्द्राश्चतुष्षष्टिस्तुष्टियुक्ता विवेकतः । जिनस्याऽऽरात्रिकं कर्तुमस्मै राज्ञे तदा ददुः ॥ ४ ॥
( हेमशेखरः केवली- ) जिनमूर्तीर्नमस्कृत्य पुरस्कृत्य नृपं सुराः । हेमशेखरनामानं नेमुः केवलिनं जिनम् ॥ ५ ॥
श्रोतुं चित्तप्रविष्टेषूपनिविष्टेषु च तेष्वथ । दिदेश देशनां साधुः कृतधर्मनिवेशनाम् ॥ ६ ॥ तथाहि—

( केवलिकृता यात्रादेशना- ) सकलसुमनसां[2] या पावनी भावनीरैः प्रभवति सुकृताद्रेः सद्विवेकाब्जयुक्ता ।
भवमपि तमतीत्य प्रक्रमेत् स्वर्नदीव सुकृतिभिरिति साऽत्राऽऽरभ्यतां तीर्थयात्रा ॥ ७ ॥

भवद्भिः पूर्णिमा-चैत्रीमहापर्व सुपर्वभिः । विहाय विषयासंगं कर्तव्यं सकलं सदा ॥ ८ ॥
एवं सुधर्मवचनैः प्रस्तावौचित्यसंयुतैः । देवान् प्रमुदितान् श्रुत्वा मौनमाप महामुनिः ॥ ९ ॥

( केवलिने इन्द्रप्रश्नः— )

---

१ वृन्दारका देवाः । २ सुमनसो देवाः, सुपुरुषाश्च ।

सौधर्मेन्द्रो वचोऽवोचत् भगवन्! भरतनामनि। मम क्षेत्रे महातीर्थं किञ्चिद् भावि कदापि किम्? ॥ १०॥
(केवलिनिवेदनः-) आविरासीद् मुनेरास्यात् सोत्सुकेव सरस्वती। मा कार्षीर्मानसं स्वीयं दुःखावासं हि वासव! ॥ ११॥
यतः-(शत्रुंजयगिरिः, तद्वर्णना च)
पञ्चाशत्योजनी मूले तुङ्गत्वे चाष्टयोजनी। यस्याऽस्ति शिखरावासो दशयोजनसंमितः ॥ १२ ॥
शत्रुंजयगिरिः[1] सोऽयं प्रसिद्धः सिद्धिदायकः। सिद्धान्तेऽनन्ततीर्थेभ्यो श्रेष्ठ्यतः श्रूयते पुरा ॥ १३ ॥
यद् ब्रह्मचर्येण तपोयुतेन घनेन कालेन किलाऽन्यतीर्थे। एकोपवासेन तदत्र जीवाः शत्रुंजये सिद्धगिरौ लभन्ते ॥ १४ ॥
राजानश्चक्रिणश्चाथ मुनिराजा अनन्तशः। सिद्धाः सिद्धिं गमिष्यन्ति पुरा पश्चादपि ध्रुवम् ॥ १५ ॥
श्रीमद्युगादितीर्थेशतीर्थे सिद्धगिरेर्भृशम्। आविर्भावी प्रभावोऽस्य सुखितो भव वासव! ॥ १६ ॥
(युगः, मेघनादश्च ययुः—)
इति श्रुत्वा मुनिं नत्वा कृत्वा चित्तं निजं स्थिरम्। सौधर्मेन्द्रस्तथाऽन्येऽपि स्वस्वस्वर्गं सुरा ययुः ॥१७॥
(केवली ययौ) देवयुक्तोऽथ राजाऽयमगमत् स्वपुराय च। विद्याधरमुनिश्चैव केवली खेऽन्यतो ययौ ॥ १८ ॥
स्थाने तस्मिन् नृपं मुक्त्वा स्वर्गं सोऽगात् सुरोत्तमः। सन्तो यतो दृढस्नेहात् कार्यदीपप्रवृद्धिदाः ॥ १९ ॥
नृपः प्राणप्रियाः प्रोचे दयिते! किं नु रोदिषि?। समीक्ष्य स्वामिनं सेत्थमुद्गिरति स्म मुद्गिरम् ॥ २० ॥
(त्रैलोक्यसुन्दर्या 'क्व गतं भवता' इति पृष्टम्— )
विहाय मामिह स्वामिन्! रजनावजनावनौ[2]। केन किं संगतं क्वाऽपि गतं युष्माभिरुत्सुकैः ॥ २१ ॥
(तदनुत्तरम्, गमनापलापश्च— )

१ गोहिलवाडे वर्तमानं प्रसिद्धं तीर्थम्। २ इन्द्र!। ३ अजनावनौ-जनरहितभूमौ-एकान्ते इति।

गमने गमनं दैव-शिक्षातः स्थगयन्निजम् । सस्नेहोऽपि स दक्षोऽपि स्वकर्मप्रेरितोऽवदत् ॥ २२ ॥
लोकेऽस्मिन् लोलचित्तानां लोलाक्षीणां पुरो नराः । गुह्यवार्तांस्तु नैवाऽऽर्त्ता अपि प्रकटयन्ति ते ॥ २३ ॥
लीलया निर्विचाराऽसावित्युक्त्वा कठिनं वचः । सभामभासयद् गत्वा राजा राजासनश्रितः ॥ २४ ॥
४ ( अत एव स्नेहभङ्गेन त्रैलोक्यसुन्दर्या वैराग्यम्— )
मिथ्याऽऽस्यादप्यदः श्रुत्वा सा दध्यौ भुवि नाऽङ्गिनाम् । स्नेहो देहोऽथ नाऽहोऽपि[1]—कल्पनातो ध्रुवो ध्रुवम् ॥ २५ ॥
भासिनीत्युन्मनीभूय जातभूयस्तराऽरतिः । विश्वं विनश्वरं विश्वमवश्यं सा व्यभावयत् ॥ २६ ॥
(दैवस्मरणम्—) पितुः विनामहं देवं तं मनोरथसंज्ञकम् । सस्मार हतशं—सारं संसारं हातुमुत्सुका ॥२७॥
८ सुरः प्रादुरभूत् भूतप्रभूतप्रमदस्तनः । उवाच वत्से ! किं धत्से कार्यं कर्तुं सुचेतसा ॥ २८ ॥
तं निजं पूर्वजं प्रेक्ष्य सा जगाद सगद्गदम् । समीपे सुगुरोर्मां त्वं गृहाण सुर ! सत्वरम् ॥ २९ ॥
कर्मणो हि प्रधानत्वम्—इति विप्रियवर्जिता । अनित्यः सर्वसंसारः स्नेहहीनाऽहमस्मि तत् ॥ ३० ॥
समग्रस्वजनस्नेह—बन्धनिर्मुक्तमानसाम् । कृत्वा प्रसादं मां तात ! गृहाण गुरुसंनिधौ ॥ ३१ ॥
१२ भव्यं भावं विभाव्याऽस्या ज्ञानादथ सुरोत्तमः । प्रीतः पुत्रीचरित्रेण सोऽवदद् वदतां वरः ॥ ३२ ॥
( मेघनादपिता केवली, वलयमीरे गता त्रैलोक्यसुन्दरी— )
वत्से ! श्रीवैरसिंहस्य राजर्षेः सुतपस्यतः । अद्यैव केवलज्ञानम्—अपुनर्भूत्वभूरभूत् ॥ ३३ ॥
( कायनगरीति केवली— )

---

१ अप्रलपन । २ दुःखिता अपि । ३ कल्पनातो ध्रुवः स्नेहः, देहोऽपि अहरपि दिवसमपि न ध्रुवो ध्रुवम् । पुस्तके तु ' नेहोऽपि स्वल्पानतो ' इति पाठः । ४ जाता भूयस्तरा अरतिर्यस्याः सा । ५ विश्वं समग्रम् । ६ शं सुखम्, सारस्तु प्रतीत:—तौ हतौ यस्मिन्—तं हतशं—सारम्—संसारम् ।

कमलासनमासीनः सोऽस्ति काञ्चनपर्वते । प्रयान्तः सन्ति देवेन्द्राः सुते ! तस्य महेऽद्भुते ॥ ३४ ॥
यद्यस्ति परलोकेच्छा मुक्तेच्छायाः सुतेऽथ ते । गेहान्निसर तत् पाप-पयोधिं प्रतर त्वरं ॥ ३५ ॥

( तत्र गता त्रैलोक्यसुन्दरी— )

४ इत्युक्त्वा च ततो नीत्वा देवीं त्रैलोक्यसुन्दरीम् । ययौ काञ्चनशैलेऽथ तया सह ननाम तम् ॥३६॥

( वैरसिंहकेवलि-देशना— )

निविष्टेषु सुरेष्वग्रे वैरसिंहो महामुनिः । सदुःखां स्वस्नुषां वीक्ष्य सवैराग्यं वचोऽब्रवीत् ॥ ३७ ॥

( त्रैलोक्यसुन्दर्या व्रतयाचना-तस्या दीक्षा च— )

८ निशम्य शमसंपूर्णं शमिनोऽस्य मुनेर्वचः । चतुर्गतिभवोच्छित्त्यै ययाचे चतुरा व्रतम् ॥ ३८ ॥
मा कार्षीर्भवनिर्बन्धमेवमुक्त्वा मुनीश्वरः । दीक्षां ददौ स दक्षायाः समक्षं सर्वसंसदः ॥ ३९ ॥
प्रव्रज्यां प्राप्य संतुष्टा मनःसंवेगवेगतः । सा समादाय संन्यासं वारिताऽपि सुपर्वभिः ॥ ४० ॥

( प्रियां विना दुःखितो मेघनादः— )

१२ राजा श्रीमेघनादोऽथ प्रियामप्रेक्ष्य दुःखितः । केनाऽप्यऽपहृतामिति राज्यदेवीमतोऽस्मरत् ॥ ४१ ॥

( राज्यदेवीसांनिध्यम्— )

उपवासत्रयप्रान्ते साऽऽविर्भूताऽवदद् वचः । निस्नेहवचसा ते सा साते सानुशयाऽभवत् ॥ ४२ ॥
ततः स्मृतेन देवेन नीता सद्गुरुसंनिधौ । दीक्षां नीत्वाऽत्र संन्यासं सा जग्राह महाग्रहा ॥ ४३ ॥

( मेघनादो ययौ काञ्चनपर्वते— )

निशम्येति-नृपो राज्ये निवेश्य निजगोत्रिणम् । सह राज्यसुरीं नीत्वा ययौ काञ्चनपर्वते ॥ ४४ ॥

१ महः—उत्सवः । २ मुक्ता इच्छा-यया-तस्याः । ३ त्वरां कुरु । ४ देवैः । ५ सा ते तव, साते सुखे सानुशया सपश्चात्तापा ।

(मेघनादप्रश्नः—) वैरसिंहमुनिं नत्वा सुरसंसदि सोऽवदत् । पतिभक्तिपरित्यागात् कथं पुण्यं प्रशस्यते ? ॥
यतो युष्मद्वपुः सर्वम्—अवधूय गृहक्रमम् । स्वयं संन्यासविन्यासं चक्रे वक्रेतरान्तरा ॥ ४६ ॥
मुनिराड् महाराज ! भर्तृभक्तिर्भवे वरा । प्रधानं मुक्तिमार्गस्य साधने तु व्रतं महत् ॥ ४७ ॥ यतः—

(भर्ता न मुक्तिदः—)

भर्ता मेऽयमिति स्नेहः स तु मोहमयो भृशम् । महामोहान्न मुक्तिः स्याद्—अतो भर्ता न मुक्तिदः ॥ ४८ ॥

(भार्या न मोक्षदा—)

भार्या ममेति च स्नेहः स तु मोहमयः सदा । महामोहान्न मुक्तिः स्याद्—अतो भार्या न मोक्षदा ॥४९॥
नारी नरस्य मोहेन नरो नारीविमोहतः । यदि व्रते न वर्तेत तदाऽनन्तो भवेद् भवः ॥ ५० ॥
भार्या भवे भवेऽपि स्युः पतयश्च पुनः पुनः । एवं बद्धो भवेत् किं तत् मुक्तिजन्तुव्रजो व्रजेत् ॥५१॥

(केवलिदर्शितं मेघनादस्य अल्पम् आयुः—)

तथा त्रैलोक्यसुन्दर्यास्तवाऽपि नृप ! संप्रति । विद्यतेऽनित्यताग्रस्तमायुः सप्त दिनावधिः ॥५२॥
त्यज तस्मान् महामोहं भज स्थैर्यं भुवो[2] विभो ! । स्मर स्मरस्य पापित्वं भव मा भवदुःखभाक् ॥५३॥

(मेघनादो वाणीमवाणीत्—)

श्रुत्वेति यतितो राजा शमसाम्यसमाकुलः । वाणीमवाणीत् संयोज्य पाणी प्राणेश्वरीं प्रति ॥५४॥
मया देवनिर्विघ्नेन प्रिये ! न कथिता तव । नन्दीश्वरस्य यात्रा यत् न्यूनं तद् मान्यतां मम ॥५५॥
साऽऽह नाऽहमिति क्रोधाद् दान्तमादां तपो नृप ! । मोहव्यपोहतः किन्तु विश्वं वीक्ष्य विनश्वरम् ॥५६॥

१ सरला इति । २ भुवः विभो !—नृप ! । ३ यतिजनात् । ४ भवदुःखभाग् मा भव ।

क्षान्तं क्षान्तं महाराज! स्वान्तं शान्तं यतो मम। यतस्व त्वं ततः स्वार्थं संकल्पं द्रुतमल्पय[1] ॥५७॥
(मेघनादसंन्यासः-) ततो नृपोऽपि विज्ञाय निजायुर्वायुचञ्चलम्। मनो निजं नियम्याऽसौ संन्यासे संन्यवेशयत् ॥
(सिद्धगिरेः कीर्तिः-) केवली वैरसिंहोऽथ तयोः संन्यस्तचित्तयोः। पुरः पुरा श्रुतां सिद्धगिरेः कीर्तिमकीर्तयत् ॥
एवं ततः श्रवणतः शुद्धध्यानस्थयोस्तयोः। देही देहान्तरं[2] गन्तुम्-ईहांचक्रे नवं पुनः ॥६०॥
(त्रैलोक्यसुन्दरी सौधर्मस्वर्गे—)
जीवः त्रैलोक्यसुन्दर्याः स्वर्गे सौधर्मनामनि। सौधर्मेन्द्रस्य भार्याऽभूद् नाम्ना सेयं मनोरमा ॥६१॥
(मेघनादो रत्नचूडो नृपः—)
श्रीमेघनादजीवस्तु जातस्वल्पभवस्थितिः। चन्द्रचूडस्य पुत्रोऽयं रत्नचूडनृपोऽभवत् ॥ ६२ ॥
(देवी आगता—) पितर्युपगते प्राप्ते राज्ये रात्री च सोऽन्यदा। देवीं ददर्श शय्यास्थो विस्मितस्तां ततोऽवदत् ॥
का त्वं सुन्दरि! कस्याऽसि कामिनी किमिहाऽऽगता। इदं निवेद्यतां सर्वं मदीयमनसो मुदे ॥६४॥
हसित्वा सहसा साऽऽह राजन्! जानासि किं न माम्?। तव पूर्वभवस्याऽस्मि भार्या त्रैलोक्यसुन्दरी ॥६५॥
(पूर्वभववेदी रत्नचूडो विरतः—)
इति श्रुत्वा निजं पूर्व-भवं स्मृत्वा नृपोत्तमः। मुञ्चन्नश्रूणि सोऽवोचत् संसारोद्विग्नमानसः ॥६६॥
पूर्वाम्नातेन नाम्ना ते जातिं स्मृत्वा पुरातनीम्। राज्यं रजस्समं मन्ये विषवद् विषयानपि ॥६७॥
मया त्वयि पुरा प्रोक्तं स्नेहहीनं हि यद् वचः। तद् मे स्मरति हृद्दाहि[3] येनाऽदाहि मनस्तव ॥६८॥
तदा त्वां गुरुपादान्ते नाऽहं दान्तेन चेतसा। क्षामये यदि तद् मे स्यादनन्तं भ्रमणं भवे ॥६९॥

---

१ अल्पं कुरु। २ नवं देहान्तरम्। ३ हृदयं_दहति इति।

भवे भवेऽपि भविनो मनो-वाक्-कायसंभवा। व्यापारोऽपारता नित्यं भवेत् पापं ततो हहा ! ॥७०॥

( भवं विहातुकामो रत्नचूडः— )

भवं विहातुकामोऽस्मि तत् त्वं कथय सत्वरम्। गुरोर्गुणगुरोः कस्य पार्श्वे गृह्णाम्यहं व्रतम् ॥ ७१ ॥

4 ( दर्शितो गुरुः पुण्डरीकः— )

अवादीत् साऽऽदिदेवस्य पुण्डरीको गणेश्वरः। शत्रुंजयगिरौ गच्छन् समेष्यत्यत्र निश्चितम् ॥७२॥

ममागत्य तदैव त्वां ज्ञापयिष्यामि भूमिप !। तं गणाधीश्वरं नत्वा स्वार्थं कुर्याद् यथोचितम् ॥७३॥

(गता देवी--) एवमुक्त्वा तिरोभूता सा देवी स्नेहवत्सला। राजा श्रीरत्नचूडोऽपि स्वचित्तेऽथ व्यचिन्तयत् ॥

8 मिथ्यादुष्कृतदानेन उक्तपूर्वं कुवाक्यतः। अहं तु सांप्रतं हन्त पापी स्यां निश्चितं वदन् ॥७५॥

( मौनवान् रत्नचूडः— )

एवं कुवाक्यतः पाप-तापतोऽद्भुतभीतिभाक्। मन्त्रिन् ! श्रीरत्नचूडोऽयं तदा प्रभृति मौनवान् ॥७६॥

अस्मानत्राऽऽगतान् ज्ञात्वा सेयं देवी मनोरमा। श्रीरत्नचूडराजानं प्रमोदादानयत् पुरः ॥७७॥

12 मतिचन्द्रमहामात्य-पृष्टमुक्त्वा गणेश्वरः। मौनावलम्बिनं भूपं प्रत्यालोक्य ततोऽब्रवीत् ॥७८॥

श्रीरत्नचूडराजेन्द्र ! मा भैषीर्वचनं वद। सत्यां धर्म्यां यतो वाचं वदन्ति यतयोऽपि हि ॥७९॥

( इति रत्नचूडपूर्वभवः— )

इत्थं पूर्वभवं राज्ञो मन्त्रिणोऽग्रे मुनीश्वरः। गदित्वा स्वाऽऽस्यकोशान्तर्वाक्यरत्नान्यगोपयत् ॥८०॥

( रत्नचूडकृता पुण्डरीकस्तुतिः— )

रत्नचूडस्ततः प्रायद्रोमाञ्चनिचयाञ्चितः। पुण्डरीकगणाधीशं नत्वा स्तोतुं प्रचक्रमे ॥८१॥

1 व्यापाराणाम् अपारता ।

पूज्यादिदेवकुलपल्वलपुण्डरीक[1] ! श्रीपुण्डरीकगणनाथ ! बहुक्षुधार्ताम् ।
त्यक्तान्यकद्वचनधान्यरसां रसज्ञां[2] स्वां भोजये ननु तव स्तवनामृतान्नैः ॥८२॥
स्वामिन् ! भवोदधिममुं जिनधर्मयानप्राप्तेस्तरन्तमपि तत्र स कामचौरः ।
नारीविलोचनतरीयुगलाधिनाथस्तीक्ष्णैः कटाक्षविशिखैर्निरपातयद् माम् ॥८३॥
यद् राग-रोषरजसा कलुषं किलाऽऽसीत् ज्ञानोदकं मम तवोदयतस्तदेव ।
पीतागमामृतसमुद्र ! मुनीन्द्र ! पूतं भूतं विवेककमलालयहंसशोभि ॥ ८४ ॥
पूर्वानुभूतमखिलं नरकस्य दुःखं मंमन्यते[3] मम मनोऽतिमनोहरं तत् ।
स्यां तद् विनाऽतिविमलः किमहं ततः स्यात् किं दर्शनं तव शिवद्रुमशुद्धबीजम् ॥ ८५ ॥
त्वं विश्ववन्द्य ! यदि सर्वसमोऽस्ति तत् किमंहांसि[4] हंसि मम मोदयसे मनः किम् ।
मोक्षं समीपयसि दूरयसीह जातिं तुभ्यं नमोऽनवगताय ततो यतीश ! ॥ ८६ ॥
ध्यानाद् मनो नयनयुग्ममिदं विलोकात् कर्णौ वचःश्रवणतश्च शिरः प्रणामात् ।
स्वामिन् ! कृतार्थमधुनाऽजनि सर्वमेतत् जन्माऽस्ति मेऽद्य सफलं तव सेवया तु ॥ ८७ ॥
(रत्नचूडकृतो राज्यत्यागः—) यतिस्तुतिमिति प्रोच्य ययौ पोतनपत्तने। राज्यं निजं ददौ राजा राजहंसाय सूनवे॥
( श्रीपुण्डरीकगुरुसमीपे रत्नचूडो गतः सपरिवारः— )
ततश्च—स्नातदेहैस्तुटन्मोहैस्त्यक्तगेहैर्विरागिभिः । गजारूढैः वयःप्रौढैः प्रबुद्धैर्बहुबुद्धिभिः ॥ ८९ ॥
श्वेतवस्त्रैर्धृतच्छत्रैः संगीताकृष्टदृष्टिभिः । मण्डलेशसहस्रैस्तु पञ्चभिः सहितस्तदा ॥ ९० ॥

1 कमलरूप ! । 2 रसज्ञा जिह्वा । 3 मन्यतेर्यङन्तं रूपम् । 4 अंहांसि पापानि ।

रत्नपूरेऽप्यत्र दानं ददचलचेतसा । अतुच्छकृतसर्वैचिंश्यत्रयमुत्सुकपत्तसौ ॥ ९१ ॥
देवपूर्वैरिमो देवा विदधुर्देवमण्डपम् । पञ्चयोजनविस्तारं गव्यूतित्रितयोच्छ्रितम् ॥ ९२ ॥
श्रीमद्-युगादिदेवस्य तत्र मूर्तिचतुष्टयम् । जगच्चित्रकरं चक्रुश्चामीकरप्रभम् ॥ ९३ ॥
(सिंहासने श्रीपुण्डरीक-) दिव्यमूर्तिभृतः स्थालमक्षयं विदधुः सुराः । श्रीपुण्डरीकः पूर्वस्यामासीनः सिंहविष्टरे॥
आगत्य गजं गर्भं मुरत्वा मुकुटमप्यसौ । तैर्युतो रत्नचूडोऽथ प्रविश्य प्राणमज्जिनम् ॥ ९५ ॥
(रत्नचूडस्य दीक्षा—) ततः श्रीपुण्डरीकोऽस्य मूर्ध्नि मन्त्रं समुच्चरन् । हस्तं न्यवेशयज्जैन-व्रतन्यासं च तत्तनौ॥
नागेयमूर्ति परितस्ततो भ्रामति भूपतौ । दिव्यचूर्णभरोऽक्षेपि सुरा-ऽसुर-नरेश्वरैः ॥ ९७ ॥
तत्र मङ्गलगीतानि गायन्तीषु सुरीष्वसौ । प्रदक्षिणात्रयं दत्त्वा मुनिं नत्वा निविष्टवान् ॥ ९८ ॥
( श्रीपुण्डरीकदेशना— )
ततः पञ्चसहस्राणां शिष्याणां गोचरं मुनिः । निजां प्रचारयामास गावं पीयूषवर्षिणीम् ॥ ९९ ॥ तथाहि—
जैनमतं येन गृहीतमेतत् तेनेह पापं निगृहीतमेव। यः पालयेन्निर्मलमानसस्तत् तं लालयेन् मुक्तिरियं निजा-
विशेषतोऽपि धन्यास्ते ये मोहं राज्यसंभवम् । सुदुस्त्यजं परित्यज्य प्रपन्ना मुक्तिवीथिकाम् ॥ [झ्रं]॥४००॥
श्रीतेज्ञानपयोधिसंभववचोरत्नोच्चयं राजितां स्फूर्जद्बोधगुणोत्करेण सहितां तत्त्वोपदेशस्रजम् ।
सभ्येभ्यः परमात्मभूषणकृते दत्त्वोज्ज्वलां चाऽक्षयं साधुजोषमसौ पुपोष विगलद्दोषस्तपस्तीव्ररुक् ॥२॥
(देशनागमनादिः-) ततोऽन्ये भूमीशा गणधरवरं गच्छसहितं प्रणम्योर्वीपीठे प्रलुठितशिरोहीरनिकराः ।

१ सिंहविष्टरे सिंहासनम् । २ मुक्तिमार्गम् । ३ श्रुतेः आगतम्–श्रौतम्–श्रुतज्ञानम् । ४ गुणाः सूत्राणि अपि । ५ जोषं मौनम् ।

निजस्थानं जग्मुर्विगतगृहमोहं व्रतयुतं स्तुवन्तो राजानं शुचिसुकृतकर्पूरकलसम् ॥ ३ ॥

(४ सर्गः पूर्णः--) श्रीरत्नप्रभसूरिसूरकरतो दोषानुषङ्गं त्यजन् यो जाड्यस्थितिरप्यभूत् प्रतिदिनं प्रासादभु- तेन श्रीकमलप्रभेण रचिते श्रीपुण्डरीकप्रभोः श्रीशत्रुंजयदीपकस्य चरिते सर्गश्चतुर्थोऽजनि ॥४॥ [तत्प्रातिभः]

4 इति श्रीरत्नप्रभसूरिशिष्य-आचार्यश्रीकमलप्रभ-विरचिते श्रीपुण्डरीकचरिते महाकाव्ये
श्रीरत्नचूडपूर्वभव-वर्णनो नाम चतुर्थः सर्गः ।

## पञ्चमः सर्गः

(श्रीपुण्डरीकः प्रतस्थे—) श्रीपुण्डरीकोऽथ गणाधिनाथो भुवं दिवं तैर्मुनिभिः सुरैश्च ।
8 पवित्रयन् विश्वविबोधहेतुं स्वैर्भानुभिर्भानुरिव प्रतस्थे ॥१॥
(चम्पापुरीं प्राप—) अथो यथोक्तक्रमतो धरित्रीं क्रामन् मुनीशः स मनःस्थितिज्ञः ।
स्वशोभया दत्तदिवप्रकम्पां चम्पापुरीं प्राप विपापवृत्तिः ॥२॥
12 (चम्पकद्रुः जगाद—) तस्याः समीपोपवनेऽस्ति शस्तः प्रौढः प्ररूढः किल चम्पकद्रुः ।
स शाखया संनतयाऽवगम्य जगाद तं दिव्यगिरा गणेशम् ॥३॥
(लक्ष्मीधरो राजा तदागमनं च—) कृत्वा प्रसादं भगवन्! इहाऽद्य गृहाण वासं निगृहाण खेदम् ।
लक्ष्मीधराख्यं नृपतिं वयस्यं मम प्रशस्यं कुरु बोधदानात् ॥४॥

---

१ किरणैः, शोभाभिश्च । २ मनसां स्थितिं जानाति इति—मनोवित् । ३ यया चम्पया दिवस्य स्वर्गस्य-अपि, प्रकम्पो दत्तः । ४ निष्पापः । ५ द्रुः-वृक्षः । ६ मार्गजन्यखेदं दूरीकुरु-इति ।

गृहात् चन्द्रबिम्बकरं निशम्य ज्ञानोपयोगादवगम्य किञ्चित् ।
तस्थौ सुरैर्निर्मितरम्यरत्न-सिंहासने तत्र मुनिः स यावत् ॥५॥

तावत् कर्पूरपरागपूरप्रभापुरःक्षीरसृताऽभ्रशोभा ।
देहाद् हरन्ती तपनस्य तापं ज्योत्स्ना शनैश्च प्रससार तत्र ॥६॥

४ दिनेऽपि चन्द्रातप एष किं स्यात्-इत्युत्थिता ये मुनयः सुराश्च ।
आगच्छतः श्रीधरभूमिपस्य छत्रस्वरूपं ददृशुः शशाङ्कम् ॥७॥

अहो महोष्णांशुमहोऽप्यनेन स्थिरौजसा चन्द्रमसा निरस्तम् ।
८ इत्थं सुरेषु प्रवदत्सु राजा सैन्यैर्युतोऽभ्येत्य यतिं ननाम ॥८॥

(मृगेशो देवः, वदनम्—) प्रणम्य संस्तुत्य गिरं प्रतस्ये भूपोऽथ देवो मृगवेष एषः ।
खं पञ्चषक्रोशमित तदिन्दुप्रकाशितं प्रेक्ष्य विभुं बभाषे ॥९॥

प्रभो ! नृपस्याऽस्य घनप्रभोऽयं करोति किं श्वेतकरोऽतिसेवाम् ।
१२ चक्रं यथा पूर्वभवोद्भवेन पुण्यप्रभावेण तु चक्रनेतुः ॥१०॥

उग्रं समग्रं विहितं तपः किं दानं प्रधानं किमु वा प्रदत्तम् ?।
पुरा भवेऽनेन सदा कृतैर्नःपराभवेनेति विभो ! वदाऽऽशु ॥११॥

स्पृष्ट्वाऽस्य पादौ वचनं तु पृष्ट्वा गुरोः पुरोऽभूत् स सुरोऽथ मौनी ।
लक्ष्मीधरः पूर्वभवं स्वकीयं शुभ्रपुरस्थाद् विहितावधानः ॥१२॥

---

१ गुर्वस्य । २ चन्द्रप्रकाशः । ३ महोष्णांशुः—सूर्यः, तस्य महः तेजः । ४ पु० तु "पुरेषु" इति पाठः । ५ पञ्चभिः, षड्भिः वा क्रोशैर्मितम् । ६ चन्द्रः । ७ चक्रवर्तिनः । ८ एतः परम् । ९ श्रोतुमिच्छुः । १० सावधानः ।

( उवाच श्रीपुण्डरीकः— ) उवाच वाचंयम एप वाचं दन्तांशुभिश्चन्द्ररुचिं प्रपुष्णन् ।
प्रोद्यत्प्रभायां श्रवणे सभायां पतत्रिवर्गे॑ष्वपि मौनवत्सु ॥१३॥
( आचाम्लचन्द्रतपः— ) हंहो ! महीपस्य यदस्य जातं शशाङ्करत्नं किल नित्यसेवि ।
आचाम्लचन्द्राख्यतपस्तरोस्तत् फलं स्फुटं चाऽत्र पुराकृतस्य ॥१४॥
यतोऽत्र जीवाः कृतपूर्वकर्मदत्तं सुखं चाऽप्यऽसुखं लभन्ते ।
ततस्तपोऽनेन कृतं यथैतत् शृण्वन्तु पूर्वोऽस्य भवश्च भव्याः ॥१५॥ तथाहि—
( लक्ष्मीधरनृपपूर्वभवः, लक्ष्मीपुरं नगरम्— ) द्वीपेऽत्र जम्बूपपदे विदेह-क्षेत्रे पवित्रैः सुकृताम्बुपुष्टैः ।
प्रासादपद्मैः सहितं सरो॑वल्लक्ष्मीपुरं नाम पुरं पुराऽऽसीत् ॥१६॥
( राजा सुरेन्द्रदत्तः— ) सदाऽपि यो निर्मलधर्मकर्मकर्ताऽपहर्ता भुवनस्य भीतिम् ।
सुरेन्द्रदत्तोऽर्थिजने सुरद्रुर्बभूव भूवल्लभ एष तत्र ॥१७॥
सौर्याग्निरस्मिन्निहितो विधात्रा दाहं समूहुस्तु ध्वनारिवंशाः ।
यशोऽस्य शश्वच्च चचार विश्वं तेषां मनो दिग्विजये तु खिन्नम् ॥१८॥
( राज्ञी चन्द्रलेखा— ) भूमीपतेरस्य महार्घ्यसौख्यरत्नोच्चयानामिह सारकोशः ।
चातुर्य-सौन्दर्यविलासवासो भार्या सदाऽऽर्याऽजनि चन्द्रलेखा ॥१९॥
सदा सदाचारसरिद्वरायां मनो मनोभूसहितं यदीयम् ।

१ पक्षिवर्गेषु । २ सदागमिव । ३ अत्रैवं विभ्रम्-सौर्याग्निर्नृपे, दाहस्तु अरिवंशे यशस्तु चचार, अरिवंशानां मनः खिन्नम् । वस्तुतस्तु यत्र अग्निः-तत्रैव दाहः उचितः, एवं यो गतिकर्ता स एव खिन्नो भवति-अत्र तु नैवम् ।

सस्नौ तयोश्चञ्चलता ततोऽगात् इत्येव दूरं विमलात्मिकाया ॥२०॥
न्यायेन युक्तो मृदुलैः कराग्रैः स्वैः पालयंस्तत्र निजां प्रजां ताम्।
मेने सुतत्वेन सुतेन हीनो महीनमुख्योऽयमहीनधैर्यः ॥२१॥
(अम्बरतोऽवतीर्णो नरः—) शस्त्रेशौ-शास्त्रेश-धनेश-धीशैः सद्भिः शुभायां पुरतः सभायाम्।
दिव्याम्बरं सोऽम्बरतोऽवतीर्णं नृपो नरं कान्तिधरं ददर्श ॥२२॥
(आह राजा—) संभ्रान्तनेत्रस्तमवेक्ष्य राजा हास्यस्मितास्यैः सहसा स आह।
आगम्यतामत्र सुमित्र! शीघ्रमालिङ्गनं देहि च पद्मभूपः ॥२३॥
(पद्मभूपः—) आलिङ्ग्य पार्श्वे स निवेश्य पद्मं प्रोचे बहुभ्यः किमहो! दिनेभ्यः।
त्वमागतः किं च मदीयमित्र धूमध्वजो भोः! कुशली वदेति ॥२४॥
(जगाद पद्मः-धूमध्वजो नृपः, तत्कृता चक्रेश्वरीसेवा, प्रसन्ना देवी—)
जगाद पद्मः शृणु सावधान! वैताढ्यशैले शिवमन्दिरेशः। धूमध्वजः संसदिनीमुपोष्य चक्रेश्वरीमेष नृपः
भूत्वाऽथ देवी प्रकटा तदा सा धूमध्वजं भूमिपतिं बभाषे। [ सिषेवे ॥२५॥
तिष्ठामि तुष्टा तव सत्त्वतस्तद् वरं वृणु त्वं ननु धर्मवीर! ॥२६॥
श्रीधूमकेतुः स उवाच चेत् त्वं देवि! प्रसन्नाऽसि मयि प्रकामम्।

१ राजप्राप्तभागीः। २ महीनाः महीस्वामिनः। ३ अहीनं धैर्यं यस्य अथवा अहीनवत्-सर्पराजवत्-धैर्यं यस्य। ४ शस्त्रेशाः युद्धविद्याविचक्षणाः। ५ पण्डिताः। ६ श्रेष्ठिनः। ७ धीप्रधानाः तार्किकाः। ८ दिव्यवस्त्रधरम्। ९ गणनतः। १० हास्येन स्मितम् आस्यं यस्य। ११ सप्त दिनानि यावद् उपवासान् कृत्वा।

सुरेन्द्रदत्तस्य ततो नृपस्य मदीयमित्रस्य सुतं प्रयच्छ ॥२७॥

( सुरेन्द्रदत्तार्थं वरयाञ्चा— )
चक्रेश्वरी साऽहं सुरी नरेशं राजन् ! हरिद्वर्णतुरंगिकायाः ।
सोऽयं किंसोरो भविता तवाऽद्य तमर्पयेस्त्वं नु निजस्य सख्युः ॥२८॥

( देवीदर्शितः पुत्रोपायः— ) सुरेन्द्रदत्तस्य हयं तमेवाऽऽरूढस्य भावी तनयाऽभ्युपायः ।
धन्यः पुनस्त्वं तु नृप ! स्वमित्रे प्रीतिं सदा स्फीतमतिं बिभर्षि ॥२९॥

( आशीर्वचनमुक्त्वा देवी तिरोबभूव— ) यन्मित्रदुःखेन तु दुःखितोऽसि ददासि तत् ते वरमद्य तुष्टा ।
वैताढ्यशैलेऽत्र तवोत्तरस्यां विद्याधरेशत्वमखण्डमस्तु ॥३०॥

देवीत्युदित्वाऽथ तिरोबभूव भूवल्लभोऽप्याप फलं वरस्य ।
सायं दिने तत्र हयं तु जातं वर्षत्रयं पालितवान्नरैः स्वैः ॥३१॥

( पवनंजयो हयः— ) तेन त्वयि प्रीतिभृता नृपेण विमानमारोप्य हयः स एव ।
प्रस्थापितोऽयं पवनंजयाख्यो विद्याभृतां पञ्चशतैर्मया च ॥३२॥

अतो यत्नुभ्यो नृप ! वासरेभ्यो ममाऽऽगमोऽभूदिति सर्वमुक्त्वा ।
जगाद पद्मः करमुन्नमय्य भो ! भोः ! कुरुध्वं तुरगं नृपाग्रे ॥३३॥

विद्याधरास्तेऽथ विधाय नम्रं विमानमेकं पवनंजयाख्यम् ।
उत्तारयामासुरमुं तुरंगं सुरेन्द्रदत्तस्य नृपस्य दृष्टौ ॥३४॥

सुरेन्द्रदत्तः सहितः प्रधानैः स्फुरत्प्रभं प्रेक्ष्य पुरस्तुरंगम् ।

१ हरिद्वर्णा नीला । २ अश्वपोतः ।

हृष्टः समुत्थाय सुकोमलेन पस्पर्श तं पाणिसरोरुहेण ॥३५॥

स्कन्धोद्धतं मध्यमितं सरोषं संकीर्णकर्णं लघुवक्त्रवक्त्रम्
वलत्पदं लोमसुतेजसाऽऽढ्यं स्थूलं च पश्चात् तुरगं ददर्श ॥३६॥

तदा मुदा मन्त्रिमुखानि वीक्ष्य हृष्टो बभाषेऽथ सुरेन्द्रदत्तः ।
स्नेहः सतां मेरुरिवाऽक्षयोऽयं घनेऽपि काले विमलोऽचलश्च ॥३७॥

तथा च—सदाऽपि सौजन्यसुधाभृतेषु महीयसां निर्मलमानसेषु
न क्रोधवह्निर्भवतीति युक्तो यत्प्रीतिरेखाऽविचलेति चित्रम् ॥३८॥

एवं स्तुवन्तं नृपतिं सुरेन्द्र-दत्तं प्रणम्याऽथ जगाद पद्मः ।
राजा ततोऽश्वं पवनंजयाख्यं तं पालयामास सुभक्ष्यलक्षैः ॥३९॥

---

१ स्पर्शं चकार। २ स्कन्धेन उन्नतं समुन्नतम्। ३ लघुकर्णम्। ४ रोमतेजस्सहितम्-तथा च अश्वलक्षणम्-
" दीर्घग्रीवाऽक्षिकूटत्रिकहृदयपृथुस्ताम्रताल्वोष्ठजिह्वः सूक्ष्मत्वक्केशवालः सुशफगतिमुखो ह्रस्वकर्णौष्ठपुच्छः ।
जङ्घाजानूरुवृत्तः समसितदशनश्चारुसंस्थानरूपो वाजी सर्वाङ्गशुद्धो भवति नरपतेः शत्रुनाशाय नित्यम् " ॥१॥-वराहमिहिरो निजायां बृहत्संहितायाम्-अध्याय ६५।
अर्थात्-ग्रीवया, अक्षिकूटेन दीर्घः; कटिभारेण, हृदयेन च पृथुः; ओष्ठेन, तालुना, जिह्वया च रक्तः; शरीरचर्म, मूर्धजाः, पुच्छवालाः-एते यस्य सूक्ष्माः; शफैः, गत्या, मुखेन च सुप्रमितः; कर्णौ, उत्तरोष्ठः, पुच्छमूलं च-एतानि यस्य ह्रस्वानि; जङ्घया, जानुना, उरुणा च वृत्तः; दन्तैः समः, श्वेतश्च; संस्थानेन, रूपेण च चारुः; एवंविधो वाजी-अश्वः सर्वाङ्गशुद्धो ज्ञेयः।
५ लोके हि विना तापं मानससरासि न कदाऽपि रेखा भवति, अत्र तु क्रोधवह्निं विनैव अचला प्रीतिरेखा अविचला-इति चित्रम्। ६ शुभभोज्यलक्षैः।

(सुरेन्द्रदत्तस्य वाह्यालिकेलिः—) अन्येद्युरुर्वीपतिरेष सर्वसैन्यैरचालीत् तुरगाधिरूढः ।
वाह्यालिकेलीषु कुतूहलेन कुर्वन्निलागोलमलं विलोलम् ॥४०॥

ततश्च—शरासनं कोऽपि शरासनेन प्रासैः प्रयासं नृपतेः पुरः कः ।
गदाभृतः केऽप्यगो-दारणं च स्वं दर्शयामासुरितश्च वीराः ॥४१॥

राजा निजं चारुतरं तुरंगं गतीश्चतस्रश्चतुरो विधाय ।
स तं ततं कारयितुं तु वेगं दृढासनोऽभूद् दृढधैर्यधुर्यः ॥४२॥

(राजानं गृहीत्वा उच्चचाल पवनंजयः सार्धशतयोजनीम्-) विशामधीशेन कशाहतोऽथ विहाय भूमिं स विहायसेव ।
क्षणं खगान् व्याकुलयन् पुरोगान् हयो रयोच्चक्रममुच्चचाल ॥४३॥

अरे ! हरे ! भूमिविसुं गृहीत्वा मा याहि धूलीति पदेऽग्रहीत् तम् ।
विन्यस्यतामन्यतुरंगमाणां शिरस्सु सोऽगान्नृदृशां विलङ्घ्य ॥४४॥

यथा यथा तं नृपतिश्चकर्ष तथा तथा स प्रचकर्ष भूपम् ।
तद् योजनानां शतमेकमेवं सार्धं ययौ गन्धवहेन सार्धम् ॥४५॥

(राजा सरोवर प्राप—) करेऽथ दूनो नृपतिर्मुमोच वल्गां तुरंगश्च दिवं तदैव ।
तूर्णं ततः प्राप पयःप्रपूर्णं सरोवरं चित्तहरं हरीन्द्रः ॥४६॥

१ भूगोलम्–सकम्पं कुर्वन् । २ प्रासः–अस्त्रविशेषः–कुन्तास्त्रम् । ३ अगाः–पर्वताः, तेषां दारणम् । ४ रयेण–वेगेन, उच्चौ क्रमौ पादौ यथा स्यात् तथा । ५ वेगपूर्वकगमनात् जाते धूलीप्रचारे कविरेतत् उत्प्रेक्षते । ६ वायुना ।

पीत्वा समीरं लघुरोमरन्ध्रैः प्रीतः स तस्थौ तरुमूलमेत्य ।
राजाऽवतीर्याऽथ हयं स्वयं तं पानीयपानाय ततो निनाय ॥४७॥

संस्नाप्य सस्नौ च पपौ निपाय तुरंगराजं स नराधिराजः ।
प्रीतः प्रमोदात् प्रशशंस विश्वमूलं जलं निर्मलतानुकूलम् ॥४८॥

(नृपो ललनां ददर्श—) तीरस्थितो नीरविलोकनाय प्रसारयामास नृपोऽथ नेत्रे ।
स निस्सरन्तीं सरसोऽपि रक्तां कयाऽपि युक्तां ललनां ददर्श ॥४९॥

संकेतयन्तीव रणाय कामं वित्रासयन्तीव कुलस्य लज्जाम् ।
संतर्जयन्तीव तुलस्य सत्त्वं सा वामनेत्रा विकटैः कटाक्षैः ॥५०॥

पीनस्तनाभ्यामतिमोदकाभ्यां प्रलोभयन्तीव युवन्मनांसि ।
तस्योपकायं कतिचित् पदानि गत्वा समालिङ्ग्य तरुं पुरोऽस्थात् ॥ ५१ ॥ (युग्मम्)

निरीहचित्तं नृपतिं समेतं पालीवनालीषु हयं च बद्ध्वा ।
स्थितं समीरः शिशिरो मुदेव सहागतः स्नेहत आलिलिङ्ग ॥५२॥

(तया ललनया प्रहितो दूतीमुखेन संदेशः—) तत्रैत्य दूती नृपतिं प्रणत्य प्रोवाच संयोज्य करौ पुरस्था ।
प्रसादमाधाय मयि क्षितीश ! वाक्यं समाकर्णय सावधानः ॥५३॥

---

१ लघुभी रोमाच्छिद्रैः, समीरो-वायु पीयते । २ मर्यादाम् । ३ वर्तुलाकृत्या, पुष्ट्या च मोदकम् अतिक्रान्ताभ्याम्-अथवा अतिहर्षप्रदाभ्याम् । ४ 'युवमनांसि' भवेत् । ५ कायसमीपम् । ६ अग्रस्थिता ।

कामेन कामं स्वशरैर्निषिक्तैः संप्रापितां विह्वलतां लतान्तः ।
सदौषधीसंनिभदेहयष्टिस्पर्शात् विशल्यां कुरु मे सखीं त्वम् ॥५४॥

( ललनायाः कामपारतन्त्र्यम्— ) तस्यां वदन्त्यामिति तत्र सख्यां मदालसाक्षी लुलदङ्गयष्टिः ।
राज्ञः समीपं समुपेत्य हाव-भावैर्युता स्वामवदत् सखीं सा ॥५५॥

प्रतीच्यामम्भोधौ प्रसृमरकरश्रेणिकलितं रवेर्बिम्बं रक्तोत्पलमिव पुरः प्रेक्ष्य सहसा ।
तमस्तोमोऽप्युच्चैः सखि ! स विदलत्कश्मलरुचिश्चचाल प्रोल्लोलालिकुलवदलं चन्द्रवदने ! ॥५६॥

प्रशान्तनेत्रो नरनायकोऽयं तां नायिकां कोमलवागुवाच ।
( राज्ञः एकपत्नीव्रतदृढता, ललनायै उपदेशश्च— ) अयि प्रसन्ना भव चारुरूप-प्रज्ञापितप्रौढकुले ! मृगाक्षि ! ॥५७॥

भद्रे ! सुखं वैषयिकं क्षणं स्यादनन्तपापं त्वतिदुःखदायि ।
धीरीकुरु त्वं तु मनो निजं तत् वीरीभवाऽस्मिन् स्मरयोधयुद्धे ॥५८॥

यतः—रूपं सशीलं नययुग् नृपत्वं धनं सदानं वचनं तु सत्यम् ।
परोपकारे बहुबुद्धिमत्त्वं तत् पायसं शर्करयेव सारम् ॥५९॥

अन्यच्च—विश्वत्रये सन्ति परस्त्रियो यास्ता मे स्वसारो नियमोऽस्ति सारः ।
विधाय चित्तं विमलं स्वकीयं यथाऽऽगतं सुन्दरि ! तत् प्रयाहि ॥६०॥

---

१ लताकुञ्जमध्ये । २ शल्यरहिताम् । ३ मदेन अलसे नेत्रे यस्याः सा । ४ प्रसरणशीलाः । ५ कश्मलम्-मलिनम् । ६ भ्रमरकुलवत्-श्यामत्वेन । ७ वीरा शूरा भव । ८ नीतियुक्तम् ।

(राज्ञ उपरि तस्याः कामवशाया आक्रमणम्— )
अस्मिन् क्षितीशे वदतीति सख्या सत्योद्यतेस्याधि तनुः प्रमुक्ता।
आलिङ्गयन्ती तरसा रसाढ्या राज्ञाऽपहस्तेन ततो निरस्ता ॥६१॥
तस्थौ ततश्चन्द्रमुखी विषादमषीकृतश्याममुखी नितान्तम्।
सा सन्मुखीभूय सखी तु तस्याः साटोपकोपात् प्रकटं जगाद ॥६२॥
जड़ेन राजन्! भवताऽनुरक्ता विमाननात् कोपयुता क्षता या।
साऽपत्यभावेन तव प्रियाया भवं समग्रं समलंकरोतु ॥६३॥
(ललना-दूत्यौ अदृश्यतां जग्मतुः— ) अदृश्यतां जग्मतुरेवमुक्त्वा स्वान्ते वहन्त्यौ बहुरोषपोषम्।
तं शाकुनं ग्रन्थिमसौ तु बद्ध्वा विचारयामास वचस्तदीयम् ॥६४॥
उक्ता क्रुधा दुष्टतरात् कुवाक्यात् दृष्टो यदर्थः स सुतप्रसूतेः।
आभ्यां कृताद् मे महतोऽपि विघ्नात् संभाव्यते मङ्गलमेव पश्चात् ॥६५॥
(अरण्ये रात्रिः— ) एते तु देव्यौ कुपिते मयि स्तः करिष्यतस्तैद्विघ्नं कदाऽपि
रात्रिस्तथाऽपि प्रसरत्पिशाची तच्छोधयाम्यात्म-मनः सुवाक्यैः ॥६६॥
आलोचनायाऽऽत्मकुकर्मणोऽसावुत्तार्य मौलेर्मणिमेकमेषः।
मन्त्रं स्मरन् मण्डितवान् पुरस्तं विचिन्तयन् सद्गुरुमेव मूर्तम् ॥६७॥

---

१ तस्य सत्यपरायणस्य अधि-उपरि, तया कामिन्या निजं शरीरं प्रमुक्तम्। २ अनुरक्ता या स्त्री विमाननात् कोपयुता क्षता च जाता। ३ त्रुटति छन्दः। ४ शुद्धं करोमि। ५ नमस्कारमन्त्रम्।

(नृपेण कृतं प्रतिक्रमणम्—) देर्यापथिकीं भणित्व प्रतीपं मनसैव पापात् ।
संक्षेपतो वन्दनकं विधाय चित्तोद्भवं भावमुवाच वाचा ॥६८॥ तथाहि—
निरीहचित्तस्य ममैव देहं विलोक्य ताभ्यां विधुतः स्वचित्ते ।
४ कामो निकामं च कुकृत्यहेतुर्मिथ्याऽस्तु तद्दुष्कृतमेव मेऽद्य ॥६९॥
प्रयच्छतो बोधमनिच्छतोऽपि संगं ममाऽङ्केऽत्र तयाऽप्यनङ्गात्।
कृतोऽभिषङ्गः शुचिशीलभङ्ग-कर्ता निवदं दुष्कृतमस्तु मिथ्या ॥७०॥
यत् तामधिक्षिप्य करेण सख्याश्चित्तेऽतिकोपो विहितो मया सः ।
८ येनाऽन्तवाक्यं मयि वादिता सा मिथ्याऽस्तु तत् केवलिनां समक्षम् ॥७१॥
(सुरः समागतः—) मां चेत् सदाचारपवित्रगात्रं पात्रं प्रशान्ते रैहिते समेत्य ।
इत्यर्धवाक्ये विनिवारयन्तं पुरस्सरं सोऽथ सुरं ददर्श ॥७२॥
जगाद देवो नृप ! यत् त्वदीये चित्तेऽस्ति तत् ते रिपवो लभन्ताम् ।
१२ राज्यं कुरु त्वं सुचिरं शुचित्वं चन्द्रस्यै मुष्णन् विमलैश्चरित्रैः ॥७३॥
(सुरं प्रति राज्ञः प्रश्नः—) मया त्वयि द्रोहमतिः कृताऽऽसीत् तत् क्षम्यतामक्षतपुण्यभूमे ! ।
भूयोऽवदत् कोऽसि कथं सकोपो मयि प्रसन्नोऽसि कथं पुनस्त्वम् ॥७४॥

१ गुरुवन्दनम् । २ प्रशान्तेः पात्रम् । ३ रहिते—एकान्ते । ४ चन्द्रस्य शुचित्वं मुष्णन्—लुण्टयन् ।

(भूतानन्दो भवनाधिनाथः— ) स्मितस्मितास्यो द्रुतमुज्जगार सुधाकिरं सोऽथ गिरं सुरेन्द्रः ।
जानीहि भूमीतलनाथ ! भूतानन्दाऽभिधं मां भवनाधिनाथम् ॥७५॥

प्राणप्रिया मे सुरसुन्दरीति सरोवरे कौतुकतः समेता ।
कामाकुला संगमपीहमाना[1] तवाऽपमानात् सविधं ममाऽगात् ॥७६॥

तया त्वयि क्रोधयुतः कृतोऽहं विनाशवुद्ध्या समुपागतोऽत्र ।
वाक्यानि ते चित्तविशोधकानि श्रुत्वा प्रशान्तः प्रकटश्च जातः ॥७७॥

अहो नारीनेत्रयोः पापित्वम्— आभ्यां कृतस्नेह इह प्रवृद्धः कलङ्कितोऽन्ते भवितेति दत्ते ।
धाता मषीं नेत्रयुगे तु नार्याः संकेतयन् दक्षजनान् समग्रान् ॥७८॥[2]

धनं घनैश्वर्ययुतं सुरूपं सयौवनं ते किल वर्ततेऽपि ।
एतानि पापाय नयन्नतोऽहं जाने गुणायैव सतां हि संगः ॥७९॥

(सुरकृता राजप्रशंसा— ) धन्या त्रिलोक्यां तव वंशभूर्भूर्द्वयं त्वयेदं नृपते ! ततस्त्वम् ।
सुरा-ऽसुराश्चर्यकृतान्यनारी-सहोदरत्वेन महाव्रतेन ॥८०॥

समग्रसौख्यप्रदधर्मभूमेर्भूमीश ! तेऽत्राऽप्रियमीशते के ?[3] ।

---

१ संगम् अपि ईहमाना । २ अत्र श्लोके नारीनेत्रयोः पापित्वमेव दर्शयति—आभ्यां नारीनेत्राभ्यां कृतः स्नेहः-प्रवृद्धः सन् अन्ते इह कलङ्कितो भविता-इति हेतुना विधाता समग्रान् दक्षजनान् संसूचयन् नार्याः नेत्रयुगे मषीं श्यामतां दत्ते । लोकेऽपि कलङ्कितो जनः श्यामतामेव प्राप्नोति । ३ के तव अप्रियं कर्तुं समर्थाः ? ।

दातुं सुतेच्छाद्रुम एष योऽस्ति फलेग्रहिस्त्वीदृशपुण्यतोऽस्ति ॥८१॥
देवः स एवं वचनं सहर्षं संभाष्य तथ्यं मनसश्च पथ्यम् ।
भूत्वा समीपेऽथ नृपस्य कर्णे प्रच्छन्नवाक्यं च जगाद किंचित् ॥८२॥
( देव्यै अभयं दापितं राज्ञा— ) विस्मारणीयं वचनं नहीदं त्वयेत्युदित्वा स जगाम देवः
महाग्रहाद् भूपतिना प्रणम्य प्रयाचितः सन्नभयं तु देव्याः ॥८३॥
गतेऽथ देवे नरदेव एष पूर्वां दिशं रक्ततराम्बरान्ताम् ।
मार्तण्डकोटीरयुतां सहर्षं नारीमिव प्रेक्ष्य मुदा जगाद ॥८४॥
( सूर्योदयः— ) महामार्गक्लान्त्याऽत्यरुणवदनो विष्टरनिभे स्थितः प्राचीशैले पृथुगगनपात्रे विनिहितम्
करैस्ताराभोज्यं त्वरितमशनीकृत्य पपिवान् प्रगे पान्थः पूषा शशधरसुधाघोलममलम् ॥८५॥
( नृपसेवकाः समागताः— ) तुङ्गास्तुरंगा दृढवेगरङ्गाः मनोरथाऽतीतपथा रथाश्च ।
दृष्ट्वाऽथ दृष्टा निजसेवकाः स्राग् विलोकयन्तः परितो नृपेण ॥८६॥
चमूचरास्ते नृपतिं विलोक्य हृष्टा निविष्टाश्चरणौ प्रणम्य ।
राजा तुरंगाहरणं तु रङ्गाद् जगाद तेषां पुरतो न चाऽन्यत् ॥८७॥
( अश्ववैद्याः— ) मल्लैः कृतं मर्दनमस्य देहे खेदापनोदाय मुदा तदाऽथ ।
संवाहयामासुरमुं च वाहं हस्तेन ते वाहसमूहवैद्याः ॥८८॥

१ आगनममाने प्राचीशैले । २ किरणैः । राति सूर्योदये तारकाणाम् अभावः, चन्द्रस्य च हीनकान्तिता भवति—अत एव कविना एवमुदप्रेक्षि ।
३ मैनिकाः । ४ अश्वम् ।

(चचाल सुरेन्द्रदत्तो नृपः—) महीमहेन्द्रः स सुरेन्द्रदत्तश्चतुश्चमूसंवलितश्चचाल ।
अनेकरूपैः शुचिसाम-दानादिभिर्युतो न्याय इवैष मूर्तः ॥ ८९ ॥

पुरं प्रविश्य प्रकृतिस्थितिज्ञः शशास नित्यं करणानि सोऽथ ।
विवेक-विज्ञानविकाशहेतुरात्मेव लोकस्य ततः प्रियोऽभूत् ॥ ९० ॥

(चन्द्रलेखा बभार गर्भम्—) सदा भुवं भुक्तवताऽपि देहरतेः कृते तेन रेते कृतेऽथ ।
सा चन्द्रलेखाऽमलशीललेखा बभार गर्भं बहुसौख्यगर्भम् ॥ ९१ ॥

भूवल्लभस्याऽथ सुवल्लभायाः कपोलपालीष्वथ निर्मलत्वम् ।
रराज गर्भे वसतो नरेन्दोर्विश्वप्रकाशोदयिनः प्रभेव ॥ ९२ ॥

राजाऽन्यदाऽनेन मनोरमाङ्गी प्राणप्रिया सा ददृशे कृशाङ्गी ।
तनूतनुत्वं वचनैः प्रसन्नैः दृष्टा ह्रिया नाख्यदसौ प्रियाय ॥ ९३ ॥

विचिन्त्य किंचिन्निजचेतसैव समुत्थितः प्रौढमुदाऽन्यदाऽयम् ।
दिने चतुर्थे जगदे च तेनाऽप्यसंभवद्दोहददुर्बलाङ्गी ॥ ९४ ॥

(राज्ञीदोहदः—) स्वच्छा निजेच्छा सुकृतैरतुच्छा संपूर्यतामेवमसौ निगद्य ।
प्रैपीत् समारोप्य सुखासने तां सखीसमेतां जिनमन्दिरेषु ॥ ९५ ॥

प्रासादयाताऽखिलजैनमूर्ति-शीर्षेषु हेम्नो मुकुटान् नवीनान् ।

---

१ सुरते । २ पु० अन्यपाऽयम् । ३ तृतीयान्तमेतत् । ४ प्रासादस्थिताः मूर्तयः ।

सा प्रेक्ष्य दध्यौ मम दोहदोऽयं ज्ञातो मनःस्थोऽपि कथं प्रियेण ? ॥ ९६ ॥
(दोहदपूरणम्—) जैनेन्द्रबिम्बेषु विधाय पूजां स्वर्णा-ऽन्नदानानि मुदा प्रदाय ।
स्वं दोहदं सर्वमिति प्रपूर्य समेत्य पप्रच्छ नृपं नतास्या ॥ ९७ ॥
ज्ञातः कथं मानसदोहदोऽयं निगद्यतां चित्रमिदं ममाऽद्य ।
राजाऽप्यहंकारविषेण मुक्तं युक्तं प्रशान्त्या वचनं बभाषे ॥ ९८ ॥
पुण्येन केनाऽपि हि पूर्वजानां सुरः स तुष्टः सरसस्तटे यः ।
जिनेन्द्रकोटीरकरश्च कर्णे त्वद्दोहदस्तेन पुरा ममोचे ॥ ९९ ॥
सा द्यौरिव च्छन्नशशाङ्कबिम्बा सद्बुद्धिवद् गूढपरोपकारा ।
संगुप्तपद्मा सरसीव राज-राजप्रिया गर्भयुता रराज ॥ १०० ॥
(राज्ञी असूत सुनुम्—) प्राचीव सूर्यं द्वितीयेव चन्द्रं चिन्तामणिं रोहणभूरिवैषा ।
तेजोद्भुतं लोचनसेवनाऽऽभं संपूरिताशंसमसूत सूनुम् ॥ १०१ ॥
(दानादिविधानम्—) तदा सदाऽऽनन्दकरं स दानं ददावदारिद्र्यकरं जनेभ्यः ।
मुमोच गुप्तिं बहुदीनतृप्तिं चकार भूपस्त्वनकारवाक्यः ॥ १०२ ॥
(मूलनाम अमरशेखरः—) अस्मिन् सुते गर्भगतेऽस्य मातुर्वाञ्छा बभूवाऽमरशेखराणाम् ।
ततः कुमारोऽमरशेखरोऽयं पित्रा पवित्राख्य इति व्यधायि ॥ १०३॥
(अष्टादशलिप्यादिकलाः—) नवाङ्गभेदाद् द्विगुणा लिपीस्तद् द्वैगुण्यतोऽप्यायुधयुद्धभावान् ।

१ 'जिनेन्द्रकोटीरकराश्च त्वद्दोहदः' इत्यन्वयम् । २ क्वापि कोऽपि नकारं न वक्ति । ३ अमरमुकुटानां दोहदः पूर्वोक्तः । ४ पवित्रनामधेयः,

कलास्ततोऽपि द्विगुणाः कुमारो बुबोध मारोद्वररूप एषः ॥ १०४ ॥

"१ हंसलिपि २ भूतलिपि ३ यक्षी तथा ४ राक्षसी च बोद्धव्या, ५ उड्डी ६ यवनी ७ तुरुष्की ८ कीरी ९ द्राविडी च १० सिन्धविका।
११ मालविनी १२ नटी १३ नागरी १४ लाटलिपिः १५ पारसी च बोद्धव्या, तथा १६ अनिमित्तिका लिपि १७ चाणक्या १८ मौलदेवी च ॥—
४ ( प्राकृतमेतत् प्रथमकर्मग्रन्थे पृ० ११-१२ टी० ) समवाय-अङ्ग— प्रज्ञापनाप्रभृतिग्रन्थान्तरेषु अन्यप्रकारेणाऽपि लिपेरष्टादशभेदा भाविताः, ते च
तत्तत्ग्रन्थेभ्य एव अवसेयाः, ललितविस्तरादिबौद्धग्रन्थेषु तु लिपेर्भेदानां चतुष्षष्टिः संख्याता। आयुधविषयान् - षट्त्रिंशद् युद्धभावान्।
कलाश्च द्वासप्तति,ता श्चैताः—" १ लेखम्, २ गणितम्, ३ रूपम्, ४ नाट्यम्, ५ गीतम्, ६ वादितम्, ७ स्वरगतम्, ८ पुष्करगतम्,
९ समतालम्, १० द्यूतम्, ११ जनवादम्, १२ पौरकाव्यम्, १३ अष्टापदम्, १४ दकमृत्तिकम्, १५ अन्नविधिः, १६ पानविधिः, १७ वस्त्रविधिः,
८ १८ शयनविधिः, १९ आर्या(छन्दः), २० प्रहेलिका, २१ मागधिका, २२ गाथा, २३ श्लोकः, २४ गन्धयुक्तिः, २५ मधुसिक्थम्,
२६ आभरणविधिः, २७ तरुणीप्रतिकर्म २८ स्त्रीलक्षणम्, २९ पुरुषलक्षणम्, ३० हयलक्षणम्, ३१ गजलक्षणम्, ३२ गोलक्षणम्, ३३ कुक्कुट-
लक्षणम्, ३४ मिण्ढकलक्षणम्, ३५ चक्रलक्षणम्, ३६ छत्रलक्षणम्, ३७ दण्डलक्षणम्, ३८ असिलक्षणम्, ३९ मणिलक्षणम्, ४० काकणीलक्षणम्, ४१ च-
र्मलक्षणम्, ४२ चन्द्रलक्षणम्, ४३ सूर्यचरितम्, ४४ राहुचरितम्, ४५ ग्रहचरितम्, ४६ सौभाग्यकरम्, ४७ दौर्भाग्यकरम्, ४८ विद्यागतम्, ४९ मन्त्रगतम्,
१२ ५० रहस्यगतम्, ५१ सभास (व)म्, ५२ चारम्, ५३ प्रतिचारम्, ५४ व्यूहम्, ५५ प्रतिव्यूहम्, ५६ स्कन्धावारमानम्, ५७ नगरमानम्, ५८ व-
स्तुमानम्. ५९ स्कन्धावारनिवेशः, ६० वस्तुनिवेशः, ६१ नगरनिवेशः, ६२ इषु-अस्त्रम्, ६३ त्सरुप्रवाद (त)म्, ६४ अश्वशिक्षा, ६५ हस्तिशिक्षा,
६६ धनुर्वेद, हिरण्यपाकः ६७ सुवर्ण-मणि-धातुपाकः ६८ बाहुयुद्धम् दण्ड-मुष्टि-अस्थि-युद्धम्.-युद्धम्, नियुद्धम्, युद्धातियुद्धम्, ६९ सूत्रखेटम्, नालिका-
वृत्त-धर्म-चर्मखेटम्. ७० पत्रच्छेद्यम्, कटकच्छेद्यम्, ७१ सजीवम् निर्जीवम्, ७२ शकुनरुतम् "—(एतच्च समवाय—अङ्गसूत्रमूलाद्( समिति पृष्ट ८३ )
अनुवादितम्, आसामर्थजिज्ञासुना समवायअङ्ग-जम्बुद्वीपप्रज्ञप्ति-. राजप्रश्नीयादिटीकाः एव संविलोकनीयाः।

(वसन्तसेनो मित्रम्—) इत्थं शिशुत्वे सकलाः कलास्ता अधीयुषो भूमिभुजः सुतस्य ।
श्रीकान्तमन्त्रिप्रवराङ्गजेन वसन्तसेनेन बभूव सख्यम् ॥ १०५ ॥

(यौवनम्—) तथाऽस्य देहे प्रससार सार–शास्त्राम्बुयुग् यौवनसिन्धुरुच्चैः ।
मौर्ख्यं–यथा तत् तृणवद् जगाम बाल्यं ममज्जाऽमलवालुकेव ॥ १०६ ॥

(वसन्तक्रीडा—) वसन्तसेनेन युतोऽथ सख्या सख्याद् वसन्ते स वनाऽवनीषु ।
पुष्पोच्चयं भूपसुतश्चिकीर्षुर्जगाम कामाधिकधामधामी ॥ १०७ ॥

(वृक्षाः सशोभाः—) ततोऽवनीजानिसुतो वनीजानितो विलोक्येति समृद्धशोभान् ।
आस्यं वयस्यस्य स जातहास्यं सलीलमूचे सहसोन्नमय्य ॥१०८॥

त्वं नेत्रमित्रीकुरु मित्र ! चित्र—प्रदान् विशेषान् मधुनाऽधुनाऽत्र ।
तरून् गुरून् पल्लवपुष्पलक्ष्म्या मनो जनानां हरतो रयेण ॥१०९॥ तथा चैतत् प्रतिपन्नम् ।

नाऽम्भोभोज्यभरं ददाति दमयेद्–अंश्वानशत्रुं द्वं नो तिष्ठेद् मितकालतोऽथ दिवसं पार्श्वे वसन्तः कदा ।
हर्षे हेतुमकुर्वति द्रुमततिश्चास्मिन् समेते सदा सोल्लासा किल सा तदत्र जयति प्रीतिर्निराशाश्रया ॥११०॥

छायायायासशान्त्यै कुसुमपरिमलः कायसौरभ्यकर्ता [अन्यच्च—
निष्णातान्येव तृष्णा–क्षुदुपशमविधावस्य नानाफलानि ।
धन्यो वन्योऽपि भूमीरुहनिवह इहाऽनेकलोकोपकारी ।

---

१ यत्र सिन्धुः प्रसरति तत्र तृणानि, वालुकाश्च न स्थातुं शक्नुवन्ति–अत्राऽपि यौवनसिन्धौ प्रसरति तृणरूपं मौर्ख्यम्, वालुकारूपं च बाल्यं दूरापगतमेव । २ कामाधिकतेजोयुतः । ३ वनीजान्–वन्यां जातान्–वृक्षान् । ४ पश्य । ५ वसन्तेन । ६ न श्वानो यस्य । ७ तृषा ।

'विद्यानप्येष नैवाऽहितनिहितमना यो मनागप्यघात् स्यात्(?) ॥१११॥

त्वं पश्य कर्पूरतरो वयस्य! कोदण्डदण्डं पुरतः प्रचण्डम्।
चलंचरस्तन्निजहस्तवाञ्छां संपूरयाम्येनमहं विमृश्य ॥११२॥

(टङ्कारो धनुषः—) एवं गदित्वा मुदितोऽथ गत्वा नत्वा धनुः सोऽतनुवीर्ययुक्तः।
प्रमृज्य हस्तेन तु कान्तकान्तिं चकार दिव्यायुधमेतदूर्ध्वम् ॥११३॥

वामस्य हस्तस्य समर्प्य मध्यं सुदक्षिणत्वादपरस्य कोटिम्।
दत्त्वा वरेऽस्मिन् धनुषि प्रणम्रे गुणं समारोपयदेष विज्ञः ॥११४॥ [ ततश्च—

नेदुः पर्वतकन्दरा द्रुतपदं नेशुश्च सिंहा अपि, पेतुः कुम्भिघटा नदीषु च तटाद् यान्त्यो जवेनोत्कटाः।
चक्रुः शब्दममूर्मिथश्च मिलितस्त्रीवत् तथाऽष्टौ दिशः—टङ्काराद् धनुषो मुखायितमतस्तैर्विश्वकर्णैरपि ॥११५॥

स ज्यां समुत्तार्य ततः प्रसह्य सहेलमालोक्य वसन्तसेनम्।
जगाद यदस्य शरासनस्य योग्याः शराः स्युस्तदहो! सुयोगः ॥११६॥

(कुमारो तिरो.भूव—) यावत् तदुक्तस्य सुमन्त्रिपुत्रः प्रत्युत्तरं किंचिदपि प्रदत्ते।
तावत् कुमारोऽमरशेखरोऽथ स चापहस्तोऽपि तिरोबभूव ॥११७॥

(तदन्वेषणाय मित्रप्रयासः—) निमेषमात्रात् क्व ययौ कुमारो विचारयन् मन्त्रिसुतोऽतिवेगात्।
शब्दायमानः[७] प्रतिवृक्षमेष बभ्राम कुत्राऽपि न तं ददर्श ॥११८॥

---

१ पु० अस्फुटम्। २ 'चल त्वरातो निज'—इत्यपि पठितुं शक्यते। ३ 'कान्तकान्तिं' उचितम्। ४ धनुषो मध्यम्। ५अत्यर्थं वल्गित्रे धनुषि। ६धार्द् नक्रुः। ७ शब्दं कुर्वाणः—आकारयन्।

मित्रावलोकेन विनाऽस्य दुःखदोषाकुलं लोचनपद्मयुग्मम् ।
संकोचमानं च तथाऽङ्गयष्टिस्तन्नालवद् नम्रतरा लुलोल ॥११९॥
पूर्वंप्रशंसामुदिता इवैते द्रुतं द्रुमाश्चारुचिरोपचर्याम् ।
चक्रुः प्रसूनैः शिशिरैः समीरैर्भूमीशपुत्रस्य वयस्यदेहे ॥१२०॥
विना सखायं किल तस्य कायं मूर्छा पिशाचीव वने ग्रसन्ती ।
समीरहक्काभिरनुप्रसूनबाणावलीभिस्तरुभिर्निरासे[3] ॥१२१॥
(मित्रहतः प्रविलापः—) संप्राप्य संज्ञां सचिवस्य पुत्रो नाऽऽलोक्य मित्रं बहुदुःखतापात् ।
स्फूर्जद्बहुस्नेहभवा हि धीरो इवोज्जगार प्रविलापवाचः ॥१२२॥
संचक्रसंमोदकरस्य दृष्टेः दोषापहस्य प्रतिभाप्रकाशात् ।
सूरस्य मित्रस्य वियोगतस्ते विलोकितुं विश्वमहं क्षमो न ॥१२३॥ [ यतः—
न भास्करो भास्करतां प्रयाति चन्द्रत्वमप्यश्नुति नैष चन्द्रः ।
दुःखाऽवनं नैव वनं करोति: वियोगधातुर्विपरीतसृष्टेः ॥१२४॥
(मित्रवियोगतः तपसोऽभिलाषः) तस्माद् जगद् दुःखमयं समग्रं हा ! मित्रहीनं त्वरितं विहाय ।
चरामि किञ्चित् तप एव गत्वा तपोधनान्ते स्वतमोऽभिदाहम् ॥११५॥

---

१ मित्रदर्शनेन । २ कमलनालवत् । ३ निरस्ता । ४ धीराः प्रविलापवाचः । ५ सूरपक्षे सच्चक्रश्चक्रवाकः, दोषा रात्री । मित्रपक्षे सच्चक्र सज्जनसंघः, दोषाः दुर्गुणाः । ६ दुःखाद् रक्षणम् । ७ वियोगरूपस्य विधातुः । ८ तपस्विनो निकटे । ९ निजतमोदाहकम् ( तमः—पापम् )

(अरण्ये यतिः—) एवं विचार्य स्वमनो निवार्य मोहाद् महादुःखभराच्च भोगात् ।
गच्छन्नरण्येऽथ यतिं विलोक्य नत्वाऽऽर्थयन्निर्मलजैनदीक्षाम् ॥१२६॥

(यतेः उपदेशः—) दीक्षोन्मुखं वीक्ष्य सुदुःखितं तं द्राग् मौनमुद्रां स मुनिर्विमुच्य ।
ज्ञानांशुयुक्तोऽमलवाक्यरत्नोच्चयं स्वयं तस्य ददौ विहस्य ॥१२७॥

हंहो ! विशुद्धात्मक ! पूर्वकर्म प्रवर्तते भोगकृते गरीयः ।
भुक्तेऽथ तस्मिन् व्रतभावमुक्तेर्जीवो भवेऽस्मिन् भवितैव भव्यः ॥१२८॥

(वयस्यसंगमो भावी—) किं प्रष्टुकामः स्ववयस्यसंगं त्वं विद्यसे तत् शृणु मन्त्रिपुत्र ! ।
दिने तृतीये कुशलस्वरूपं वेत्तासि तस्येति विलम्ब्यतां तत् ॥१२९॥ किन्तु,

(यतिनिकटे द्वादशव्रतस्वीकारः—) सम्यक्त्वशैलाभ्युदितं प्रभाढ्यं तीव्रव्रतं द्वादशमूर्तिमुच्चैः ।
श्रीजैनधर्मं भवदुःखसृष्टिकल्पान्तदं भानुनिभं गृहाण ॥१३०॥

(महामन्त्रः—) तस्या महामन्त्रममुं महाधिव्याधिप्रणाशाय परात्मनोश्च ।
बीजाक्षरैश्चारुभिरष्टषष्टिमितैर्युतं नित्यमतः स्मर त्वम् ॥१३१॥

(वसन्तसेनस्य अरण्ये प्रवासः—) वसन्तसेनस्य तदोपकर्णं भूत्वा मुनिस्तं निभृतं जगाद ।
अथो गुरोरङ्घ्रिरजः स्वमौलौ न्यस्याऽचलन्निश्चलचित्तवृत्तिः ॥१३२॥

(कश्चित् कीलितः—! पुरुषः मूर्च्छितः—) ततः फलैर्वृत्तिकरो विहारपरो व्रजन्नेष पुरोऽद्रिशृङ्गे ।

१ प्रार्थयत् । २ योग्यः । ३ जैनसंप्रदाये श्रावकाणां द्वादश व्रतानि, काव्यसंसारे सूर्या अपि द्वादश—अत एव तयोर्द्वयोरपि अत्र श्लोके साम्यम्। अत्र व्रतस्य नपुंसकत्वेन 'द्वादशमूर्ति' स्यात्। ४ स्व-परयोः। ५ जैनसप्रदायप्रसिद्धो नमस्कारमन्त्रः—अष्टषष्टि—अक्षरमित एव। ६ संधार्य।

सुसं शिलायां बहुलोहकीलैः संकीलितं सत्पुरुषं ददर्श ॥१३३॥
तं मूर्छितं वीक्ष्य कृपाभृतोऽयं गिरेर्झरात् साष्टशतं चलूनाम्।
तेनैव मन्त्रेण ततोऽभिमन्त्र्य चिक्षेप साक्षेपमनास्तदङ्गे ॥१३४॥
(मन्त्रप्रभावात् तस्य पुरुषस्य मूर्च्छापगमः—) तन्मन्त्रपूतोदकसेकतोऽथ तूष्णींबभूवुः किल लोहकीलाः।
नरोऽपि चैतन्यधरः क्षणेन प्रोत्तस्थिवानुन्मिषिताक्षिपद्मः ॥१३५॥
(वरयाचनाय प्रार्थनम्—) कृतं विशल्यं करणं मनस्तु प्रयाच्य किंचित् कुरु मे महात्मन्!।
वसन्तसेनं विहितोपकारं वीक्ष्याऽवदत् सोऽथ कृतज्ञधुर्यः ॥१३६॥
(वद्वृत्तम्—) ऊचे वसन्तो नहि देव! याचे परं वद त्वं कथमेक एव।
संपीडितः केन च कान्तकान्तिकायेन संसूचितभूपभावः? ॥१३७॥
(वैताढ्ये जयन्ती—) असौ बभाषे बहुधीरवीर! हीराढ्यवैताढ्यगिरौ समस्ति।
वरीयसी निर्मलरत्नहर्म्यैर्गरीयसी भो! नगरी जयन्ती ॥१३८॥
(रिपुमल्लो नृपः, रत्नमाला राज्ञी—) तस्या नरेन्द्रो रिपुमल्लनामा कामाधिको जेतृतयाऽऽभया च।
सदा मनोनर्तनरङ्गशाला भार्या तदीयाऽजनि रत्नमाला ॥१३९॥
(तत्पुत्रः—चन्द्रावतंसोऽहम्—लीलावती मम भगिनी—) अनेकसंग्रामजयोर्जितौजाश्चन्द्रावतंसोऽस्मि सुतस्तयोस्तु।

१ चलुः—जलाञ्जलिः। भाषायाम्—'चळू'। २ करणं शरीरम्। किंचित् प्रयाच्य मे मनो विशल्यं कुरु। ३ कान्त्या।

प्रादुर्भवन्निर्मलशीललीला लीलावती तद्दुहिता स्वसा मे ॥१४०॥

सुवर्णलावण्यगुणौघरत्ननिधिं शरीरं किल वीक्ष्य तस्याः।
प्राकारवद् यौवनमेष कृत्वा वेधाः स्मरं यामिकवद् मुमोच ॥१४१॥

(विशालकीर्ति ज्योतिर्वित्-) भूपः सुतां रूपयुतां विलोक्य ज्योतिर्विदं तत्र विशलकीर्तिम्।
पप्रच्छ स स्वच्छमना वरोऽस्याः कः स्यादतोऽसाववदद् विचार्य ॥१४२॥

(कनकान्तरीपे द्वीपे पद्मावती—) राजन्! समुद्रे कनकान्तरीपे पद्मावती तिष्ठति तत्र देवी।
तद्गेह मध्येऽस्ति धनुः प्रचण्डमदृश्यरूपं धरणेन्द्रमुक्तम् ॥१४३॥

(दिव्यं धनुः—) तत्रोपवासत्रय-भूमिशय्या-ब्रह्मव्रतस्थस्य नरस्य दृश्यम्।
भवेद् विगृह्याऽथ धनुस्तु दिव्यं तन्मण्डनीयं वरमण्डपेऽत्र ॥१४४॥

(पुत्रीवरयोग्यता—) कोदण्डदण्डं किल यो व्युदस्य कोटौ गुणं स्थापयिता बलेन।
धन्यः स कन्यां तव भूमिभर्तर्लीलावतीं स्वीयकरे ग्रहीता ॥१४५॥

(मणिचूलो वीरः—) ज्योतिर्विदो वाक्यमिदं निशम्य दिदेश राजा मणिचूलवीरम्।
स तत्र गत्वा विधिवद् धनुस्तद् नीत्वा चचालाथ विमानरूढः ॥१४६॥

(लक्ष्मीपुरम्—) आयानसौ दिव्यधनुस्तदेव लक्ष्मीपुरस्योपवनान्तराले।
कर्पूरवृक्षस्य तले विमुच्य वाप्यां स्वयं स्नानकृते जगाम ॥१४७॥

---

१ यामिकः-प्रहरी-भाषायाम्-पहेरो देनार। २ पु० 'तन्मण्डलीयं' इति। ३ 'भवस्य इति' पु०। ४ आरोपकम्।

(चापधरो नरो धृतः—) स्नानं वितन्वन् धनुषो गुणोत्थं टङ्कारमाकर्ण्य जवाकुलोऽसौ।
५४॥ तत्रागतश्चापधरं नरं तं विलोक्य धृत्वा स्वपुरीं निनाय ॥१४८॥
तं राजपुत्रं स्वगृहे विमुच्य चापं गृहीत्वा मणिचूलवीरः।
४ गत्वा सभायां रिपुमल्लवीरं नत्वा सहर्षः समुपाविवेश ॥१४९॥
(राज्ञाचिन्ता, वणिरासथ—) राजा धनुः प्रौढधनुःप्रभाढ्यं वीक्ष्याऽवदत् कोऽपि बली न तादृक् ॥
कोटौ[1] समारोप्य गुणं हि योऽस्य करोति मे कोटिगुणं प्रमोदम् ॥१५०॥
उक्त्वेति मौनस्थममुं सचिन्तं दृष्ट्वा बभाषे मणिचूलवीरः।
८ भूत्वोपकर्णं नृपतिस्तदैव हृष्टो नरेन्द्रान् सहसाऽऽजुहाव[2] ॥१५१॥
(विवाहयोग्या सामग्री—)उपस्करं तत्र विवाहयोग्यं भूमीपतौ कारयति प्रकामम्।
रात्रौ स्वसौधाग्रगचन्द्रशालां संश्रित्य चन्द्रेऽभ्युदितेऽस्मि सुप्तः ॥१५२॥
(राजपुत्रहरणम्—) केनाऽपि विद्याधरपांशनेन[3] विहायसैव व्रजताऽस्मि दृष्टः।
२ हृत्वाऽग्रवैरादिह शैलशृङ्गे संकीलितो विस्मृतसर्वविद्यः ॥१५३॥
ततोऽतिपीडाभरतो न वैरी सम्यग् मयाऽलक्ष्यत यद्यपीह।
संजीवितोऽहं त्वयका तथाऽपि ज्ञात्वा करिष्यामि रिपुं प्रशान्तम् ॥१५४॥
स्पृहाविहीनस्य च जीवदातुस्तवोपकारादनृणो न हि स्याम्।
कृत्वा कृपां धन्य! तथाऽपि किञ्चित् याचस्व मां पुण्यनिधिं कुरुष्व ॥१५५॥ [ यतः—

१ धनुषः—अग्रभागे। २ आकारयामास। ३ पांशनो नीचः।

स कल्पवृक्षः स तु कामधेनुश्चिन्तामणिः सैष सुधा स एव।
योऽनेकदुःखाकुलजन्तुजातोपकारकारी दृढधर्मधारी ॥१५६॥
(वसन्तसेनो जगाद—) वसन्तसेनो हृदयप्रमोदसुधागिरं साधुगिरं जगाद।
नरेशसूनो! बहुदुःखदीनोऽप्यहं त्वयैवोपकृतोऽग्रतोऽपि ॥१५७॥
यथा नरः कोमलकल्पवृक्षच्छायासु तृसश्च गतश्रमः स्यात्।
अहं तथा तद्वचनैः सुशीतैर्मन्मित्रवार्तासहितैः प्रहृष्टः ॥१५८॥
प्राणाधिकं यद् भवता वयस्यं प्रकाश्य दत्तं मम जीवितव्यम्।
महोपकारो विहितः स एव परात्मवद् दर्शयता तमेवम् ॥१५९॥
(व्योम्नि विमानम्—) इत्यासमौनेऽथ वसन्तसेने व्योमाङ्गणे निर्मलकान्तकान्ति।
प्रादुर्बभूवाद्भुतमेकमुच्चैर्विमानमाश्चर्यकरं पुरस्तात् ॥१६०॥
नरो विनिर्गत्य विमानमध्यात्—चन्द्रावतंसं प्रणनाम भक्त्या।
क्षेमोऽस्ति भो! भो! मणिचूलवीर! तदा मुदा तं सहसा स आह ॥१६१॥
चन्द्रावतंसो मणिचूलपृष्टो वृत्तं समाख्याय निजं समग्रम्।
वसन्तसेनं कृतजीवदानं निर्दिश्य स स्वेन समं निनाय ॥१६२॥
वसन्तसेनं स्वकरे गृहीत्वा विमानमारूरुहदादितोऽथ।
स्वयं समारुह्य ततश्चचाल कुमारराजो मणिचूलयुक्तः ॥१६३॥

१ या सुधां गिरति ताम्। २ आरोहण कारयामास।

(मणिचूलवीरो बभाषे—) विहायसा गच्छति सद्विमाने वीरो बभाषे रिपुमल्लपुत्रम् ।
स्वयंवरायातनृपार्घ्यहेतोर्व्यलोकयत् त्वां स यदा पिता ते ॥१६४॥
त्वदङ्गरक्षैः शयनीयमग्रेभूयेक्षितं तत् त्वयका नु हीनम् ।
हृतो हृतो राजसुतो हि केने-त्यारावमुच्चैर्विदधुस्ततस्ते ॥१६५॥
त्वद्विप्रयोगाच्च विरार्हकूल्याद् व्यग्रं नृपं वीक्ष्य मया बभाषे ।
स्वामिन् ! अहं ते तनयं निरीक्ष्याऽऽनेष्यामि तत् त्वं भव सुप्रसन्नः ॥१६६॥
(धूमध्वजो नृपः सपरिवारः—) एवं निगद्य प्रचचाल सद्यस्ततोऽहमद्राक्षमितः प्रयान्तम् ।
धूमध्वजं पद्म-महेन्द्र-सूर-भीमैर्युतं स्वामिनमुत्तरस्याः ॥१६७॥
एनं प्रणम्याऽथ मयेति पृष्टं किं कुत्र दृष्टो रिपुमल्लपुत्रः ? ।
पद्मोऽवदत् तत्सदृशोऽस्ति शूलिशैलस्य शृङ्गे मृतवद् वराकः ॥१६८॥
इतः कुमारः कथमेभिरेवं विचारयन् वेगभरादिहाऽऽगाम् ।
वसन्तसेनेन तु सेवितं त्वां दृष्ट्वाऽस्मि हृष्टः परिपूर्णभावः ॥१६९॥
(धूमध्वजो वैरी—) चन्द्रावतंसोऽवददुत्सुकोऽहं ज्ञातं हि धूमध्वजभूप एषः ।
पूर्वं रिपुस्तन्मम देहपीडा कृतेदमुत्सं हि विरोधबीजम् ॥१७०॥
एवं तदालापपरायणस्य चन्द्रावतंसस्य विलोचनाग्रे ।
पुरी परीता फल-पुष्प-वृक्षैर्बभूव भूवल्लभनन्दनस्य ॥१७१॥

१ आरावः कलकलः । २ विरहकृतात् ।

(स्वीया नगरी— ) समीपमेतां नगरीं समेतां विज्ञाय साश्चर्यमना वेतंसः[1]।
उत्थाय विस्तार्य विलोचने स्वे जगाद सौत्सुक्यवचांसि हर्षात् ॥१७२॥ [तथाहि—

'रिरि[2]देवगृहध्वजमाला भान्ति विनिर्मलकान्तिविशालाः।
धर्मनृपस्य भटैरिव सारा धृता अभ्यासिभिरसिधारा ॥१७३॥ [अतः—

प्रासादाः स्फुरदुरुकान्तिहेमकुम्भैः शोभन्ते मरुजरवैर्मदप्रदैश्च।
पापारिप्रहतमुदा प्रहस्तला लं[3] किं योधाः सुकृतमहीभुजो हसन्तः ॥१७४॥

अहो! अग्रतो दृश्यते राजधामं मरुन्मार्गगच्छत्सुवर्णौघधाम।
हिमाद्रिं प्रति स्पर्धया पिङ्गगाङ्ग-प्रवाहस्य कीर्त्येव मेरुर्दृढाङ्गः[4] ॥१७५॥

गजगर्जिततर्जितसिन्धुपतिं भटशस्त्रततिस्खलदर्कगतिम्[5]।
ननु राजगृहाजिरमत्र वरं प्रविभाति जगज्जनचित्रकरम् ॥१७६॥

(राजपर्यत[6]—) वसन्तसेने वदतीत्थमेतद् विमानमागादुपराजपर्यत्।
शीघ्रं समुत्तीर्य ततस्त्रयोऽपि नेमुर्नृपं विस्मयसस्मितास्यम्[7] ॥१७७॥

(नृपचिन्ता—) कुमारवृत्ते मणिचूलवीर—प्रज्ञापितेऽसौ रिपुमल्लराजः।
व्यचिन्तयच्छत्रुविनाशविद्या—पूजाकृतेऽनेन सुतो गृहीतः ॥१७८॥

मत्तो[8]ऽधिकोऽयं भुजवीर्यमत्तो रिपुर्विजेयः कथमेष एव।
चिन्ताऽथवा काऽत्र सदैव दैवमेव प्रमाणं हि भवे भवेऽस्मिन् ॥१७९॥

---

१ चन्द्रावतंसः। २ रिरिः-धातुविशेषः। ३ अलमर्थे 'लम्' इति ज्ञायते। ४ अत्र श्लोके राजधाम-मेरुपर्वतयोः साम्यम्। ५ सूर्यगतिम्। ६ राजपर्यतसमीपम्। ७ विशेषणम्, क्रियाविशेषणं वा। ८ मम सकाशात्।

(स्वयंवरागतनृपाणां सत्कारः—) ततोऽपवार्य स्वसभाजनेभ्यो वसन्तसेनस्य सभाजनाय[1]।
स प्रैरयद्[2] भ्रूभ्रमसंभ्रमेण महीमहेन्द्रो मणिचूलवीरम् ॥१८०॥
नरेशनिर्देशमथो विचिन्त्य तदा मुदा पाणितले विलम्ब्य।
वसन्तसेनं मणिचूलवीरो गृहेऽर्घ्यदानाय निनाय शीघ्रम् ॥१८१॥
(वसन्तसेनमित्रप्राप्तिः—) ततः कुमारोऽमरशेख(ष)रोऽपि प्राणप्रियं लोचनगोचरस्थम्।
हसन्तमालोक्य वसन्तसेनं मुदोत्थितोऽयं सहसाऽऽलिलिङ्ग ॥१८२॥ [ तदा च—
कुमारचित्तेन वसन्तचित्ते वसन्तचित्तेन कुमारचित्ते।
स्वयं त्वभुक्तं चिरसंचितं स्राक् संढौकितं शैत्यमपूर्वभोज्यम् ॥ १८३॥
(मित्रयोः संभाषणम्—) मित्रेण पृष्टोऽथ वसन्तसेनो वृत्तं निजं त्वाविरहात् समग्रम्।
मन्त्रासि-राजाङ्गजजीवदानप्रभृत्यवादीत् प्रमदप्रदायि ॥१८४॥
ततो वसन्तेन युतं कुमारमसिस्नपद् मङ्गल-गानपूर्वम्।
कोटीर-हारा-ऽङ्गद-हीरमुद्रादिभिः स वीरस्तमलंचकार[3] ॥१८५॥
(प्रतीहारो नृसिंहः—) ततः प्रतीहारवरो नृसिंहः पट्टाश्वमानीय जगाद वीरम्।
विधाय माङ्गल्यविधीन् समग्रानारोप्यतामत्र कुमारराजः ॥१८६॥
(विस्मितं चेतः—) वसन्तसेनादिभिरन्वितोऽयं तुरंगमारुह्य तदा चचाल।
क्वाऽहं क्व वैताढ्यनगः क्व चेदं विचिन्तयन् विस्मितचेतसैवम् ॥१८७॥ [ इतश्च—

१ सभाजनं पूजनम्। २ स्थापयामास। ३ भूषयामास।

(स्वपरमण्डपः—) चंद्रोदये शीततरं दिनेऽपि मुक्ताङ्कितं मोहकरं भवेऽपि
चित्रप्रदं चातिविचित्ररूपं नेत्रातिथिं मण्डपमेष चक्रे ॥१८७॥

(विद्याधरेन्द्राः—) यावत् कुमारः स तु मण्डपान्तर्बभूववीक्षां ललितोत्पलाक्षः।
हृष्टान् निविष्टान् कनकासनेषु विद्याधरेन्द्रान् मुदितो ददर्श ॥१८८॥

(वसन्तसेनमित्रम्) पुरः परिक्रम्य स वेत्रिवाचा निर्दिष्टपूर्वं गुरुविष्टरेऽथ।
स्पष्टप्रभो राजसुतो निविष्टः स्वकीयमित्रेण सशोभपृष्ठः ॥१९०॥

शृङ्गारपीयूषपयोमुचोऽस्य प्रभाम्भसा श्रीरिपुमल्लहर्षः।
कल्पद्रुवद् वृद्धिमगात् तथाऽन्यराज्ञां प्रतापोऽग्निरिवोपशान्तः ॥१९१॥

(संगीतम्—) इतो मृदङ्गध्वनिमन्द्रसान्द्रमुन्निद्रनीरन्ध्रपुरन्ध्रिगीतम्।
आकर्ण्य कर्णप्रमदप्रदं द्रागुत्कर्णितैर्भूपतिभिर्बभूवे ॥१९२॥ [ तावच्च—

(धनुः—)महोऽधिकं तत्र महोत्सवेन महाधनुः प्रौढविमानरूढम्।
आनीय चोत्तार्य ततो भटाग्र्यैस्तद् मण्डितं मण्डपमध्यभागे ॥१९३॥

(राजपुत्री लीलावती—) ततो द्वितीयाद् महतो विमानात् सौख्यात् सखीभिर्विहिताऽवलम्बा।
लीलालुलन्नीलपयोजनेत्रा लीलावती राजसुतोत्ततार ॥१९४॥

१ दिनेऽपि चन्द्रोदयः, मुक्ताङ्कितत्वेऽपि भवे मोहकरत्वम्—एतदेव मण्डपस्य चित्रप्रदत्वम्। चन्द्रोदयः—चन्द्रस्य उदयः, भाषायाम्—चंदरवा वा, मुक्ताः—मौक्तिकानि, मुक्तात्मानो वा। २ वीक्षांबभूव—कवेः स्वातन्त्र्यमेतत्। ३ प्रतीहारवाचा। ४ महति आसने। ५ शोभासहितं पृष्ठं यस्य सः। ६ अम्भो हि द्रुमं वृद्धिमुपनयति, अग्निं च उपशमयति—अत्राऽपि प्रभाम्भसा एवमेव अनुकृतम्।

झलत्कृतिं निर्मलमौलिरत्नैः स्वलंकृतिं हार-मणीगणैश्च ।
झमत्कृतिं नूपुरसिञ्जितैः स्राग् वितन्वती चापसमीपमाप ॥१९५॥

तद् दिव्यचापं बहुभक्तियुक्ता संपूज्य पुष्पैर्हरिचन्दनैश्च ।
संवर्ध्य साऽवाप्य मुदं च तस्थौ नीरङ्गिकाच्छन्नमुखी सखीयुक् ॥१९६॥

(प्रतीहारी कन्याग्रहणपणं प्रोवाच—) अस्यां सभायां प्रसरत्प्रभायां प्रौढप्रतीहारिकयैकयाऽथ ।
विस्तार्य हस्तं चतुरं प्रशस्तं प्रोचे वचः प्रोच्चमनुच्चताढ्यं ॥ १९७ ॥

तथाहि— हंहो ! भूमीमहेन्द्रा अतनुनिजतनुज्योतिषा निर्जितेन्द्रा
हंहो ! धीराश्च वीराः समधिगतरणाम्भोधितीरा भवन्तु ।
यः कोऽपि क्षत्रियोऽस्ति स्वभुजबलकलाखर्वगर्वस्थवित्तः
चापं प्रारोप्य कन्यां परिणयतु जनिं स्वां स धन्यां करोतु ॥१९८॥

(पणपूरणे नृपाणाम् असामर्थ्यम्—) श्रुत्वैवमुत्तस्थुरनेकवीराः स्वश्मश्रुमोहायितशस्तहस्ताः ।
एकेऽवलोकेऽपि न तस्य धृष्टास्तत्स्पर्शतः के भुवि संनिघृष्टाः ॥१९९॥

( उत्थितो रत्नध्वजः, विफलश्च— ) अथोत्तरश्रेणिपधूमकेतु-पुत्रोऽत्र रत्नध्वजसंज्ञकोऽस्ति
सूरेण पद्मेन युतस्तु वीर—मानी स मानी बलवानुदस्थात् ॥ २०० ॥

ततो धनुः सोऽतनुवीर्ययुक्तो यावत् समुत्पाटयति प्रसह्य ।
तावद् विचेताःश्लथसन्धिबन्धः पपात घाताहतवत् पृथिव्याम् ॥ २०१ ॥

१ भाषायाम्—झलकार—झलकाट । २ भा० खलकार—खणकार । ३ झमकार । ४ जन्म, जननीं वा । ५ एके केवल नृपाः तस्य धनुषः अवलोके दर्शने अपि न धृष्टाः समर्थाः । ६ शिथिलं श्लथम् ।

( रत्नमौलिपातः— ) तदैव दैवस्य विपाकतोऽस्य मौलेरिलायां विलुलन् स मौलिः ।
लीलावतीपादतलान्तमेत्य तस्थौ मणीभिः प्रहसन्निवोच्चैः ॥२०२॥

कन्या सखी प्रीतिमती बभाषे लीलावति ! त्वत्पदयोर्निपत्य ।
कृत्वा प्रसादं शृणु मेऽधिपं त्वं वदन्निवेदं मुकुटः पुरोऽस्ति ॥२०३॥

मातुङ्गशालाऽथ विचार्य बाला पदेन चिक्षेप किरीटमेनम् ।
तदैव काक्षेण निरीक्ष्य पद्मश्चक्रे मनः स्वं दृढकोपसद्म ॥२०४॥

रत्नध्वजं तं रिपुमल्लराजो दयामयश्चन्दनसेचनाद्यैः ।
विधाप्य चैतन्ययुतं सुवाक्यैः संमान्य चाऽस्थापयदासने तम् ॥२०५॥

( अमरशेखरागाकल्पनम्— ) कुमारराजोऽमरशेखरोऽयमक्षौर्यधृत्तिर्दृढशौर्यवृत्तिः ।
उत्थाय नीत्वा च धनुस्तदाऽनीनमत् तदानीमचलाबलाङ्गः ॥२०६॥

( बालया पुष्पमालाऽऽरोपणम्— ) गुणाधिरोपं गुरुटङ्कृतिं च कृत्वा स्थितस्याऽस्य मुकुर्दकम्बौ ।
बाला विशालामिह पुष्पमालामारोपयत् कामगजेन्द्रशाला ॥२०८॥

( कुमारी पपात— ) यावत् कुमारी वरणस्य मालामारोप्य दूरेऽजनि तावदेव ।
पपात चैतन्यविहीनदेहा कल्लोललोलाम्बुजवल्लरीव ॥२०९॥

आकस्मिकीं ग्लानिमवेक्ष्य राजा राजाङ्गजायाः प्रलुठद्भुजायाः ।

---

१ मस्तकात् । २ इला भूमिः । ३ वक्रदृष्ट्या । ४ दृढकोपगृहं स्वं मनः–चक्रे । ५ नतं चकार । ६ अचलावत् बलम् अङ्गे यस्य । ७ गुणोऽत्र धनूरज्जुः । ८ मुकुटभूषायाम् ।

अचीकरन् म्लानमना नितान्तं शीतोपचारान् प्रचुरान् जवेन ॥२१०॥
(सभाजनो भाविहीनः) मुग्धैर्विदग्धैर्विहितैरुपायैर्न नाशमर्तिः समियर्ति यावत्।
तदा भृशं म्लानिमवाप भूपः सभाजनोऽभूच्च स भाविहीनः ॥२११॥
(वसन्तसेनदर्शितो मन्त्रप्रभावः—) इतो वसन्तो मुनिदत्तमन्त्रं त्रिः सप्तकृत्वो मनसा विचिन्त्य।
आनीनयन्नीरभरं तदङ्गाभिषेककृत्यै करसंज्ञयैव ॥२१२॥
पानीयमानीय तदीयहस्ते यावन्नरो निक्षिपतीह कोऽपि।
सौगन्ध्यसाराऽद्भुतकान्तिभारा तदाऽम्बुधारा गगनात् पपात ॥२१३॥
(उत्थिता कुमारी—) सा नीरधाराऽम्बरतो वसन्त-हस्ते ततो भूपसुता शरीरे।
संगं करोति स्म तदैव मूर्च्छा प्रक्षालितेव प्रययौ जवेन ॥२१४॥
वसन्तसेनश्च सभाजनश्च दिव्योदकस्पर्शत एव कन्याम्।
मूर्च्छामपाकृत्य ससौष्ठवाङ्गीं वीक्ष्येत्यऽचित्रीयत चित्तमध्ये ॥२१५॥
अहेतुवैक्लव्यमिदं किमस्याः कः स स्मरन् मन्त्रमसौ वसन्तः ?।
करेऽम्बरस्थोऽस्य ददौ जलं को नैवं जनैर्निश्चलताऽऽपि[2] काऽपि ॥२१६॥
तदा पुनर्मङ्गलशब्दवृन्दं निमिष्य किंचिद् विगुणत्वमाप।
पवित्रचारित्ररतस्य साधोरिवाऽपवादादनु शुद्धभावः ॥२१७॥
(सत्कारः—) अथ प्रमोदाद् रिपुमल्लराजस्ताम्बूल-वस्त्रा-ऽऽभरणैः प्रधानैः।

---

१ अर्तिः नाशं न समियर्ति। २ निश्चमः। ३ प्रापि।

स्वयंवराऽऽयातमहीमहेन्द्रान् सत्कर्ममारम्भयदुच्चचित्तः ॥२१८॥

(धूमध्वजसुतस्य द्वेषः—) धूमध्वजस्याऽथ सुतोऽद्भुतौजाः पराभवोद्भूतविषादनुन्नः।
देहाऽपटुत्वं व्यपदिश्य वेगाज्जगाम सक्रोधविरोधधाम ॥२१९॥

बुद्धिं विपर्यास्य निजेश्वरस्य पुनः पुनर्विग्रहमूलहेतू।
तौ द्वेष-रागाविव पद्म-सूरौ प्रचेलतुस्तेन समं ससैन्यौ ॥२२०॥

अथोत्तरश्रेणिपतिः स धूमध्वजोऽङ्गजं वीक्ष्य निजं सचिन्तम्।
पप्रच्छ पद्मं नृपमेष वत्सः किं स्वस्थचित्तो न तथाविधोऽद्य ॥२२१॥

श्रीपद्मराजस्य मुखेन सर्वं पुत्रापमानं स निशम्य सम्यक्।
उवाच धीमान् सुत! मा स्म कार्षीर्विषाऽदनोग्रं हि विषादमन्तः ॥२२२॥

यतः— यथा ते कोटीरप्रकटमणिकोटीरिततमाः परिक्षिप्तः पादेन तु नृपकुमार्या मदवशात्।
तथाऽहं खण्डाग्रत्रुटितरिपुमूर्धांगलित-स्फुटद्दन्तश्रेणिं रणभुवि निधास्येऽश्वचरणैः ॥२२३॥

इत्थं निस्त्रिंशवाचा सभयमिव भवत्कम्पनिस्त्रिंशदण्डं नीत्वा विद्याधरेन्द्रोऽतुलबलकलितो चिद्रयोन्मेषमात्रा।
त्रिंशत्प्रोद्दामचक्रैर्युततनुरतनुक्रोधतः षष्टिसंख्यै-रुदण्डैर्बाहुदण्डैरदिशदरिपरित्रासनाय प्रयाणम् ॥२२४॥

(पुष्पावचूलः सचिवः—) पुष्पावचूलः सचिवस्तदैवाऽवदद् ददन्नीतिमतीं मतिं च।
संमील्य भूपान् प्रथमं स्वसैन्ये दूतस्ततः प्रेष्यत एव राजन्! ॥२२५॥

(मित्रनृपाह्वानम्—) तथा महाराज! निजं वयस्यं लक्ष्मीपुरेशं हि सुरेन्द्रदत्तम्।

१ अकारान्तोऽपि कर्मशब्दो ज्ञायते। २ विषभक्षणादपि उग्रम्। ३ 'भवत्'–शतृप्रत्ययान्तं भू-धातोः।

भूपं त्वमाकारय यत् स्वमित्र-वर्गं सुपृच्छ्य क्रियते हि कार्यम् ॥२२६॥
वाक्यं प्रभो ! ते महितेऽथ दूते दुर्नीतियुक्तं यदि वक्ति वैरी ।
स्वामिन् ! तदाऽमुं त्वभिपेणयेस्त्वं तदूर्ध्वकिंपाकफलं हि तस्य ॥२२७॥
(दूतं विससर्ज—) नीतिप्रणीतं सचिवस्य वाक्यं श्रुत्वाऽऽजुहावाऽथ सुरेन्द्रदत्तम् ।
कन्या प्रयाच्येति निसृष्टवाचं दूतं प्रवाचं विससर्ज तस्मिन् ॥२२८॥
गत्वा स दूतो रिपुमल्लभूपं निबन्धतो बन्धुजनोपकृत्यै ।
निदेशयन्तं च निजांस्तनूजान् सिंहासनस्थं निजगाद गाढम् ॥२२९॥
तथाहि— (दूतवाणी—) विद्याढ्यवैताढ्यनरेन्द्रनाथः श्रीधूमकेतू रिपुधूमकेतुः ।
वितन्य सौजन्यभरं स्वचित्ते त्वां वक्ति मद्वक्त्रवचोभिरेवम् ॥२३०॥
रत्नध्वजाय प्रथमाङ्गजाय निजाय वज्रार्यतसद्भुजाय ।
हर्षात् कुमारीं स तु याचते ते स्वौजन्यतः प्रीतिरुपैतु वृद्धिम् ॥२३१॥
धनुःप्रतिज्ञा ननु का घृयेयं भञ्जन्ति लोका हि वनेऽपि वंशान् ।
एतत्सुताय स्वसुतां प्रदाय सहायमेनं तु गृहाण धीमान् ॥२३२॥
तयेच्छसि त्वं यदि राज्यमार्य ! विचार्य तत् कार्यमिदं कुरुष्व ।
यतो महद्भिः सह कोपरोपः सोपप्लवं जीवितमातनोति ॥२३३॥

---

१ सेनाम् अभिमुखं नय—आक्रमणं कुरु । २ पश्चात्—तस्य युद्धस्य किंपाकफलवत् फलम् । ३ वाचाटम् । ४ वज्रवत् दृढौ आयतौ च भुजौ यस्य । ५ स्वजनभावतः । ६ आयामम्—वांसड़ा ।

दूते गदित्वा विरतेऽथ राजा कालुष्ययुक्तोऽप्यवदत् प्रयत्नम् ।
तारांधिराजोऽपि सुलक्ष्यलक्ष्मा चन्द्रातपं मुञ्चति निर्मलं हि ॥२३४॥

(राज्ञः प्रतिवचः—) हे दूत ! वाक्यं शृणु यत् स धूम-ध्वजः पुरा मैत्र्यवशात् सुतां मे ।
प्रयाचते तद् घटते सतां हि याञ्चाऽपि नो बन्धुषु लाघवाय ॥२३५॥

किन्तु, दिव्यप्रभं चानवलोक्यमन्यैश्चापं समारोप्य मुदं ददौ यः ।
धृतो वरोऽयं सुतयेति कीर्तिं श्रुत्वाऽपि मामर्थयतीत्ययुक्तम् ॥२३६॥

एवं स भूपः कपटस्य कूपः समीहते यत् तदसौ करोतु ।
अहं स्थितोऽस्मि प्रतिकर्तुमेनं रोगं दृढं वैद्य इव प्रविद्यः ॥२३७॥

इत्थं मृदुस्पष्टगिराऽतियुष्टो धैर्याद् विसृष्टः स ययौ च शिष्टः ।
ज्ञात्वा रिपुं तं रिपुमल्लराज आजूहवत् स्वंमणिचूलवीरम् ॥२३८॥

(सेनासंनाहः, अभिप्रयाणं च—) तत्राऽऽगतं प्राञ्जलिमग्रसंस्थं जगाद राजा मणिचूलवीरम् ।
अक्षौहिणीसप्तकसंख्यसैन्ययुक्तोऽरिमार्गाधिमभिप्रयाहि ॥२३९॥

दिने दिने त्वं कुशल ! स्वरूपं प्रस्थापयेथा इति राजवाक्यात् ।
प्रमाणमादेश इति प्रणत्य जगाम सैन्यैः सहितैः स तत्र ॥२४०॥

(विवाहमहः—) प्रमोदपीयूषपयोधिमग्ने जने ससग्रेऽप्यथ रम्यलग्ने ।
व्यवाहयद् भाग्यवरैरहीनः स तां कुमारेण समं महीनः ॥२४१॥

---

१ चन्द्रः । २ मित्रतावशात् । ३ न गम्यते । ४ इनः—स्वामी—महीनः—महिपतिः ।

क- उल्लुकल्लोलकलेपु तत्र चतुर्पु जातेपु च मङ्गलेपु ।
मयाच्य किञ्चित् मम पुत्रिकायाः करं विमुञ्चेति नृपस्तमूचे ॥२४२॥

(धनुस्तूणस्य याचनम्— ) ऊचे विहस्याऽमरशेखरोऽपि धनुःसमं दिव्यशरप्रपूर्णम् ।
तूणं प्रतूर्णं वसुधाधिनाथ ! यच्छ प्रयच्छ त्वमतो मतं मे ॥२४३॥

राजाऽवदद् देव ! गुणैस्त्वदीयैस्तनूसुवं स्वाङ्गसुवं ददामि ।
पुत्र्यास्तु भाग्येन धनुर्मयाऽऽप्तं तूणं त्वसाध्यं कथमर्पयामि ? ॥२४४॥

(चिन्तामणिः—) तस्मादिहाऽऽस्माककुलेऽस्ति पूज्यश्चिन्तामणिश्चिन्तितवस्तुदाता ।
एनं गृहाणेति निशम्य हर्षान्नीत्वा मुमोचाऽथ करं प्रियायाः ॥२४५॥

(प्रतिज्ञा—) इत्थं विवाहस्य महोत्सवेपु कृतेपु राजाऽथ कुमारराजः ।
संस्थाप्य चापं कनकासनेऽसौ संपूज्य संयोज्य करौ जगाद ॥२४६॥

त्वां चाप ! यथार्पमहं सुभाग्यान्न तत् कथं त्वत्सदृशं निपङ्गम् ।
पूर्णो यदैषोऽत्र मनोरथः स्याद् यास्यामि भोक्ष्यामि तदाऽन्यथा न ॥२४७॥

(नमस्कारो मन्त्रः—) इति प्रतिज्ञाय गिरं स्थिरं तं वीक्ष्य स्थितं भूपसुतं वसन्तः ।
अरं स्मरन् पञ्चनमस्कृतिं सोऽप्यस्थाद् महास्थामनिकामधाम ॥२४८॥

इत्थं स्थितौ तौ नृपतिश्च मत्वा परिच्छदेनाऽल्पतरेण गत्वा ।
प्रमोदतो विस्मयतोऽप्युपासामास त्रिरात्रं स विवेकपात्रम् ॥२४९॥

---

१ कोमलकृतो विवाहगीतध्वनिः । २ प्रापम् ।

(वरुणः—) दिने चतुर्थेऽभ्युदिते दिनेशे[1]—निर्धूमदीपमतिदीप्तदेहः ।
फणीभिरोजस्विमणीगणाभिरुद्द्योतयन् सप्तभिरम्बरान्तः ॥२४९॥

(वरं वृणु—) महोज्ज्वलाभ्यां चलकुण्डलाभ्यां मेरुं जयन् निर्मलपुष्पदन्तम्[2] ।
वरं वृणु त्वं नृपनन्दनेति वदन् पुरोऽभूद् वरुणोऽरुणेन्द्रः ॥२५०॥

देवेश्वरं सोऽमरशेखरोऽथ निरीक्ष्य नत्वाऽऽह सह स्मितेन ।
ज्ञानेन जानन् अपि पन्नगेन्द्र ! मां पृच्छसि त्वं हृदयस्य तत्त्वम् ॥२५१॥

(दत्तो निषङ्गः—) क्षणं स्थिरीभूय भुजंगमेन्द्रः प्रदर्शयामास निषङ्गयुग्मम् ।
एकस्तयोः कृष्णतरैः शरैस्तु पूर्णो द्वितीयश्च सुवर्णवर्णैः ॥२५२॥

तं श्यामबाणं किल वामहस्ते द्वितीयमेतस्य करे द्वितीये ।
समर्प्य हर्षाद् उपकर्णमेत्य प्रभावमाह स्म मुदे तदीयम् ॥२५३॥

(रिपुमल्लो देवं पप्रच्छ—) वतंसयित्वा स्वकरौ सुरेन्द्रं पप्रच्छ नत्वा रिपुमल्लराजः ।
मूर्च्छा किमेषा मम पुत्रिकायाः केनाम्बु दत्तं च वसन्तहस्ते ? ॥२५४॥

कृत्वा प्रसादं सुरराज ! सर्वं संदेहमुच्छिन्धि मदीयमेनम् ।
सूर्योदये यस्य विलोचनान्ध्यं नो याति तद् यातु कथं हि तस्य ॥२५५॥

(सुरः प्रतिवक्ति—) स स्पष्टमाचष्ट सुरोऽथ तुष्टः राजन् ! समाकर्णय दत्तकर्णः ।
आनायितं चापमिदं यदाऽत्र तदागतः कौतुकतस्ततोऽहम् ॥२५६॥

[1] दिनेशः सूर्यः । [2] पुष्पदन्तो दिग्गजविशेषः ।

अपेक्षमाणे मयि मण्डपं ते मालां यदा भूपतिपुत्रकण्ठे।
चिक्षेप साक्षेपकटाक्षवीक्ष्या मन्दाक्षदक्षाक्षियुगा कुमारी ॥२५७॥

तदा च— स्वस्वामिकोटीरपदप्रहारात् साटोपकोपात् स तु पद्मभूपः।
प्रायुङ्क्त कन्यामरणाय विद्यां भूता विचित्ता नु तथाऽभिभूता ॥२५८॥

यतः— क्रोधः प्रबोधतरणेरुरुराहुकल्पः कल्पद्रुमप्रतिमधर्मविनाशवह्निः।
स्नेहामृतद्युतितनुक्षयपक्ष एष वर्ज्यः सतां हि महिमाम्बुरुहे हिमानी ॥२५९॥

तथाच— सर्वाचारविचारज्ञः सर्वशास्त्रविशारदः।
सर्वधर्मानुरक्तोऽपि कोपात् पापं करोत्यहो ! ॥२६०॥

वसन्तसेनस्य तु हस्तपद्मे तुष्टेन मन्त्रस्मरणाद् मयैव।
न्यधायि नीरं हि सुताङ्गपुष्टिर्विधायि बन्धुप्रमदप्रदायि ॥२६१॥

भाग्यात् कुमारस्य वसन्तसेनस्यैकाग्रमन्त्रस्मरणाच्च तुष्टः।
पुराऽन्यपुण्यादमुतोऽथ मन्त्रात् सुखं भवेदत्र भवेऽन्यथा न ॥२६२॥

(परमेष्ठिमन्त्रप्रभावमहिमा—) कल्याणसंततिवनीनवनीरवाहं सौभाग्यवल्लिघनपल्लवपुष्पकालम्।
आलानमाश्रयकृते जलधेः सुतायाः भव्या भुवि स्मरत भोः ! परमेष्ठिमन्त्रम् ॥२६३॥

(सुरो गतः—) एवं वचस्तस्य नरेश्वरायाः श्रुत्वा मनोहृत्य पपुः प्रमोदम्।

१ उरुराहुः—महाराहुः। २ कल्पद्रुमसमानधर्मविनाशने अग्निः। ३ अमृतद्युतिश्चन्द्रः। क्षयपक्षः कृष्णपक्षः। ४ कमलनाशने हिमरूपः क्रोधः। ५ वनी अरण्यम्। ६ जलधेः सुताया लक्ष्म्याः आलानस्तम्भरूपः। ७ आकण्ठम्।

यावत् प्रणेमुर्विनयात् ततोऽमुं तावत् तिरोऽभूदुरगाधिराजः ॥ २६४ ॥
(एको नरः—) एको नरोऽथो मणिचूलवीरसैन्यात् समभ्येत्य तदैव तत्र ।
कृत्वा प्रणामं नृपपादमूले कृताऽञ्जलिः प्राञ्जलिवागुवाच ॥२६५॥
धूमध्वजोऽसौ शिवमन्दिरेशः संमील्य भूपान् भविताऽस्त्यऽमित्रः ।
एतत्स्वरूपं कथितं प्रवीर ! प्रस्थापितैर्गूढनरैर्नरेन्द्रैः ॥२६६॥
(पुवाय त्वरा—) तस्येति वाक्यात् स्मृतिमान् नृपेशः कोटीरयन्[1] स भृकुटी[2] ललाटे ।
हृत्क्रोधधूमध्वजधूमवल्ली इवोर्वरीन्द्रो द्रुतवाचमूचे ॥२६७॥
पर्यापयन्तां महाश्वा निजजवभरतः क्रान्तविश्वा क्षणेन
सज्यन्तां सद्गजेन्द्रा मिलदलिपटलैर्दानितैः[3] सेव्यमानाः ।
योधाः ! संनह्यतां भो ! रणसलिलनिधेर्मन्थने मन्थशैलाः
भूपाः ! संभूयतां च प्रबलरिपुकुलप्रत्यनीकैरनीकैः ॥२६८॥
उदित्वैवं राजा स तु निजसमाजाच्च तरसा रयादुत्थायाऽथ द्विरदवरं[4] लक्षणधरम् ।
प्रसह्य प्रारुह्य प्रतिनृपगणा[5]सह्यमहिमा-ऽहिमांशुः पूर्वस्या नगमिव पुरा प्रोद्गत इतः ॥२६९॥
(अमरशेखरकुमारोऽपि समित्रो युद्धे चचाल—) ततः कुमारोऽमरशेखरोऽपि मित्रेण चापेन च चारुमूर्तिः॥
चन्द्रावतंसः स्वसहोदराणां शतत्रयेणाऽनुगतोऽभ्युपेतः ॥२७०॥
(अक्षौहिणीनवकम्—) एवं तदा तस्थुषि तत्र राज्ञि भूपाः समीपं समुपेयुरन्ये ।

१ कोटीरं कुर्वन्। २ भृकुटीविशेषणम्। ३ मदभरतः। ४ प्रवरं हस्तिनम्। ५ प्रतिनृपः-शत्रुः।

अक्षौहिणीभिर्नवभिर्मितं तद् बभूव सैन्यं रिपुदैन्यदायि ॥२७१॥

भेरीभाङ्कारभारैः सुरपतिसदने गायतस्तुम्बरोस्तु[1] स्थानं यच्छन् हयानां स्थपुटखुरपुटस्फोटनैस्तालदानम् ।
कुर्वन् पातालमूले भुजगपतिपुरो नाटके जायमाने सोऽचालीद् दिग्गजेन्द्रानपि हि बधिरयन् प्रौढढक्कादिनादैः॥

(रथावर्तो गिरिः—) ततो रथावर्तगिरौ ससैन्यं स्थितं नृपस्तं मणिचूलवीरम् ।
जगाद शीघ्रं चल भो! यथाऽथ च्छिनद्मि तं छद्मपरं स्वशत्रुम् ॥२७३॥

(राजमृगाङ्को मन्त्री—) मन्त्री ततो राजमृगाङ्कनामा राजानमानम्य तदा जगाद।
स्वामिन्! समाकर्णय नीतियुक्तां विज्ञप्तिमेकां सचिवैकचित्तः ॥२७४॥

(नीतिशास्त्रम्—) रागस्थितौ तीव्रतरं व्रतं यन्मार्गश्रमे यद् बहुनीरपानम् ।
यत्कोपतः प्रोद्धतशत्रुयुद्धं तन्नायतावायतसौख्यहेतुः[2] ॥२७५॥ तथाच—

रात्रौ स्वनेत्रे विनिमील्य यानं[3] सिद्धान्तमप्रेक्ष्य तपोविधानम् ।
शत्रोरनालोक्य बलप्रयाणं नैतत् प्रभो! चारुविचारचारि ॥२७६॥ अन्यच्च—

(अभ्रगेहम्—) यथाऽभ्रगेहोपगतः[4] प्रदीपो वातोपघातैर्न विनाशमेति ।
तेजस्वितेजोऽपि तथा प्रशान्तेर्मध्यस्थितं कोऽपि विहन्ति नैव ॥२७७॥

प्रौढप्रवीरक्षयहेतुयुद्धं नीतौ निषिद्धं नृप! सर्वथैव ।
तच्चेत् समानादिभिरेति[5] सेवां रम्यं तदा नेत्थमतो रणं स्यात् ॥२७८॥

---

१ तुम्बरुः–देवगायको गन्धर्वः । २ आयतौ भविष्यति । ३ गमनम् । ४ अभ्रगेहम्–अभ्रेण रचितं दीपरक्षागेहम्–भाषायाम्–'अबरखनुं फानस' । ५ सामादिभावैः ।

(दूतस्य शिक्षा—) श्रुत्वेत्यमात्यस्य वचः स्वसैन्यं संस्थाप्य दूतस्य ददौ स शिक्षाम् ।
भोः ! प्रोद्धतैरेव वचोभिरेनं युद्धोद्यतं त्वं कुरु न प्रशान्तैः ॥२७९॥

(दूतवाणी—) ततः स दूतो जवतोऽभ्युपेत्य धूमध्वजं वाचमुवाच वाग्मी ।
हितं सुनीत्या सहितं मितं मे वचः शृणु त्वं नृप ! सावधानः ॥२८०॥

यत् मृगविद्यावलये त्वयाऽस्य सुतो हृतो यच्च विवाहमध्ये ।
पद्मः कुमार्यां विचकार विघ्नं तेन प्रकोपाकुलितोऽरिमल्लः ॥२८१॥

सर्वाभिसारेण रसाधिपस्त्वां सरंहरं सारभृतः प्रधानैः ।
क्रुद्धोऽपि रुद्धोऽस्ति तव प्रबोध-हेतोस्ततोऽस्मि प्रहितो हिताय ॥२८२॥

(राज्ञः समाधे—) विचार्य तत् त्वं निजसौख्यतत्त्वं संधानमाधाय समाधिनैधि ।
श्रुत्वेति दूतस्य वचः स राजा भुजं निजं प्रेक्ष्य बलाद् बभाषे ॥२८३॥

(कनकस्य जिह्वा—) कण्डूलदोर्मूलभुजानुकूलं वाक्यं प्रवक्तुः कनकस्य जिह्वा ।
एतस्य दूतस्य तु मन्त्रिराजः ! प्रदीयतां मत्प्रमदेन दानम् ॥२८४॥

(दूतमुखं वीक्ष्य—) यद्वाच विद्यावलये यथाऽस्य सुतो गृहीतोऽद्य तथाऽरिशीर्षैः ।
स्वशौर्यदेवीपुरतस्तु नालि-केरीफलस्फोटनिकां करिष्ये ॥२८५॥

---

१ क्षरं शीघ्रं सरन् । २ समाधिना समाहितो भव । ३ प्रवक्तुर्दूतस्य । ४ विद्यामण्डले । ५ देवीपुरतो हि नालिकेरस्फोटो विश्रुतः, अत्रापि स्वशौर्यदेवी पुरतःशत्रुशीर्षनालिकेरस्फोटः । ६ नालिकेरम् ।

संधानसंधा न हि मेऽस्ति चित्ते चित् तेऽस्ति तन्मेऽङ्घ्रियुगं नम त्वम् ।
रे दूत ! गत्वा कथयेति तस्य पुरः पुरं प्रेतवतेर्यियासोः ॥२८६॥

( दूतविसर्जनम्— ) प्रसह्य दूतं स नृपोऽप्रसह्य-शौर्यो विसृज्य स्वमहीमहेन्द्रैः ।
युक्तोऽचलचारुचमूसमूह-श्चमूरवक्रूरतरं स शूरः ॥२८७॥

एवं भुवं कांचिदपि व्यतीत्य धूमध्वजेन क्षितिपेन सर्वा ।
सेना रसेनाऽर्गलितेन तेन चक्रेऽथ चक्रेण समानरूपा ॥२८८॥ तथाहि—

( सेनां चक्राकारां विधाय चचाल धूमकेतुः— ) अष्टाभिरक्षौहिणिकाभिरष्टावरानरित्रासकृते चकार ।
मुखेषु तेषां परितस्तथाऽष्टौ स्पष्टौजसो भूमिपतीन् मुमोच ॥२८९॥

अक्षौहिणीर्द्वादश नेमिरूपा धूमध्वजस्तत् परितो न्यधत्त ।
अक्षौहिणीभिः स्वयमष्टभिश्च युक्तस्ततो नाभिमभिस्थितोऽसौ ॥२९०॥

समग्रसैन्यस्य पुरः प्रयाणे न्यवीविशत् पद्मनृपं महेन्द्रम् ।
रत्नध्वजं स्वाङ्गजपञ्चशत्या वामेऽमुचद् दक्षिणतोऽथ शूरम् ॥२९१॥

सहोदरं स्वं शिबिरस्य पार्ष्णौ भूपोऽमुचद् मेघरथाऽभिधानम् ।
इत्थं समग्रं स विधाय सैन्यं चचाल शत्रूनभि धूमकेतुः ॥२९२॥

---

१ संधिकरणप्रतिज्ञा। २ 'चेत्' अर्थे 'चित्'। ३ प्रेतपतिपुरं-यमपुरम्। ४ अधृष्यशौर्यैः। ५ चमूरवेण क्रूरतरम् (रवः शब्दः)। ६ शत्रुरोधाय अर्गल इव जातेन-भाषायाम्-आगळियो-अर्गलः। ७ चक्रेण समानरूपा-चक्राकारा। ८ अष्टौ अरान्-सैन्यस्य चक्रव्यूहरचने अराणामाकारेण सैन्ययोजना जायते। ९ पार्ष्णिः-भाषायाम्-पानी (पगनी)

(सैन्यं गरुडाकारं विधाय आगतवान् रिपुमल्लराजः—)

दूतस्य वाक्येन किलाष्टविंश-अक्षौहिणीभिः सहितं रिपुं स्वम् ।
धूमध्वजं तं रिपुमल्लराजोऽभ्यायान्तमाकर्ण्य बभूव सज्जः ॥२९३॥

स्थानेऽस्य चञ्चोर्मणिचूलवीरं स्वकं सुतं कालमुखाभिधं च ।
अक्षौहिणीपञ्चकयुक्तमेष मुमोच संकोचकृते रिपूणाम् ॥२९४॥

चन्द्रावतंसं किल दक्षिणाङ्गे द्वितीयपक्षेऽमरशेखरं च ।
अक्षौहिणीनां सहितं चतुष्केणैकैकशोऽस्थापयदेष राजा ॥२९५॥

संयमितैः पञ्चसहस्रहस्तिस्थितैर्भटैर्विंशतिभूमिपैश्च ।
युक्तः स्वयं पक्षयुगान्तराले तस्थौ सुसज्जो विधृतातपत्रः ॥२९६॥

अक्षौहिणीभिरितरभिः समेतं वज्रायुधाख्यं मणिचूलपुत्रम् ।
जिनार्चनातुष्टसुरेन्द्रदत्त-शक्त्यायुधं सोऽथ मुमोच पुच्छे ॥२९७॥

विरोधिनीमेष रिपुप्रमाथी विधाय सर्वां गरुडस्य मूर्त्याम् ।
चचाल मन्दं रिपुवंशकन्द-प्रोन्मूलनेच्छुर्द्विपवन्नृपः सः ॥२९८॥

अनीकयोर्योजनपञ्चकेन तयोस्ततः संस्थितयोर्नृपौ तौ ।
संशोधयामासतुरुत्सुकौ तत् क्षेत्रं रणायोत्कटधैर्यधुर्यौ ॥२९९॥

(सुभटानां सत्कारः—) दिनत्रयं सैन्ययुगेऽपि सर्व-योधा-ऽऽयुधानां पुरतः प्रमोदात् ।
महोत्सवं भोजनिकां विधाय सच्चक्रतुस्तौ सुभटान्नरेन्द्रौ ॥३००॥

१ चञ्चुः-भाषायाम्-चांच । २ कवचितैः । ३ सेनाम् । ४ सैन्यं गरुडव्यूहे योजितम्-गुरुडाकारेण मथितम् । ५ द्विपो-हस्ती । ६ द्वयोः सैन्ययोः । ७ युगं द्वयम् ।

ते क्षत्रियाः श्रीजिनमर्चयित्वा ययाचिरे प्राञ्जलयः प्रणम्य ।
अत्र व्रतं क्षत्रमखण्डमस्तु परत्र भक्तिस्त्वयि वीतराग ! ॥३०१॥
( भार्या-भगिनी-जननीभिः कृतमाङ्गलिक्या भटाः— ) भार्याभिरेके भगिनीभिरेके वृद्धाभिरेके जननीभिरेके ।
वीराः प्रचेलुः कृतमाङ्गलिक्या हर्षप्रकर्षादति दुष्प्रधर्षात् ॥३०२॥
( युद्धसमारम्भः— ) षष्ठ्यां तिथौ मङ्गलवासरेऽथ रणार्थवाद्येषु घनं रणत्सु ।
त्रुटत्सु लोहेष्वपि कण्टकेषु नत्वा नृपं तेऽभिरिपु प्रचेलुः ॥३०३॥
रथी रथेशं हयिनं हयेशः पत्तिः पदातिं सगजं गजस्थः ।
धन्वी धनुष्मन्तमथो जगाम स्पर्धाप्रवृद्धे प्रबलेऽत्र युद्धे ॥३०४॥
इत्थं रणेऽस्मिन् रिपुमल्लयोधैः क्रोधोद्धतैर्वैरिगणोऽगणोऽपि ।
व्यावर्तितः शैवलिनीजलौघो वृद्धोपि वार्धेरिव दुस्तरङ्गैः ॥३०५॥
सैन्यं सदैन्यं स निजं निरीक्ष्य महेन्द्रराजोऽभिरिपूनियाय ।
मत्वा तमभ्युत्थितमत्र कालवक्त्रस्तमागाद् रिपुमल्लपुत्रः॥३०६॥
शरैः शरान् दक्षतया क्षिपन्तौ खड्गेन खड्गं परिखण्डयन्तौ ।
परस्परं युद्धमरं चिरं तौ प्रचक्रतुर्विश्वमनो हरन्तौ ॥३०७॥
( हतो महेन्द्रराजः— ) स मल्लवत्फुल्लभुजोऽतिधैर्याद् महेन्द्रराजं च रणे गृहीत्वा ।
कूष्माण्डवन्निष्ठुरभूमिपीठे प्रास्फोटयत्कालमुखोऽतिकालः ॥३०८॥

१ रथारोही । २ अश्वारोहिणम् । ३ गजारोहिणम् । ४ धनुर्धरः । ५ गणनं गणः—संख्या—असंख्यः—अगणः । ६ इयाय । ७ कूष्माण्डम्—कोळुं ।

महेन्द्रराजं निहतं निशम्य स पद्मभूपोऽथ मुमोच बाणम् ।
काण्डेन विद्धः किल तेन कालोऽकाण्डेऽपि जातः सकलोऽपि नीलः ॥३०९॥

(कालो गतः कालमुखः—) विषेण विद्धं तमवेक्ष्य कालमुखं गतं कालमुखं जवेन ।
क्रुद्धो दधावे मणिचूलवीरः शस्त्रैस्तथाऽस्त्रैः सहितोऽहितं तम् ॥३१०॥

स पद्मभूपोऽथ मुमोच बाणं तमोभृतं विश्वमतो बभूव ।
शरं स वीरस्तु विमुच्य भानु-शतैररेः सैन्यमतापयच्च ॥३११॥

(पद्मराजो हतः—) मुक्त्वा शरं पद्मनृपो हिमैर्न प्रकम्पयामास तनूं रिपूणाम् ।
वीरस्तदैवाऽग्निशरेण भस्मीचकार पद्मं सविकारचित्तम् ॥३१२॥

निहत्य पद्मं मणिचूलवीरश्चचाल यावद् विकरालमूर्तिः ।
रत्नध्वजेनाऽऽशु शरेण तावत् त्रिंशद्गजेन्द्रैः सहितो हतोऽयम् ॥३१३॥

(हतो मणिचूलवीरः—) चन्द्रावतंसो मणिचूलवीरं हतं विलोक्याऽनवलोक्यरूपः ।
रत्नध्वजं तत्र महाभुजं तं योधः स्फुरत्क्रोधयुतो रुरोध ॥३१४॥

चन्द्रावतंसोऽथ शरद्वयेन चिच्छेद कर्णौ युगपत् तदीयौ ।
उवाच रत्नध्वजमेष गच्छ जीव स्वकीर्त्यै हि मयाऽसि मुक्तः ॥३१५॥

सटोपकोपः स्फुरदेटकेन खड्गेन युक्तः स हयं विमुच्य ।
यावद् दधावेऽथ तदाऽसिमस्य चन्द्रावतंसः शकलीचकार ॥३१६॥

---

१ अनामयेऽपि । २ नीलः-रक्तरहितः-मृतः । ३ कालमुखं मरणम् । ४ अहितः शत्रुः । ५ किरणशतैः । एतत् शरं तापकरम् । ६ एतद् अर्ध हिमकरम् । ७ एतत् शरं दाहकम्-मूयन्ते हि महाभारते अग्न्यस्त्रादीनि शस्त्राणि । ८ दुर्धृष्यत्वेन न द्रष्टुं शक्यं रूपं यस्य । ९ खण्डं चकार ।

रत्नध्वजोऽसौ तरवारिहीन-हस्तोऽप्युपान्ते समुपेत्य तस्य ।
चन्द्रावतंसं गगनेऽतिदूरं चिक्षेप साक्षेपभुजो जवेन ॥३१७॥

रत्नध्वजभ्रातृभिरुत्क्षिप्यतः क्षणं पुष्पवतः स तु लेखितः खे ।
आविष्टचित्तो मणिचूलपुत्रोऽधाविष्ट तं शत्रुमथो निहन्तुम् ॥३१८॥

(निहतो रत्नध्वजः—) रत्नध्वजं तं च निहत्य शक्त्या सोऽघातयत् तत्सहजान् स्ववीरैः ।
रणं जगाहे रिपुमल्लपुत्रैर्वज्रायुधस्तैः सुभटैर्युतोऽयम् ॥३१९॥

ततः सुतं स्वाङ्गजपक्षशस्त्या युतं हतं धूमनृपो निशम्य ।
सुरेन्द्रदत्तादिनरेन्द्रयुक्तश्चचाल कालप्रतिमो रिपूणाम् ॥३२०॥ ततश्च—

चलत चलत सर्वे सत्वरं भो नरेन्द्राः ! टलत टलत मा मा भो भटाः ! शुद्धवंशाः ! ।
हत हतमरिवृन्दं सर्वमेवाऽधुनेति प्रवदति चलितेऽस्मिन् चुक्षुभे शत्रुपक्षः ॥३२१॥

गजै रथास्तैस्तुरगा अमीभिः पदातयो व्याकुलिता निपेतुः ।
अतश्च धूमध्वजपार्श्ववर्ति-वीरैः शरान्धं तमसं वितेने ॥३२२॥

प्रभज्यमानं रिपुभिः स्वसैन्यं सर्वं विलोक्याऽमरशेखरोऽसौ ।
उत्तालफालप्रवणाश्वसंस्थश्चचाल सुश्लाघ्यभटान् समभ्रान् ॥३२३॥

अनेकवीरैः सहितं तमेक-चित्तं विलोक्याऽमरशेखरं ते ।
तस्थुर्न युध्ये रिपवो मनस्वे श्रीपतिराजे हि यथा तमांसि ॥३२४॥

१ वाचि: । २ भावायाम्—न टलो न टलो ।

धूमध्वजोऽथामरशेखरं तं गजस्थितो वीक्ष्य तुरंगमस्थम् ।
स्वयं स शिश्राय हयं यतोऽत्र क्षत्रव्रतान्नैव चलन्ति धीराः ॥३२५॥

भटेषु तत्राऽमरशेखरस्य पुरोऽप्यऽतिष्ठत्सु स धूमकेतुः ।
संसंगरः संगरहेतवेऽगाच्च स्थातुमिष्टे हि तदा बलिष्ठः ॥३२६॥

अस्त्राणि शस्त्राणि समागतानि स्वहेलया तावदहेलयन्तौ ।
न प्रापतुः पारमरं सतृष्णावभव्य-भव्याविव संभवस्य ॥३२७॥

(ममज्ज भूम्याम् अमरशेखरः—) उद्विग्नचित्तोऽथ स धूमकेतुर्मुक्त्वा हयं तं गदया जघान ।
तुरंगयुक्तोऽमरशेखरस्तद् ममज्ज भूम्यामिह जानुमानः ॥३२८॥

ततोऽनुभूय क्षणमेव मूर्छां पादौ समाकृष्य पुनः सचित्तः ।
तदा गदामात्मकरे गृहीत्वाऽवचूर्णयामास शिरांसि शत्रोः ॥३२९॥

यावन्ति खण्डानि कुमारराजश्चकार शत्रोः शिरसां रयेण ।
तावन्ति वर्षन्ति शरावलीभिर्जातानि रूपाणि तु धूमकेतोः ॥३३०॥

तदा कुमारोऽपि वसन्तसेनस्तूणं गृहीत्वा धरणेन्द्रदत्तम् ।
शत्रोः शरीराणि शरैर्विनीलैर्विव्याध स व्याधवदेणवृन्दम् ॥३३१॥

अत्रान्तरे दूरगतः सुरेन्द्र-दत्तस्त्वजानंस्तनयं स्वकीयम् ।

१ संगरसहितः । २ युद्धहेतवे । ३ संसारस्य । ४ हरिणवृन्दम् ।

धूमध्वजे प्रीतियुतोऽष्टषष्टि-बाणैर्जघानाऽमरशेखरं तम् ॥३३२॥
(स एव च मुमूर्छ—) अचिन्तिताऽऽयातशरप्रहारैर्मुमूर्छ तत्रामरशेखरोऽथ ।
कुमारमुक्तैर्धरणेन्द्रबाणैर्धूमध्वजश्चैकतनुर्ममार ॥३३३॥
संमूर्छितं वीक्ष्य निजं वयस्यं वसन्तसेनः परमेष्ठिमन्त्रम् ।
स्मृत्वाऽष्टषष्टिप्रसृतिप्रमाण-नीरेण तत्राऽभिषिषेच शीघ्रम् ॥३३४॥
(गतमूर्छः—प्रसन्नोऽमरशेखरः—) तेनाऽभिषेकेण कुमारदेहात्-शल्यानि निश्चक्रमुरक्रमेण ।
ततः प्रसन्नोऽमरशेखरोऽयं क्षेत्रं निरीक्ष्येति दयार्द्रमूचे ॥३३५॥
हाहारितकं तारतरोग्ररावं हुंहुं हया हुंकृतिकण्ठकण्ठाः ।
हाहाहहा वीरवरा वरे(ही)ही नाथहीना विलपन्ति वध्वः ॥३३६॥
है है रणोऽयं सकलोऽपि निन्द्यो धिग् धिग् यतो जीवगणो हतोऽत्र ।
अहो महाद्वेषविशेष एष नरस्तु गच्छेन्नरकं हि येन ॥३३७॥ यतः—

जं न लहइ संमत्तं लद्धूण वि (०)
नवि तं कुणइ अमित्तो ।
सुट्ठु वि सुविराहिउ समत्थो वि (०)
तो बहुगुणनासाणं (०)" ॥

यन्न लभते सम्यक्त्वं लब्ध्वाऽपि
नाऽपि तत् करोति अमित्रः ।
सुष्ठु अपि सुविराधयितुम् (?) समर्थोऽपि
ततो बहुगुणनाशानाम् ॥

---

१ प्रसृतिः-भाषायां पसली-खोबो । २ युगपत् शीघ्रम् । ३ रणे जायमानानां शब्दानां सूचनम् ।

अमन्तमेनोऽथ जगाद देव ! वाक्यैः सशोकैर्जनमानसानि।
भिनत्सि, किंचित् तव काऽपि शक्तिः समस्ति तज्जीवय सर्वमेतत् ॥३३८॥

माद्रेयमुक्त्वाऽन्यतुरंगमं स्वं पीतेन बाणेन घनं जघान।
नीत्वा निषङ्गं सह पीतबाणं सजीवमेतं नृपसूः रुरोह ॥३३९॥

(धूमध्वज-पद्मवर्जं सर्वेऽपि मृता जीविताः—) सुवर्णवर्णैरमृताख्यबाणैः प्रविध्य हस्त्य-श्व-पदातिसैन्यम्।
तज्जीवयामास दयार्द्रचित्तः क्षेत्रेऽत्र धूमध्वज-पद्मवर्जम् ॥३४०॥

धूमध्वजाङ्गे सितबाणविद्धे न पीतबाणा विदधुः प्रवेशम्।
स पद्मदेहस्य तु भस्मपुञ्जः कणं कणेनैव गतोऽग्रतोऽपि ॥३४१॥

(तेषयुग्मजीविताय धरणेन्द्राराधना कृता अमरशेखरेण—) आश्चर्ययुक्ते स्तुवति प्रकामं नरेन्द्रवर्गेऽमरशेखरोऽथ।
आराधयामास धरे(रणे)न्द्रदेवं कृत्वोपवासत्रयमेकचित्तः ॥३४२॥

(आगतो धरणेन्द्रः—) अथाऽम्बरे तं धरणेन्द्रदेवं विलोक्य भूमीशसुतो बभाषे।
कृत्वा प्रसादं सुरराज ! धूमध्वजं तथोज्जीवय पद्मभूपम् ॥३४३॥

जगाद देवो ननु विस्मृतं किं मया तदाऽवादि तवाऽग्रतोऽपि।
यद् भस्मरूपं मम बाणविद्धं विमुच्य जीविष्यति सर्व एष ॥३४४॥

तवोपवासादिकसत्त्वतोऽहं तथाऽपि हृष्टोऽस्मि कुमार ! गाढम्।

---

१ जीवा गुणः-डोरी-भाषायाम्। २ नृपपुत्रः।

धर्मेऽप्रकम्पोऽङ्गिषु सानुकम्पो यः स्यात् स धन्यो हि नरो धरायाम् ॥३४५॥

(धूमध्वज-पद्मयोः उत्तरकृत्यम्—) एवं गदित्वा धरणेन्द्रदेवे स्वस्थानयातेऽमरशेखरोऽयम् ।
ततस्तयोरुत्तरकृत्यकृत्यं प्रकारयामास विधेर्निदेशः ॥३४६॥

(सुरेन्द्रदत्तस्य स्वपुत्रेण समागमः—) स्फुरत्प्रभावं सविवेकभावं निशम्य धूमध्वजशत्रुमेनम् ।
आश्चर्यतोऽभ्येत्य सुरेन्द्रदत्तो यावच्च तावत् स्वसुतं ददर्श ॥३४७॥

सुरेन्द्रदत्तोऽपि सुतं समीक्ष्य विषादतः साश्रु जगाद पाणिमे ।
पूर्वं त्वया यः परिलालितोऽसौ सुतो हतो हन्त हताश ! हस्त ! ॥३४८॥

(सुरेन्द्रदत्तस्य मूर्छा—) यावत् कुमारो जनकं निरीक्ष्य सोत्कण्ठमुत्तिष्ठति तत्प्रणत्यै ।
सुरेन्द्रदत्तो नृपतिः स तावत् लुलोठ भूपीठमकुण्ठमूर्छः ॥३४९॥

कथं कथं मूर्छति मे पिताऽयमित्युच्चवाचं नृपजं निरीक्ष्य ।
हृष्टः सुरेन्द्रं रिपुमल्लभूपोऽप्यचीकरत् सज्जमथोपचारैः ॥३५०॥

शीतोपचारात् सुतदेहसंगान्निजापराधस्मरणात् सुरेन्द्रम् ।
यथाक्रमं स्वल्पगतोग्रमूर्छं दृष्ट्वा जनोऽस्थात् सकलः सदुःखः ॥३५१॥

मोहप्ररोहः कथमस्य राज्ञो निवार्यतां चेति ( चैत ? ) मथो भिगत्य ।
चिन्ताश्रिताश्चेतसि यावदस्थुस्तावन्नृपाः खे ददृशुर्मुनीन्द्रम् ॥३५२॥

---

१ विधिनिदेशः—विधिवद् अनुज्ञाता । २ अमरशेखरम् । ३. हस्तम् ।

(श्रीकीर्तिचन्द्रः साधुः—) ऊर्ध्वं नरेन्द्रेषु विलोकयत्सु रत्नध्वजोऽप्युत्सुकवाचमूचे।
अहो मदीयोऽत्र पितृव्य एष श्रीकीर्तिचन्द्रः समुपैति भाग्यात् ॥३५३॥

संयोजय हस्तौ बहुहर्षतोऽथ सर्वेषु भूपेषु समुत्थितेषु।
यतिश्चतुर्ज्ञानधरो धरायामवातरत् तत्र तपःपवित्रः ॥३५४॥

क्षणात् कृते विस्तृतमण्डपेऽत्र सिंहासनेऽसौ निषसाद साधुः।
अथो यथोक्तेन गुरुक्रमेण नेमुर्नरेन्द्रा मुनिराजमेनम् ॥३५५॥

इतः कुमारो जनकं स्वकीयं सुरेन्द्रदत्तं नृपमाह हर्षात्।
तात! त्वमुत्थाय जवेन साधु-पादाम्बुजे किं न नमस्करोषि ॥३५६॥

इदं वचस्तस्य सुधासधर्म श्रुत्वा सधर्मः स सुरेन्द्रदत्तः।
हित्वा रयाद् दुःखविषं मुनीन्द्रं नत्वा नरेशः समुपाविवेश ॥३५७॥

एवं समग्रेऽपि नरेन्द्रवर्गे साम्यप्रविष्टे पुरतो निविष्टे।
मृत्वोत्थिताः किं वयमत्र यूयं वेत्थं प्रवीरेषु मिथो वदत्सु ॥३५८॥

(कीर्तिचन्द्रदत्ता देशना—) वैराग्यधौतेषु सभा-जनस्य साधुस्तदा मानस-भाजनेषु।
परात्मनः पुष्टिकृतेऽथ ताप-शान्त्यै न्यधाच्छीतलगोरसं सः ॥३५९॥ तथाहि—

आयुः सदा वायुचलं नराणां वातोद्धताम्भोजवदङ्गमङ्ग!।

१ सुधासदृशम्। २ धर्मसहितः। ३ समतां प्राप्ते। ४ वाणीरसोऽपि गोरसः।

पद्मस्थिताम्भःकणवत्त्वनित्या रामाभिषङ्गाश्चरमाः प्रसङ्गाः ॥३६०॥
दुष्प्राप्यमानुष्यतरीमवाप्य रजोभरैर्मूढजनस्तु दक्षः।
सद्धर्मरत्नैर्भरतीह येभ्यो भङ्गेऽपि तस्यां लभते महद्धिः ॥३६१॥
ऊर्ध्वं गते पुंसि रजःसमूहो यथाम्बुपूरात् प्रलयं प्रयाति ।
अनेहसा सा (सं) ह्रियते तथाशु स्थितेऽपि जीवे कणशः शरीरम् ॥३६२॥
विश्वं विचार्यं त्वनिवार्यनाशं भोः । पापकार्यं न ततोऽत्र कार्यम् ।
कृत्यं पुनर्निर्मलपुण्यकृत्यं यशो यतः स्याच्च वशोऽपि मोक्षः ॥३६३॥
धिग् धिग् भवं यत्र हि मान-लोभ-व्यामोहतो निर्मलबुद्धिलुप्तैः ।
सुतेन तातो जनकेन पुत्रः प्रहण्यतेऽन्योऽन्यविवेकनाशात् ॥३६४॥ अन्यच्च—
अधर्मराद् क्रोध-मदाश्वयुक्ते स्थितो जवाद् मोहरथेऽत्र यस्य ।
विशेत् पुरे तद्रजसां भरेण सोऽन्धो हि पश्येन्न गुरून् देवान् ॥३६५॥
तस्माद् महापापमयं विहाय संसारवासं ननु भव्यजीवाः ।।
श्रीजैनधर्मे सततं यतध्वं यतः स्फुरत्केवलमङ्गलं स्यात् ॥३६६॥
एवं मुनिर्ज्ञानघनः पवित्र-वाक्यामृतैर्भव्यमनःसरांसि ।
भृत्वा स यावद् विरराम तावदूचेऽथ तैरतल्लहरीव वाणी ॥३६७॥

१ गमा-धी । २ तरीः-नौः। ३ रत्नभूतायास्तस्यां भङ्गेऽपि महार्द्धिर्लभ्यते । ४ अवश्यं नाशो यस्य सर्वं । ५ शरीरे नगरे वा । ६ मोहरथरजसाम् ।

मार्गोऽस्माऽयोगतिसंगतं यद् विधातुकामा वयमत्र सर्वाः ।
योग्यप्रदीनेन निवर्तितास्तद् विभो महत्त्वो हि भवेद् महत्त्वम् ॥३६८॥

युक्तं प्रभो ! जीवनिकायकाय—व्यपायतो दुष्कृतपङ्कमग्नान् ।
समुद्धर त्वं चरणमहीणान् परोपकाराय सतां हि शक्तिः ॥३६९॥

मभाविमुक्त्वेति सभाजनेऽस्मिन् मौनं श्रिते साधुरसौ बभाषे ।
याचध्वमेवात्मसमाधिना भोः श्रीजैनधर्मं विविधिप्रकारम् ॥३७०॥

( सुरेन्द्रदत्तो दीक्षितः— ) मुञ्चन्नथाऽश्रूणि सुरेन्द्रदत्तो जगाद नत्वा मुनिपादपद्मे ।
दीक्षाप्रदानेन सुतप्रहारमदं विशुद्धं कुरु मां यतीन्द्र ! ॥३७१॥

असारसंसारभवोग्रपाप-विपाकवैरूप्यमिति प्रणिन्य ।
श्रीजैनदीक्षां विनयावनम्रो जग्राह कुग्राहविमुक्तचित्तः ॥३७२॥

( धूमध्वजप्रियः प्रव्रजिताः— ) इतश्च—धूमध्वजराजदारा वैराग्यतः पञ्चशतीमितास्ते ।
वैधव्यवैधुर्यभरप्रणुन्ना विमुच्य गेहं जगृहुर्व्रतानि ॥३७३॥

वसन्तसेनेन युतः कुमारः सिपेविपुः स्वस्य पितुः पदाब्जे ।
व्रतं ययाचे व्रतिनं प्रणम्य पुत्रा न कष्टं गणयन्ति भक्ताः ॥३७४॥

( अमरशेखरः प्रेरितः कीर्तिचन्द्रेण आचाम्लचन्द्राचरणे तपसि, दत्त च तद्विधियुतं पुस्तकम्— )

१ अहः पापम् । २ व्यपायो नाशः । ३ भावसहितम् । ४ माम् । ५ सेवितुमिच्छुः ।

साधुर्भवेऽमरशेखरं तं त्वद्योगकर्मास्त्यति भो ! गरीयः।
यदा भवेऽस्मिंश्च भवेद्विरक्तः आचाम्लचन्द्रं तु तदाऽऽचरेस्त्वम् ॥३७५॥
'आदिश्यतां तस्य विधिस्ततो मे' प्रोक्तेऽमुना साधुरवग् विचार्य।
आचाम्लचन्द्राचरणेन युक्तामेनां गृहाणाद्य सुपुस्तिकां तत् ॥३७६॥
तां पुस्तिकां सोऽमरशेखरस्य समर्प्य पाणौ मुनिकीर्तिचन्द्रः।
जगाद भोस्तावदिमां मदीयां शिक्षां समाकर्णय सावधानः ॥३७७॥ तथाहि—
( कीर्तिचन्द्रदत्ता शिक्षा— ) भक्तिं जिनेन्द्रे सुदृढां दधीथाः सदा दयां जन्तुषु संदधीथाः।
दीनेषु दानं दमवान् ददीथाः सद्ग्रन्थो महद्ग्रधो मतिमाददीथाः ॥३७८॥
किं बहुना— ? यथा प्रसीदन्ति सुराः समग्राः यथा विषीदन्ति न बन्धुवर्गाः।
यथा न सीदन्ति गुरूपदेशा यथा निषीदन्ति तनौ गुणौघाः ॥३७९॥
यथा च न म्लायति कीर्तिवल्ली वृद्धो यथा ग्लायति नैष धर्मः।
राज्यं प्रकुर्वन्नपि खर्वगर्वस्तथाऽऽयतेथाः सततं कुमार ! ॥३८०॥
ततश्च— ( रिपुमल्लराजादीन् श्रावकान् कृत्वा जगाम कीर्तिचन्द्रः— ) मुनौ समौने रिपुमल्लराजश्चन्द्रावतंसो मणिचूलवीरः।
रत्नध्वजः कालमुखस्तथाऽन्ये ययाचिरे वीरवराः सुधर्मम् ॥३८१॥
( नगरी जयन्ती— ) गार्हस्थ्यधर्मं स निधाय तेषु साधुर्जगामाथ ततोऽन्यदेशे।

१ त्वं भवे। २ उवाच। ३ खर्वम्–अल्पम्।

विद्याधरेन्द्रास्तु मिथः स्ववैरं विमुच्य जग्मुर्नगरीं जयन्तीम् ॥३८२॥
विद्याधराणां समरोहतानां स्यात् प्राणविश्राणनतोऽधिपोऽयम् ।
इत्थं मिथः प्रोच्य नृपाः समग्र-विद्याधरेशं विदधुः कुमारम् ॥३८३॥
( विद्याधरपतित्वेऽभिषिक्तः—अमरशेखरो लक्ष्मीपुरं प्रयाति— ) विद्याधरेन्द्रा रिपुमल्लमुख्या रत्नध्वजाद्यास्तु सुभक्तचित्ताः ।
चक्रुर्नमोऽस्मै हि परोपकारः समृद्धिदश्चात्र परत्र लोके ॥३८४॥
वैताढ्यशैले सकले तदैव श्रेणिद्वयस्याऽपि पुरेषु वेगात् ।
आज्ञाऽथ राज्ञोऽमरशेखरस्य प्रघोषयामासुरिति क्षितीशाः ॥३८५॥
स राजराजोऽमरशेखरोऽथ दिदेश तान् श्रीरिपुमल्लमुख्यान् ।
रत्नध्वजं श्रीनृपधूमकेतोः पट्टेऽभिषिञ्चन्तु नरेश्वरा भोः ! ॥३८६॥
प्रमाणमादेश इतीरयित्वा रत्नध्वजस्याऽथ महोत्सवान्ते ।
राज्याभिषेकं विदधुर्हि सन्तः कुर्वन्ति शत्रौ विनते हितानि ॥३८७॥
स्मितोज्ज्वलां सोऽमरशेखरोऽथ स्नेहप्लुतां वाचमुवाच वाग्मी ।
लक्ष्मीपुरं प्रत्यधुना प्रयाणं ममानुमन्यध्वमतो नरेन्द्राः ! ॥३८८॥
ततश्च— प्रयाणढक्कास्वथ वादितासु माङ्गल्यतौर्येषु घनं नदत्सु ।
विमानरूढेषु च खेचरेषु गायत्सु तारं वरकिन्नरेषु ॥३८९॥

१ समरे-युद्धे-आहतानाम् । २ विश्राणनं-दानम् । ३ अमरशेखरः । ४ नम्रे । ५ वक्ता ।

लीलावती सा सुवधूविंधूत-मदा मुदा तत्र तदा ननाम ॥४०४॥

पुत्रस्य नम्रस्य वधूयुतस्य तुष्टान्तराऽऽशीर्वचनं प्रदाय।

सा चन्द्रलेखा गुरु राजगेहं ददौ तदौन्नत्यकृते स्नुषायै[1] ॥४०५॥

सखेचरैः भूमिचरैः समग्रैर्नतांह्रिपद्मः सुकृतैकसद्म।

चकार राज्यं सुचिरं सुनीतिप्राज्यं नरेन्द्रोऽमरशेखरोऽथ ॥४०६॥

अथाऽन्यदा पुत्रमुखेन पत्युश्चरित्रमाकर्ण्य तपःपवित्रम्।

सा चन्द्रलेखा वरपुस्तिकां तां संपूजयामास सुगन्धपुष्पैः ॥४०७॥

(त्रिदशप्रभा गुरवः— ) राज्ञी ततः श्रीत्रिदशप्रभाख्यान् गुरून् प्रणन्तुं सहिता सखीभिः।

तां पुस्तिकामात्मकरे गृहीत्वा तपोविधिं ज्ञातुमना जगाम ॥४०८॥

(गुरुभिरमरशेखरजनन्यै चन्द्रलेखायै आचाम्लचन्द्रस्य विधिर्दर्शितः—) प्रणम्य तस्यां पुरतः स्थितायां तां पुस्तिकां ते गुरवो गृहीत्वा।

आचाम्लचन्द्रस्य विधिं समग्रां प्रवाचयांचक्रुरवक्रचित्ताः ॥४०९॥ तथाहि—

" प्रकामं कार्तिके मासि शुक्लायां प्रतिपत्तिथौ। आचामाम्लं तपः कुर्यात् स्मरस्मर[2]विवर्जितः ॥४१०॥

एवं चतुर्दशीं यावदाचामाम्लानि नित्यशः। उपवासं पूर्णिमास्यां कुर्यात् पूजां त्रिधा सदा ॥४११॥

दिनेष्वेवं तपः कुर्यात् कायोत्सर्गं तु रात्रिषु। चन्द्रोदयास्तमानं हि चन्द्रसन्मुखलोचनः ॥४१२॥

कायोत्सर्गं प्रतिनिशं वर्धमाने घटीद्वये। स्मरन् पञ्चनमस्कारं जिनं चन्द्रे निवेशयेत् ॥४१३॥

१ स्नुषा-पुत्रवधूः। २ स्मरस्य स्मरणं स्मरस्मरः।

द्वादशस्वपि पक्षेषु शुक्लेष्वेवं तपश्चरेत्। प्रतिपत्सु तु कृष्णासु विधिवत् पारणानि च ॥४१४॥
विधिश्चायम्— पारणे मुनये शुद्धमन्नं पात्रं विशुद्धिमत्। दत्त्वैकैकः यथाशक्त्या ततो भुञ्जीत भावनात्॥
आवश्यकं च पूजां च कृष्णपक्षेषु नित्यशः। कुर्वन् सरसमश्नीयात् यथेष्टं दुष्टतोज्झितः ॥४१६॥
अथाऽस्योद्यापनविधिः—श्रीवीतरागमूर्तीनां शतं सप्ततिसंयुतम्। विधाय विधिना रम्यं प्रतिष्ठाप्यं शुभे दिने
पुरस्तासां तु मूर्तीनां तत्संख्यैर्मोदकैर्भृतम्। स्थालं संढौकयेत्तत्संख्यानि तिलकानि च ॥४१८॥
उद्यापनविधिरेवमश्विनीपूर्णिमादिने। प्रतिपत्तिथौ च कृष्णे पारणं विधिना चरेत् ॥४१९॥
विधिश्चाय— श्रावकाः श्राविकाश्चैव जिनधर्मपरायणाः। भोजनीया महाभक्त्या सप्तविंशतिसंमिताः ॥
सप्ततिशतसंख्याश्च जैनसिद्धान्तपुस्तिकाः। गुरुभ्यो हि प्रदातव्या ज्ञानस्याऽवाप्तिहेतवे ॥४२१॥
इदमाचाम्लचन्द्राख्यमित्युद्यापनभूषितम्। यः कुर्यात् स भवेद् मुक्तस्तृतीयेऽत्र भवेऽथवा ॥४२२॥
एवमाचाम्लचन्द्रस्य विधिस्तीर्थंकरोदितः। उध्धृतः कीर्तिचन्द्रेण धर्मिणामुपकारकः" ॥४२३॥

। इत्याचाम्लचन्द्रतपोविधिः संपूर्णः ।

ते वाचयित्वेति सुपुस्तिकां तां संमीलयामासुरथाऽऽशु राज्ञी।
प्रोचे प्रभो! मेऽद्य कुरु प्रसादमाचाम्लचन्द्रस्य समर्पणेन ॥४२४॥
(चन्द्रलेखया आरब्धं तत् तपः—) विज्ञाय हर्षं त्रिद(दि)शप्रभाख्यैः सूरीश्वरैर्दिव्यसुगन्धचूर्णाः।
निचिक्षिरेऽस्याः शिरसि प्रहृष्टैराचाम्लचन्द्रस्य विधानहेतोः ॥४२५॥
सा चन्द्रलेखा स्वगुरून् प्रणम्य गत्वा निजं राजगृहं प्रमोदात्।

निवेश्य पुत्रामरशेखराग्रे क्रमात् तपस्तद्विधिवच्चकार ॥४२६॥
(अमरशेखरो जिनेन्द्रगृहाणि प्रारम्भयामास—) स्वां मातरं वीक्ष्य तपश्चरन्तीं भक्तो जनन्यां सुकृतैकवीरः।
प्रारम्भयामास नृपो जिनेन्द्र—गृहाणि सप्तत्यधिके शते सः ॥४२७॥
(वैशाखे प्रतिष्ठा, आश्विने च तपउद्यापनम्—) वैशाखमासे विधिना सुलग्ने ततः प्रतिष्ठाप्य जिनेन्द्रमूर्तीः।
उद्यापनं चाश्विनपूर्णिमास्यामढौकयत् तत्तपसि प्रपूर्णे ॥४२८॥
(कीर्तिचन्द्रगवेषणा—) तदा नरेन्द्रो मणिचूलवीरं पप्रच्छ किं क्वापि स कीर्तिचन्द्रः।
नमस्कृतोऽभूद् भवता मुनीन्द्रः प्रवृत्तिमेनां कथय द्रुतं मे ॥४२९॥
(चन्द्रप्रभायां पुरि कीर्तिचन्द्रः श्रीअभिनन्दनजिनपार्श्वे—) वीरोऽवदद् देव! मया नतोऽभूत् श्रीकीर्तिचन्द्रः स सुरेन्द्रदत्तः
चन्द्रप्रभायां पुरि संस्थितस्य जिनस्य पार्श्वे ह्यभिनन्दनस्य ॥४३०॥
श्रुत्वेति राजा वरपुस्तकानि विलेखितानि स्वयमेव नीत्वा।
विमानरूढः सहितो जनन्या चचाल विद्याधरनाथयुक्तः ॥४३१॥
((इमानि यतिभ्यः श्रुतपुस्तकानि—) चन्द्रप्रभां सोऽथ पुरीमुपेत्य नत्वा जिनं द्रागभिनन्दनाख्यम्।
सुभक्तचित्तो विनयावनम्रो ददौ यतिभ्यः श्रुतपुस्तकानि ॥४३२॥
पुत्रं निजं देव-नरेन्द्रवृन्दैः संस्तूयमानं पुरतो निरीक्ष्य।
सा चन्द्रलेखा जिनमिनमक्षि-युगेन पीत्वा नितरां निदध्यौ ॥४३३॥
तथाहि— नमस्कृतः श्रीअभिनन्दनो यद् दत्तो यतिभ्योऽत्र च पुस्तकौघः।

उद्यापनं यद् रुचिरं प्रपूर्णं फलं तपःकल्पतरोस्तदेतत् ॥४३४॥
( चन्द्रलेखा केवलज्ञानं प्राप— ) इत्यद्भुतं निर्मलधर्मभावाद् महासती ध्वस्तसमस्तपापा ।
आलोकलोकप्रविलोकदीप्र-दीपप्रभं प्राप महो महोच्चम् ॥४३५॥
ततो गतो केवलिसंसदोऽन्तर्विलोक्य राजा जननीं स्वकीयाम् ।
तीर्थंकरं श्रीअभिनन्दनाख्यं पप्रच्छ माता किमिह स्थितेति ? ॥४३६॥
ततश्च— ( अमरशेखरो विरक्तः— ) जिनस्य वाक्यादभिनन्दनस्य तां केवलज्ञानयुतामवेत्य ।
स राजराजोऽमरशेखरोऽथ भवे विरक्तः सचिवानुवाच ॥४३७॥
हंहो ! अमात्या ! मम राज्यमेतत् सोमस्य पुत्रस्य समर्पणीयम् ।
अन्यस्य वा न्यायवतोऽपि कस्य, नेष्यामि यस्मादथ जैनदीक्षाम् ॥४३८॥
( कीर्तिचन्द्रेण दीक्षितः— ) आदेशतः श्रीअभिनन्दनस्य श्रीकीर्तिचन्द्रोऽथ गणाधिनाथः ।
वसन्तसेनेन युतं तदैव तं दीक्षयामास नराधिराजम् ॥४३९॥
राजर्षिरेषोऽच्युतधर्म एव विगाह्य सिद्धान्तपयोधिमध्यम् ।
आचाम्लचन्द्रं व्रतरत्नमुच्चैश्चकार मोक्षश्रियि संगमेच्छुः ॥४४०
( वसन्तसेनोऽपि श्रमणः— ) आचाम्लचन्द्रं चरतस्ततोऽस्य वसन्तसेनो विदधेऽथ सेवाम् ।
यतोऽन्तरङ्गं विनयाख्यमेव व्रतं हि सिद्धान्तविदो वदन्ति ॥४४१॥
( अमरशेखरध्यानम्— ) साधुस्ततोऽसौ निशि पूर्णिमायाम् ध्यायन् शशाङ्के जिनमूर्ध्वनेत्रः ।

१ केवलज्ञानम् । २ सप्तम्यन्तमेतत् ।

तस्थावतिस्वच्छमनाः स्वकायो-त्सर्गेण मायोज्झित एव रात्रौ ॥४४२॥
इतश्च— (अमरशेखरं नन्तुमाजगाम चन्द्रदेवः—) चन्द्रावतंसाख्यविमानसंस्थश्चन्द्राभिधानो ग्रहमण्डलेन्द्रः[1] ।
निजावधिज्ञानमथो पृथिव्यां प्रयोजयामास तदैव रात्रौ ॥४४३॥
स चन्द्रदेवोऽमरशेखराख्यं ध्यानस्थितं राजमुनिं निरीक्ष्य ।
विहाय वेगेन निजं विमान-मेनं नमस्कर्तुमिहाऽऽजगाम ॥४४४॥
जाते प्रभातेऽथ महामुनीन्द्रो ध्यानं स संपूर्य चचाल यावत् ।
चन्द्राख्यदेवो मुनिमेनमेनः[2]-प्रणाशहेतोः प्रणनाम तावत् ॥४४५॥
नत्वा स चन्द्रो मुनिराजमूचे प्रभो ! कृतार्थोऽस्मि तवाऽद्य दृष्ट्या ।
ततः प्रसादं कुरु मे निजेन केनाऽपि धर्मेण सुवाचिकेन ॥४४६॥
ऊचे मुनीन्द्रोऽमरशेखरोऽथ कार्येण केनाऽपि मया न दृष्टिः ।
क्षिप्ता सुरेन्द्र ! त्वयि किंतु कायो-त्सर्गे विधिर्मेष जिनोपदिष्टः ॥४४७॥
तथापि— जिनेश्वरं श्रीअभिनन्दनाख्यं नमस्कुरु स्वं कुरु भोः ! कृतार्थम् ।
एवं गदित्वा चलिते मुनीन्द्रे स चन्द्रदेवोऽप्यचलत् सहैव ॥४४८॥
तं वीतरागं स मुनिः प्रणम्य पप्रच्छ चन्द्रेऽत्र तदा निविष्टे ।
भवत्प्रसादेन विभो ! ममाद्य पभूव पूर्णं व्रतरत्नमेतत् ॥४४९॥

---

१ मङ्गलादिग्रहाः । २ एनः-पापम्

(अभिनन्दनं प्रति अमरशेखरस्य प्रश्नः—) ममायुरद्यापि कियत् समस्ति भव्योऽस्म्यऽभव्योऽप्यथ दूरभव्यः
निगद्यतामद्य मयि प्रसद्य सद्यश्च संदेहगणं विभिन्द्धि ॥४५०॥

(जिनस्य उत्तरम्—) जिनोऽवदत् भो ! दिवसान् दशैवा-ऽवशिष्यते ते खलु जीवितव्यम् ।
भवे द्वितीये भरतस्य मध्ये शत्रुञ्जयाद्रौ भवितैव मोक्षः ॥४५१॥

(अमरशेखरेण गृहीतमनशनम्—) इत्थं निशम्याऽमरशेखरोऽयं जिनेन्द्रपादौ प्रणयात् प्रणम्य ।
जग्राह तत्राऽनशनं[1] मुनीशोऽनीशो भवे स्थातुमघौघघोरे ॥४५२॥

विनश्वरं विश्वमथो निरीक्ष्य विलोक्य मित्रं च तथा स्वभावम् ।
वसन्तसेनोऽपि जिनं प्रणम्य संन्यासविन्यासमसौ ययाचे ॥४५३॥

स्वामी बभाषेऽथ वसन्तसेनं महामुने ! द्वादश वत्सराणि ।
व्रतं प्रपाल्य प्रथमे च कल्पे गन्तासि तद् माऽनशनं ग्रहीस्त्वम् ॥४५४॥

(श्रीअभिनन्दनजिनानुमत्या चन्द्रविमाने चन्द्रेण सह आरुह्य अमरशेखर-वसन्तसेनौ श्रमणौ तीर्थानि वन्दितुं जग्मतुः—)

प्रभुं प्रणम्याऽथ स चन्द्रदेवो व्यजिज्ञपन्नाथ ! मुनी इमौ तत् ।
प्रस्थाप्यतां शाश्वततीर्थनाथमूर्तीः प्रणन्तुं हि मया सहाऽद्य ॥४५५॥

चन्द्रोऽथ लब्ध्वाऽनुमतं जिनस्य विकृत्य शीघ्रं रुचिरं विमानम् ।
वसन्तसेना-ऽमरशेखराख्यौ विगृह्य स व्योम्नि ययौ जवेन ॥४५६॥

---

1 'अनशनम्' इति प्रकरणतो गम्यते ।

( ज्योतिष्क-चन्द्र-लोकगतजिनबिम्बवन्दनम्— ) ज्योतिष्कलोके निखिलेऽपि नित्य—मूर्तीर्नमस्कार्य मुनीश्वरौ तौ ।
ततो विमाने स तु शाश्वते स्वे प्रवेशयामास शशाङ्कदेवः ॥४५७॥
निजे विमानेऽथ जिनेन्द्रमूर्तीः संवन्दयामास सुरो मुनीशौ ।
सिंहासने स्वे विनिविश्य चैतौ नत्वा पुरस्ताद् निपसाद हर्षात् ॥४५८॥
पुरो निविष्टेऽथ सुरोत्तमेऽस्मिन् वाचंयमेन्द्रोऽमरशेखरोऽयम् ।
ददौ तदौचित्ययुतं नितान्तं धर्मोपदेशं शुभभाववृद्ध्यै ॥४५९॥
तथाहि— ( मुनिभ्यां मत आभारः सुरराजस्य — ) साहाय्यतस्ते सुरराज ! जैन-तीर्थानि नित्यानि नमस्कृतानि ।
ततोऽस्मदीये हृदये समाधिर्बभूव पुण्यैकनिधिर्भवांश्च ॥४६०॥
यतः— सहाय्याद् यस्य सर्वो गुरुजनक-जनन्यादिवर्गोऽतिपूज्यो ।
नत्वा तीर्थानि हर्षादुरुसुकृतसुधास्वादतृप्तान्तरात्मा ।
प्रक्षीणानन्तपापः सविधशिवसुखो जायते विष्टपेऽस्मिन् ।
धन्योऽसौ पुण्यभागं बहुमिह लभते सर्वसंघस्य तस्य ॥४६१॥
तथाच— अनया यात्रया जातः-संन्यासो निर्मलो मम ।
देहकष्टं यतः शुद्ध-भावतः स्यात् फलेग्रहि ॥४६२॥
अन्यच्च— ( श्रमणयोश्चन्द्रेण सह संलापः— ) तथा कथय भो ! देव ! विमानं ते महाप्रभम् ।
उदिते च दिनाधीशे दृश्यते निष्प्रभं कथम् ? ॥४६३॥
जगाद देवो मुनिचक्रवर्तिन् ! स्यान्निष्प्रभं मे न विमानमेतत् ।

तेजोऽस्य शीतं रवितीव्रभासा विहन्यते हि प्रशमः क्रुधेव ॥४६४॥
यौष्माकमूर्ध्नि स्थितमेतदस्ति छत्रं मदीयं सितशीतकान्ति।
अस्य प्रभा सूर्यरुचाऽपि नैव प्रहन्यते साधुहृदि क्षमेव ॥४६५॥
छत्रं तदेतच्च ममाऽभियोगिदेवा भवन्मूर्ध्नि विभो ! धरन्तु ।
सर्वेषु वस्तुष्वपि निस्पृहाणां युष्माकमेषा मम भक्तिरस्तु ॥४६६॥
ऊचे मुनिर्देव ! मुनीश्वराणां सितातपत्रेण भवेन्न कार्यम् ।
वाण्याऽनया त्वं गुरुभक्तिभाजा पुण्याधिकोऽभूरधुना सुरेन्द्रः ॥४६७॥
चन्द्रो बभाषे भगवन् ! द्वितीयभवेऽहमेतद् विमलातपत्रम् ।
प्रस्थापयिष्यामि भवच्छरीर-छायाकृते कौतुकहेतवे च ॥४६८॥
( विमानेन वन्दित्वा तीर्थानि आगतौ मुनी— ) इत्थं गदित्वाऽथ मुनी प्रणम्य विमानमारोप्य स चन्द्रदेवः ।
गत्वा मुदा श्रीअभिनन्दनस्य पार्श्वे विमुच्याशु पुनर्जगाम ॥४६९॥
( अमरशेखरजीवः अयं लक्ष्मीधरः— ) ततो निजायुः परिपाल्य शेषं समाधिना मृत्युमवाप साधुः ।
बभूव चम्पेशमहेन्द्रपुत्रो लक्ष्मीधरोऽयं हि स एव जीवः ॥४७०॥
महेन्द्रभूपेऽथ दिवं प्रयाते लक्ष्मीधरः प्राप पदेप राज्यम् ।
पूर्वप्रपन्नं तु तदा स चन्द्रः प्रस्थापयामास तदातपत्रम् ॥४७१॥
इतश्च— ( वसन्तसेनो देवो जातो मुचकुन्द-नाम्ना— ) पवित्रचारित्ररतः क्रमेण संपूरितायुः स वसन्तसेनः ।
विपद्य सौधर्मसुरेन्द्रलोके बभूव देवो मुचकुन्दनामा ॥४७२॥

तथाहि— ( शत्रुंजयमाहात्म्यम्— )

जाइस्सं सित्तुंजे चउत्थं चिंतणाईए आसि।
पूओवगरणकरणुज्जमेण पावेइ छट्ठफलं ॥५०३॥
पंथे वच्चंतो वि हु तिगरणसुद्धो अ अट्ठमं भत्तं।
मग्गे जिणबिंबाई वंदंतो पावए दसमं ॥५०४॥
बंभव्वयं धरंतो एगासी विविहभावणमईओ।
कमसो दुवालसं पक्खक्खमणमेगग्गचित्तो य ॥५०५॥
पव्वयदंसणपूयणकरणे य मासियं हरिसवसओ।
तलजागरणे पामइ छम्मासियं चाउजामेण ॥५०६॥
जो वंदिज्जइ सत्तुंजं पन्नरसि-ऽट्ठमि-चउद्दसीसुं च।
दुन्नि वि पक्खाण फलं सो होइ परित्तसंसारी ॥५०७॥
दारिद्दं दोहग्गं कुमरणदासत्त-मरण-रोगाई।
सित्तुंजरायस्स बिंबाण ट्ठावणे पूयणेन हु हवंति ॥५०८॥
सट्ठाणे वि विदेसे सित्तुंजे वंदिए पसमरसमाए।

यास्यामि शत्रुंजये चतुर्थं चिन्तनादिके आसीत्।
पूजोपकरणकरणोद्यमेन प्राप्नोति षष्ठफलम् ॥५०३॥
पथि व्रजन् अपि खलु त्रिकरणशुद्धिश्च अष्टमं भक्तम्।
मार्गे जिनबिम्बानि वन्दमानः प्राप्नोति दशमम्॥५०४॥
ब्रह्मव्रतं धरन् एकाशी विविधभावनामयः।
क्रमशो द्वादशं पक्षक्षमणमेकाग्रचित्तश्च ॥५०५॥
पर्वतदर्शनपूजनकरणे च मासिकं हर्षवशतः।
तलजागरणे प्राप्नोति षण्मासिकं चतुर्यामेन ॥५०६॥
यो वन्दते शत्रुंजयं पञ्चदशी अष्टमी-चतुर्दशीषु च।
द्वयोरपि पक्षयोः फलं स भवति परीत्तसंसारी ॥५०७
दारिद्र्यं दौर्भाग्यं कुमरणदा-सत्व-मरण-रोगाः।
शत्रुंजयराजस्य बिम्बानां स्थापने पूजनेन खलु भवन्ति
स्वस्थानेऽपि विदेशे शत्रुंजये वन्दिते प्रशमरसमये।

१ एकमुपवासम्। २ उपवासद्वयम्। ३ उपवासत्रयम्। ४ उपवासचतुष्टयम्। ५ एकवारं भोजनकारकः। ६ उपवासपञ्चकम्। ७ पूर्णिमा-पुस्तके तु 'पन्नरसिद्धेसि' इति पाठः ८. 'प्राप्नोति' इति शेषः।

सो वि हु जत्ताइफलं दिट्ठे य अदिट्ठए लहइ ॥५०९॥ सोऽपि खलु यात्रादिफलं दृष्टे चादृष्टे लभते ॥५०९॥

संसारवासं परिहृत्य तस्माद् गृहाण दीक्षां कुरु मोक्षवीक्षाम्।[1]
निधेहि तत्त्वे हृदयं स्वकीयं भो! दुर्गतिद्वारमथो पिधेहि ॥५१०॥

माहात्म्यमित्थं विमलाचलस्य साधुर्गदित्वा विरराम यावत्।
तावत् स देवो मृगवेष एव चन्द्रेण तेनैव सहाऽऽजगाम ॥५११॥

(चन्द्रो देवः—) श्रीपुण्डरीकं यतिनं प्रणम्य चन्द्रो बभाषे बहुभक्तियुक्तः।
तवांह्रियुग्मं प्रणतं मया यत् ततो मदीयं महदद्य भाग्यम् ॥५१२॥

यतः— हृदा तदा चञ्चुरितं[2] सुमार्गे पुण्यद्रुमैः पम्फुलितं[3] तदाऽऽढ्यैः।
भवेत् तदाऽऽसासैदितैव[4] मुक्तिर्यदा मुदा नंनमितैः[5] सुसाधुः ॥५१३॥

तथाच— अद्य प्रभो! जागरितं हि भाग्यैरद्यैव वृत्तं सकलैर्गुणौघैः।
अद्यैव देहं समभूत् सवर्गं ममात्मनस्त्वीदृशपुण्यदानात् ॥५१४॥

अत्र प्रस्तावे—(लक्ष्मीधरप्रव्रज्या—) लक्ष्मीधरः सोऽथ मुनिं बभाषे प्रभो! व्यवस्थाप्य समग्रराज्यम्।
दीक्षां ग्रहीतुं पुनरागमिष्ये विलम्ब्यतां तावदिहैव पूज्यैः ॥५१५॥

उक्त्वेति वाक्यं नृपतिः स चम्पां गतोऽप्रकम्पान्तरवृत्तिरेव।
व्रतोत्सवं चाऽस्य विधातुकामौ सहैर्यतुस्तौ[6] मुचकुन्द-चन्द्रौ ॥५१६॥

१ मोक्षदर्शिनीम्। २-३-४-५ चर-फल-सद-नमधातूनां यङन्तानां रूपाणि। ५ देवद्वः।

(आगतो लक्ष्मीधरप्रबोधाय पूर्वमित्ररूपो मुचकुन्दः—)अथाऽन्यदाऽसौ मुचकुन्ददेवो ज्ञानादवेत्य स्वभवं पुरात्यम्[1]।
मित्रं निजं चामरशेखराख्यं बुबोध लक्ष्मीधरसंज्ञमेव ॥४७३॥
स पूर्वमैत्रीवशतोऽतिमोहं विभ्रंश्य लक्ष्मीधरभूमिनाथे।
समेत्य चायं नृपवास[2]मध्ये देवो निशान्ते[3] प्रकटो बभूव ॥४७४॥
जाते निशान्ते परमेष्ठिमन्त्रं स्मरन् जजागार नृपः स यावत्।
तावत् पुरस्थं मुचकुन्ददेवं विलोक्य नत्वाऽऽह विकस्वरास्यः ॥४७५॥
(लक्ष्मीधर-मुचकुन्दयोर्वार्तालापः—) स्वर्गात् कुतस्त्वं ननु कोऽसि देवः कस्मादकस्मात् प्रकटो बभूव ?।
निगद्यतामद्य मयि प्रसद्य सद्यः[4] प्रमोदाय समग्रमेतत् ॥४७६॥
देवः स ऊचेऽस्मि वसन्तसेनस्तथाऽभवं पूर्वभवे वयस्यः।
ततो ममत्वेन पुरातनेन सौधर्मकल्पाद् जवतः समेतः ॥४७७॥
राजाऽवदद् देव! वसन्तसेन-नाम्नैव हर्षाकुलितोऽस्मि गाढम्।
अहो! अहं मोहसमूहमूढ ऊहे[5] भवं न स्वमपीह पूर्वम् ॥४७८॥
तथाऽपि कृत्वाऽद्य मयि प्रसादं निवेद्यतां पूर्वभवप्रवृत्तम्।
भवादृशां दर्शनमत्र लोके मोघं नहि स्यादमरोत्तमानाम् ॥४७९॥
अथो बभाषे मुचकुन्द देवो राजन्! यदा श्रीमुनिपुण्डरीकः।

१ पुरातनम्-पुराभवं वा। २ गृहे। ३ निशाया अन्ते-प्रभाते। ४ वेगतः। ५ विचारयामासे।

अष्टापदाद्रेर्विमलाचलेन्द्रं गन्ता तदा ते नगरीमुपेता ॥४८०॥

ततश्च— श्रीपुण्डरीकं प्रणमस्यतस्ते नरेन्द्र ! बोधावरणीयमेतत् ।
क्षयं गमिष्यत्यखिलं समस्त—पापेन सार्धं हि भवोद्भवेन ॥४८१॥

ज्ञानान्तराये प्रलयं प्रयाते मुखेन तस्य स्वभवं नरेन्द्र ! ।
लक्ष्मीधर ! त्वं शृणुया यतोऽत्र तिष्ठन्त्यपापे सुगुरूपदेशाः ॥४८२

इतीरयित्वा विरतेऽथ देवे जगाद लक्ष्मीधरभूप एषः ।
श्रीपुण्डरीकागमनं सुरेन्द्र ! कृत्वा प्रसादं कथयेमंमाग्रे ॥४८३॥

तथेति सद्यः प्रतिपद्य वाक्यं तिरोबभूवाऽथ तदा स देवः ।
लक्ष्मीधरो भावधरो नितान्तं श्रुत्वेति नित्यं यतते स्म धर्मे ॥४८४॥

ततः सुरोऽयं मुचकुन्दनामा भवाद् वयस्यं निजमुद्दिधीर्षुः ।
विचिन्तयामास यदि प्रयामि स्वर्गे तदा विस्मरतीति कार्यम् ॥४८५॥

श्रीपुण्डरीकस्तु दिने चतुर्थे भूमीमिमामेष्यति साधुयुक्तः ।
स्थास्यामि तस्मान्नगरीवनान्तश्चारौ तरौ चम्पकनामनीह ॥४८६॥

इत्थं स्वचित्तेन विचिन्त्य देवस्तस्थावथो चम्पकशाखिशाखाम् ।
परोपकाराय यतो महान्तो दत्तावधानाः सततं भवन्ति ॥४८७॥

१ ज्ञानावरणीयम् । २ उद्धारं कर्तुमिच्छुः ।

(लक्ष्मीधर-श्रीपुण्डरीकयोः समागमः— ) अथो पथोऽनेन दिने चतुर्थे वयं समेता मृगवेष! देव!।
अस्मत्प्रणामं मुचकुन्ददेवश्चक्रे तदा संनतचम्पकेन ॥४८८॥

कृत्वाऽऽग्रहं गाढतरं ततोऽस्मानस्थापयद् मित्रविबोधहेतोः।
स्थितेष्विहास्मासु स एव देवः संप्रेयं लक्ष्मीधरमानिनाय ॥४८९॥

भो मृगवेष! तत्त्वं शृणु— आचाम्लचन्द्राद् मुदितः स चन्द्रश्चन्द्रातपत्रं प्रददौ तदाऽऽस्ये, किं बहुना?
पृष्टं त्वया यद् मृगवेष! देव! सर्वं तदस्माभिरिदं न्यवेदि ॥४९०॥

राजानं विलोक्य— भो! भूप! लक्ष्मीधर! पूर्वजन्म विचिन्तय त्वं सकलं स्वकीयम्।
इत्थं गदित्वा विरराम साधुः श्रीपुण्डरीकोऽत्यभिरामवाक्यः ॥४९१॥

(लक्ष्मीधरस्य जातिस्मरणम्— ) लक्ष्मीधरः साधुवचः समग्रं विचिन्तयन्नेकमना बभूव।
देहेऽथ मूर्छाकुलिते स्वजातिं मस्मार स स्मारंरसेन हीनः ॥४९२॥

इतश्च— शीघ्रं मुचकुन्ददेवो भूत्वाऽथ दृश्यः किल चम्पकद्रैः।
शीतोपचारैः प्रचुरैर्नरेन्द्रं चकार चैतन्ययुतं तदैव ॥४९३॥

अथो मुनीन्द्रं मृगवेषदेवो नत्वा बभाषे भगवन्! जवेन।
तं चन्द्रमाह्वातुमहं व्रजामि भूमीभुजे छत्रमिदं ददौ यः ॥४९४॥

१ पुस्तके तु 'व॰ोध' इति, स च पाठः अवतंस-वतंसवत् समुचितोऽपि भवेत्। २ स्मरस्य अयं स्मारो रसः—तेन हीन इति।

इत्थं गदित्वा मृगवेष एष तं चन्द्रमाकारयितुं जगाम ।
साधर्मिकं धर्मरता महान्तः प्रवर्तयन्त्येव हि धर्ममार्गे ॥४९५॥

अथाऽनन्तरम्— (लक्ष्मीधरप्रबोधः—) मूर्छाप्रणाशात् सकलः स भूत्वा श्रीपुण्डरीकं यतिनं प्रणम्य ।
संसारवैराग्यतरङ्गितात्मा लक्ष्मीधरो भूमिपतिर्बभाषे ॥४९६॥

यौष्माकवाक्यैर्हि विभो! पवित्रैर्ज्ञानोज्ज्वलैर्मेऽद्य तमो निरस्तम् ।
भवं ततोऽद्राक्षमहं च सम्यग्-दृष्टित्वयुक्तो मुनिराज! जातः ॥४९७॥

किं बहुना?—श्रीजैनधर्मोचयशर्करायं पीतं त्वदीयं वचनाऽमृतं यत् ।
उन्मत्तभावं परिहाय विश्वं पश्यामि विश्वं च यथास्थितं तत् ॥४९८॥

तवोपदेशामृतकुण्डमध्ये स्नात्वा मनो मे विमलं बभूव ।
भूयो रजःस्पर्शनिषेवणाय दीक्षाङ्गिकाङ्गीकरणात् प्रभो! ते ॥४९९॥

एवं वचस्तस्य मुनिर्निशम्य ज्ञात्वाऽवबोधावरणस्य शान्तिम् ।
जगाद राजन्! विनयस्थचित्तो दीक्षां नय त्वं विनय स्वपापम् ॥५००॥

शत्रुंजयं सिद्धगिरिं युगादि-देवस्यवाक्यादधुना व्रजाम ।
श्रीकेवलज्ञानमहोऽपि तत्र संभावनीयं शुभभावतस्ते ॥५०१॥

अनन्तसिद्धैः परिशुद्धमेनं गिरिं गिरा स्तोतुमलं न कोऽपि ।
तथापि सिद्धान्तवचोभिरेतत्-प्रभावमाकर्णय दत्तकर्णः ॥५०२॥

१ सचेतनः । २ दूरीकुरु । ३ अस्मत्पुरुष-पञ्चमीबहुवचनम् ।

तथाहि—( शत्रुंजयमाहात्म्यम्— )

जाइस्सं सित्तुंजे चउत्थं चिंतणाइए आसि। यास्यामि शत्रुंजये चतुर्थं चिन्तनादिके आसीत्।
पूओवगरणकरणुज्जमेण पावेइ छट्ठफलं ॥५०३॥ पूजोपकरणकरणोद्यमेन प्राप्नोति पष्ठफलम् ॥५०३॥
४ पंथे वचंतो वि हु तिगरणसुद्धो अ अट्ठमं भत्तं। पथि व्रजन् अपि खलु त्रिकरणशुद्धिश्च अष्टमं भक्तम्।
मग्गे जिणबिंबाइं वंदंतो पावए दसमं ॥५०४॥ मार्गे जिनबिम्बानि वन्दमानः प्राप्नोति दशमम्॥५०४॥
बंभव्वयं धरंतो एगासी विविहभावणमईओ। ब्रह्मव्रतं धरन् एकाशी विविधभावनामयः।
८ कमसो दुवालसं पक्खक्खमणमेगग्गचित्तो य ॥५०५॥ क्रमशो द्वादशं पक्षक्षमणमेकाग्रचित्तश्च ॥५०५॥
पव्वयदंसणपूयणकरणे य मासियं हरिसवसओ। पर्वतदर्शनपूजनकरणे च मासिकं हर्षवशतः।
तलजागरणे पामइ छम्मासियं चाउजामेण ॥५०६॥ तलजागरणे प्राप्नोति षण्मासिकंचतुर्यामेन ॥५०६॥
जो वंदिज्जइ सत्तुंजं पन्नरसि-ऽट्ठमि-चउद्दसीसुं च। यो वन्दते शत्रुंजयं पञ्चदशी अष्टमी-चतुर्दशीषु च।
दुन्नि वि पक्खाण फलं सो होइ परित्तसंसारी॥५०७॥ द्वयोरपि पक्षयोः फलं स भवति परीत्तसंसारी ॥५०७
दारिद्दं दोहग्गं कुमरणदासत्त-मरण-रोगाइं। दारिद्र्यं दौर्भाग्यं कुमरणदा-सत्व-मरण-रोगाः।
सत्तुंजरायस्स बिंबाण ट्ठावणे पूयणे न हु हवंति॥५०८॥ शत्रुंजयराजस्य बिम्बानां स्थापने पूजने न खलु भवन्ति
ट्ठाणे वि विदेसे सित्तुंजे वंदिए पसमरसमाए। स्वस्थानेऽपि विदेशे शत्रुंजये वन्दिते प्रशमरसमये।

१ एकमुपवासम्। २ उपवासद्वयम्। ३ उपवासत्रयम्। ४ उपवासचतुष्टयम्। ५ एकवारं भोजनकारकः। ६ उपवासपञ्चकम्। ७ पूर्णिमा-पुस्तके द्व
[illegible] ' इति [illegible] ८. 'प्राप्नोति' इति [illegible]।

सो वि हु जत्ताइफलं दिट्ठे य अदिट्ठए लहइ ॥५०९॥ सोऽपि खलु यात्रादिफलं दृष्टे चादृष्टे लभते ॥५०९॥

संसारवासं परिहृत्य तस्माद् गृहाण दीक्षां कुरु मोक्षवीक्षाम्।
निधेहि तत्त्वे हृदयं स्वकीयं भो! दुर्गतिद्वारमथो पिधेहि ॥५१०॥

माहात्म्यमित्थं विमलाचलस्य साधुर्गदित्वा विरराम यावत्।
तावत् स देवो मृगवेष एव चन्द्रेण तेनैव सहाऽऽजगाम ॥५११॥

(चन्द्रो देवः—) श्रीपुण्डरीकं यतिनं प्रणम्य चन्द्रो बभाषे बहुभक्तियुक्तः।
तवांह्रियुग्मं प्रणतं मया यत् ततो मदीयं महदद्य भाग्यम् ॥५१२॥

यतः— हृदा तदा चञ्चुरितं सुमार्गे पुण्यद्रुमैः पल्लवितं तदाऽऽढ्यैः।
भवेत् तदाऽऽसादितैव मुक्तिर्यदा मुदा नंनमितैः सुसाधुः ॥५१३॥

तथाच— अद्य प्रभो! जागरितं हि भाग्यैरद्यैव वृत्तं सकलैर्गुणौघैः।
अद्यैव देहं समभूत् सवर्गं ममात्मनस्त्वीदृशपुण्यदानात् ॥५१४॥

अत्र प्रस्तावे—(लक्ष्मीधरप्रव्रज्या—) लक्ष्मीधरः सोऽथ मुनिं बभाषे प्रभो! व्यवस्थाप्य समग्रराज्यम्।
दीक्षां ग्रहीतुं पुनरागमिष्ये विलम्ब्यतां तावदिहैव पूज्यैः ॥५१५॥

उक्त्वेति वाक्यं नृपतिः स चम्पां गतोऽप्रकम्पान्तरवृत्तिरेव।
व्रतोत्सवं चाऽस्य विधातुकामौ सहैयतुस्तौ मुचकुन्द-चन्द्रौ ॥५१६॥

---

१ मोक्षदर्शिनीम्। २-३-४-५ चर-फल-सद-नमधातूनां यङन्तानां रूपाणि। ५ ईयतुः।

लक्ष्मीधरोऽयंनृपतिः स्वराज्ये सहस्रमल्लं सुतमभ्यषिञ्चत् ।
ततो व्रतस्नानकृतेऽधितष्ठौ स मण्डपान्तः शुचिहेमपट्टम् ॥५१७॥
अशीतिलक्षाः प्रमिताः प्रवृद्धाः स्थानेषु संस्थाप्य निजेषु पुत्रान् ।
वैराग्यवन्तो वरमण्डलेशाः स्नानाय पट्टेष्वथ तत्र तस्थुः ॥५१८॥
क्षीराम्बुधेरम्बुभिरात्मदेव–देवीयुतौ तौ मुचकुन्द–चन्द्रौ ।
लक्ष्मीधरस्याऽखिलमण्डपेशैः सहाऽभिषेकं विधिना व्यधत्ताम् ॥५१९॥
ततः स राजा गजराजरूढः प्रौढाश्वसंस्थैरितरैस्तु सर्वैः ।
धृतो व्रताय प्रचचाल दिव्यैर्वस्त्रैः सुवर्णाभरणैर्मनोज्ञः ॥५२०॥
देवौ तदा तौ मुचकुन्द–चन्द्रौ लक्ष्मीधरे प्रीतिभरं धरन्तौ ।
दिव्यानि रूपाणि बहूनि कृत्वा विचक्रतुः प्रेक्षणकानि[1] तत्र ॥५२१॥
इतश्च— प्रभावनार्थं मृगवेषदेवश्चकार चारुं गुरुमण्डपं सः ।
मध्येऽस्य च श्रीऋषभस्य मूर्ति– चतुष्टयं पुष्टमनाः सुवर्णैः ॥५२२॥
सिंहासनं पूर्वदिशो विभागे स्थालं प्रपूर्णं च सुगन्धचूर्णैः ।
तदा प्रचक्रे मृगवेषदेवः श्रीपुण्डरीको निषसाद तत्र ॥५२३॥
अथ— लक्ष्मीधरोऽशीतिसुलक्षसंख्यैस्तैर्मण्डलेशैः सह मण्डपाग्रे ।

[1] नाटकानि ।

समेत्य हर्षादथ चन्द्रदेवं जगाद भोः! छत्रमिदं नय त्वम् ॥५२४ ॥
गजादथोत्तीर्य स मण्डलेशैर्युतः प्रणम्य प्रणयेण सम्यक् ।
प्रयच्छ दीक्षां भगवन्! ममेति व्यजिज्ञपत् तं मुनिपुण्डरीकम् ॥५२५॥
ततश्च— युगादितीर्थंकरनाममिश्रं गीतं भणन्तीषु वरामरीषु।
श्रीजैनदीक्षां विधिना नृपस्य देहे सुमन्त्रैर्निदधे मुनीन्द्रः ॥५२६॥
लक्ष्मीधरे राजमुनौ पुरस्थे हृष्टे निविष्टे च सभाजनेऽस्मिन्।
सद्देशनां धर्मनिवेशनाय प्रोवाच वाचंयमराजराजः ॥५२७॥ तथाहि—
जातस्तोत्रमिदं हि गोत्रमखिलं धन्या जनिस्तेऽजनि बुद्धिः शुद्धिमियाय पापपटलं प्राप क्षयं तेऽखिलम् ।
संसारोऽपससार सारसुकृताऽऽसारेण संप्रेरितो हे साराधिक! यज्जिनेन्द्रदुहिता दीक्षा भवन्तं श्रिता ॥५२८॥
यतः— (प्रव्रज्यामाहात्म्यम्—)

उक्कोसं दव्वत्थयं आराहइ जाव अच्चुयं कप्पं। उत्कृष्टं द्रव्यस्तवमाराधयति यावदच्युतं कल्पम् ।
भावत्थएण पामइ अंतमुहुत्तेण निव्वाणं ॥५२९ भावस्तवेन प्राप्नोति अन्तर्मुहूर्तेन निर्वाणम् ॥५२९॥
एगदिवसं पि जीवो पव्वज्जमुवागओ अनन्नमणो । एकदिवसमपि जीवः प्रव्रज्यामुपागतोऽनन्यमनाः ।
जइ वि न पामइ मोक्खं अवस्सवेमाणिओ होइ ॥५३० यद्यपि न प्राप्नोति मोक्षमवश्यवैमानिको भवति॥५३०

विशेषतोऽपि ते धन्याः भोगान् भूयोऽनुभूय ये । अन्तेऽपि तोषितात्मानस्त्यजन्ति क्रुद्धभोगिवत् ॥५३१॥

(किं पुनस्तेषां ये बाल्येऽपि त्यजन्ति–इति भावः) उक्त्वेति वाक्यं विरते मुनीन्द्रे स चन्द्रदेवोऽन्यगदत् प्रणम्य।
प्रभो ! भवन्मूर्ध्नि सितातपत्रं विधृत्य तापं पथि वारयामि ॥५३२॥

४ मुनिर्बभाषे शृणु चन्द्रदेव ! छत्रेण कार्यं नहि किञ्चिदस्ति।
यता यतीनां समतामतीनां छाया-ऽऽतपौ नो सुख-दुःखहेतू ॥५३३॥
इत्थं प्रभुश्रीगुरुपुण्डरीकः श्रीचन्द्रदेवेन महार्हभक्त्या।
छत्रं तदा मूर्धनि धार्यमाणं निषेधयामास विवेकविज्ञः ॥५३४॥

(अन्यदेशे प्रविचचार पुण्डरीकः—)

८ साधुज्ञानाम्बुसेकप्रसृतिमतिलतासूतिवाक्यप्रसूनैः संवास्याऽशेषवास्यानमर-नरवरान् प्रस्फुरद्बोधगन्धैः।
वाञ्छन्नन्यत्र देशे प्रविचरणमसौ पुण्डरीको गणेशो भूमावालोक्य वामे-तरचरणमथो सिंहपीठाद्‌व्यधत्त ॥५३५॥
गणाधीशं तत्र स्वगुरुमुरुबोधमदममुं विहाराय प्रोद्यन्मनसमवगम्य द्रुतमतः।
बभूव श्रीशत्रुंजयविमलयात्रोद्यतमना विनेयानां वर्गो विनयगुणकर्पूरकलशः ॥५३६

२ (पञ्चमः सर्गः—) श्रीरत्नप्रभसूरिसूरकरतो दोषानुषङ्गं त्यजन् यो जाड्यस्थितिरप्यभूत् प्रतिदिनं प्रासादद्भुतप्रातिभः।
तेन श्रीकमलप्रभेण रचिते श्रीपुण्डरीकप्रभोः श्रीशत्रुंजयदीपकस्य चरिते सर्गोऽभवत् पञ्चमः ॥५३७॥

॥ इति श्रीरत्नप्रभसूरिशिष्याचार्यश्रीकमलप्रभविरचिते पुण्डरीकचरिते श्रीलक्ष्मीधरप्रतिबोधवर्णनो नाम पञ्चमः सर्गः ॥

१ उहर्विशालः।

## षष्ठः सर्गः ।



(श्रीपुण्डरीको गजपुरं ययौ—) श्रीपुण्डरीको राजर्षिर्हर्षितैस्तैर्महर्षिभिः । समन्वितसुरैस्तैश्च विजहार विभुर्भुवम् ॥१॥
श्रुतक्रमेण संक्रामन् क्रमाभ्यां क्रमतो मुनिः । ययौ गजपुरं देवैः सहितः सहितोऽङ्गिषु ॥२॥
४ इतश्च (सोमयशा नृपः—) श्रीबाहुबलिनः पुत्रस्तत्र सोमयशा नृपः । ससैन्योऽत्र तदा राज-पाटीमाटीकते स्म सः ॥
पञ्चलक्षमितैर्देव-विमानैः व्योमनि स्थितैः । मुनिमायान्तमज्ञासीत् पुण्डरीकं स भूपतिः ॥४॥
ततः सोमयशा भूपश्चित्ते चिन्तितवानिति । अहो! अंहोऽखिलं क्षीणमहो! मेऽद्य महोदयः ॥५॥
यतः— पद्मिन्यो राजहंसाश्च जीमूताः सुतपस्विनः । यं देशमनुगच्छन्ति स देशः श्रियमश्नुते ॥६॥
८ पुत्रं श्रीभरतेशस्य गणेशमृषभेशितुः । यान्तं सिद्धगिरिं श्रीमत्पुण्डरीकं नमामि यत् ॥७॥
(प्रतीहारः सत्यसारः—) इत्थं सोमयशा राजा हृदा ध्यात्वा मुदा तदा । सत्यसारं प्रतिहारं प्रोचे प्रोत्सुकया गिरा ॥
(विजयसेनो मण्डलेशः, गुणारामः श्वा— )
हंहो विजयसेनाख्यं मण्डलेशं ममाऽधुना । गुणारामाभिधश्वान-युक्तमाकारय द्रुतम् ॥९॥
२ तथाऽयं सत्यसारोऽपि नीत्वा देशं नृपस्य तम् । गत्वा विजयसेनाख्यं मण्डलेश्वरमाह्वत ॥१०॥
ततो विजयसेनोऽयं स्वेन श्वानेन संयुतः । समागत्य ननामाऽऽशु श्रीसोमयशसं नृपम् ॥११॥
नृपो विजयसेनं तं प्रोचे भोः! त्वरितं चल । यथा श्रीपुण्डरीकाग्रे स्वरूपं कथ्यते शुनः ॥१२॥

१ अंहः पापम् । २ मेघाः । ३ गणधरम् ।

इत्युक्त्वा स नृपः सर्व-सैन्ययुक्तोऽचलत् ततः। मार्गे यान्तं तदा श्रीमत्पुण्डरीकमथाऽनमत् ॥१३॥
तदाच— किङ्किणीकलकण्ठः सोऽकुण्ठनूपुरयुक्पदः। सारमेयो[1] गुणारामोऽप्यमेयविनयोऽनमत् ॥१४॥
ततश्च— सुराश्च साधवः सर्वे तिर्यञ्चं विनयाश्रितम्। सारमेयं समालोक्य चमच्चक्रुश्चिरं [illegible] ॥१५॥
अहो विनयस्य महिमा—
नीरं निर्मलशीतलं कटुतरं स्यादेव निम्बादिषु दुग्धं सर्पमुखादिषु स्थितमहो जायेत तीव्रं विषम्।
दुश्शीलादिषु संगतं श्रुतमपि प्राप्नोत्यकीर्तिं परां धन्योऽयं विनयं कुपात्रमपि यः संभूषयेन्नित्यशः ॥१६॥

| | |
|---|---|
| तथाच— विणओ आवहइ सिरिं | विनय आवहति श्रियम् |
| लहइ विणीओ जसं च कित्तिं च। | लभते विनीतो यशश्च कीर्तिं च। |
| न कयाइ दुव्विणीओ | न कदाचिद् दुर्विनीतः |
| सकज्जसिद्धिं समाणेइ ॥ १७ ॥ | स्वकार्यसिद्धिं समापयति ॥ १७ ॥ |

ततः सोमयशाः साधुं नत्वोवाच कृताञ्जलिः। सगुरो! गुरुसंदेहभिदे तिष्ठ मुदेऽत्र मे ॥१८॥
निर्बन्धोऽपि[2] मुनिर्भक्तेर्निर्बन्धं प्रेक्ष्य भूपतेः। किञ्चिद् ज्ञानेन च ज्ञात्वा तत्र स्थातुं मनोऽकरोत् ॥१९॥
मुनेर्मनोऽथ विज्ञाय भक्तिसंभृतमानसः। चक्रे हरिणवेषोऽयं रत्नशालां सविष्टराम्[4] ॥२०॥
(अभाषिष्ट पुण्डरीकः—) ततः श्रीपुण्डरीकोऽसौ निषसाद प्रसादवान्। ततोऽभाषिष्ट राजानं श्रीसोमयशसं [illegible] ॥
भोः! श्रीसोमयशोराजन्! संशयो यस्तवाऽऽशये। तं निवेदय वेगेन यथाऽऽशु कथयाम्यथ ॥२२॥

१ सारमेयः शुनकः। २ रन्ध्ररहितः—केनचिद् रोद्धुम् अशक्यः। ३ आमद्दम्। ४ आसनसहिताम्।

ततो विजयसेनं तं श्वानवृत्तविशारदम्। राजा संकेतयामास मुनिविज्ञसिकाकृते ॥२३॥
अथो विजयसेनोऽयं मुनिं नत्वाऽवदद् वचः। प्रभो! प्रथममस्यैव स्वरूपं श्रूयतां शुनः ॥२४॥ तथाहि
(गुणारामशुनकवृत्तान्तम्-)
श्रीसोमयशसो राज्ञः सेवायै गच्छतः पथि। सारमेयममुं दृष्ट्वा मनो मोहमुवाह मे ॥२५॥
ततो मया ममत्वेन श्वानोऽयं जगृहे गृहे। भोजितो भोजनैः सारैर्भूषितो भूषणैस्तथा ॥२६॥
किं बहुना? क्षणं स्थातुं न शक्नोमि श्वानमेनं विना विभो!। तदाप्रभृत्यतोऽनेन सार्धं तिष्ठामि यामि च ॥
अहं युगादिदेवस्य प्रासादेऽगममन्यदा। तदा स्वामिन्! अयं श्वानोऽप्याजगाम समं मया ॥२८॥
अहं गर्भगृहे यावदादिदेवस्य पूजनम्। अकार्षं हर्षतस्तावत् श्वानोऽयं तस्थिवान् बहिः ॥२९॥
ततः पौषधशालायां गुरून् यावन्नमाम्यहम्। तावत् प्रथममेव श्वा नमश्चक्रे तथाविधिः ॥३०॥
इंदृग्विनयतुष्टेन हर्षोत्कर्षवशाद् मया। गुणाराम इति ख्यातिः श्वानस्यास्य तदा ददे ॥३१॥
किं बहुना?–सद्धर्मकर्ममर्माणि जानाति सकलान्यसौ। तिर्यग्योनिस्थितो ज्ञानी त्वयं मे विस्मयो हृदि ॥
अतः— (गुणारामशुनकविषये प्रश्नः—)
कथं मेऽस्योपरि स्नेहो ज्ञानी श्वानोऽप्यसौ कथम्?। कारणं कथ्यतामेतत् संदेहाम्भोधितारणम् ॥३३॥
ततो विजयसेनस्य पृच्छामाकर्ण्य सुनिर्मलाम्। प्रभुः श्रीपुण्डरीकोऽयं जगाद गदतां वरः ॥३४॥
हंहो विजयसेन! त्वं स्वकीयाशयसंशयम्। पृष्टवानसि तद्युक्तं गुरूणां लाभ एष हि ॥३५॥

१ भाषायाम्–गभारो २ श्वतृणाम्।

कुजातिं च सुजातिं च ज्ञाना-ऽज्ञाने सुखा-ऽसुखे। जन्तुर्लभेत भोः! पूर्व-भवसंभवकर्मणा ॥३६॥

( विजयसेन-गुणारामयोः पूर्वभवः— )

ततोऽद्य सर्वसंदेह-संमोहापोहहेतवे। आत्मीयं शौवनं चैव शृणु पूर्वममुं भवम् ॥३७॥

तथाहि— (काञ्चनपुरम्—) जम्बूद्वीपाभिधद्वीपे विदेहक्षेत्रमध्यतः। श्रीकाञ्चनपुरं नाम विद्यते स्वःपुरोपमम् ॥

(भीमसिंहो नृपः—) भीमः सिंह इव प्रोद्यदरिवारणदारणे। भीमसिंहाभिधस्तत्र पाति भूमिपतिः प्रजाः ॥३९॥

(पद्मा राज्ञी—) सदा स्मितेन वक्त्रेण चरित्रेणाऽचलेन च। द्विधाऽपि जितपद्माऽस्ति पत्नी पद्माभिधाऽस्य तु ॥

अन्यदा सा निशाशेषेऽपश्यत् पल्यङ्कसंगता। स्वप्नान्तःप्रसरद्भानुं भानुं भुवनभासितम् ॥४१॥

शीघ्रं स्वप्नममुं लब्ध्वा बुद्ध्वा बुद्धावथ स्थिरम्। संस्थाप्य पद्मराज्ञीयं राज्ञे तस्मै व्यजिज्ञपत् ॥४२॥

राजा देवीमथाऽवादीद् देवीदृक्स्वप्नतस्तव। सुतोऽद्भुतौजसा युक्तो भविता भूरिभाग्यभाक् ॥४३॥

इति स्वप्नफलं श्रुत्वा निजभर्तृमुखादसौ। पद्मा प्रमोदसद्माऽथ ययौ राजगृहं रयात् ॥४४॥

( असूत पद्मा सुतम्— ) कतिचिद् दिवसान् हर्षादतियाप्य महासती। संपूर्णसमयेऽसूत तनुं साऽनूनतेजसम् ॥

( भुवनभानुः—) पूर्वस्वप्नानुसारेण तस्य पुत्रस्य भूपतिः। भुवनभानुरिति ख्यातिमाख्याति स्म सविस्मयः ॥

इतश्च— यथा सुवाचिनि स्नेहः संतोषिणि यथा सुखम्। यथा स्वाचारिणि तेजस्तत्राऽसौ ववृधे तथा ॥

( उपाध्यायो ज्ञानानन्दः— ) सुतं भुवनभानुं तं भीमसिंहोऽथ भूमिपः। ज्ञानानन्दाख्यविदुषः पार्श्वे पाठकृतेऽमुचत् ॥

१ अपोहो-दूरीकरणम्। २ शुनः संबन्धि। ३ स्वः स्वर्गः। ४ वारणो-हस्ती। ५ पद्मम्-पद्मा। ६ भानुः-किरणः। ७ हे देवि!। ८ भविष्यति।

ततश्च— साहित्येषु स सौहित्यं वैचक्षण्यं च लक्षणे। गेयेऽमेयमतिं प्राप लास्येऽनालस्यतां क्रमात् ॥
इतश्च— शृङ्गाररसभृङ्गारं कलालोकोकिलं वनम्। सुतं नृपः स तं प्रेक्ष्य ज्ञानानन्दमथाऽवदत् ॥५०॥
भोः कलाचार्य ! पुत्रोऽयं सकलासु कलास्वपि। त्वया विशारदश्चक्रेऽधुना युद्धे कुरु द्रुतम् ॥ ५१ ॥
४ विनयो हि विनेयानां त्रपा स्त्रीणां शमो मुनेः। युद्धं क्षत्रियपुत्राणां विभूषणमसंभृतम् ॥५२॥
उक्त्वेति नृपतिर्ज्ञाना-नन्दाख्यं तं कलागुरुम्। वस्त्रा-ऽलंकृतिदानेन संमान्याऽथ विसृष्टवान् ॥५३॥
ज्ञानानन्दकलाचार्यो नृपोक्तं मनसा स्मरन्। छात्रं भुवनभानुं तं शस्त्रश्रममचीकरत् ॥५४॥
शब्दवेधी सूक्ष्मवेधी शीघ्रसंधानवानसौ। दृढप्रहारी धैर्याढ्यो धनुर्युद्धे क्रमादभूत् ॥५५॥
८ (खड्गादियुद्धानि— ) खड्गयुद्ध-गदायुद्ध-मल्लयुद्धादिकान्यसौ। ज्ञात्वा भुवनभानुस्तं गुरुं नत्वा व्यजिज्ञपत् ॥
(राधावेधाभ्यासः— ) भवत्प्रसादादासादि सादियुद्धादिकक्रमः। राधावेधश्रमज्ञाने संभ्रमो मे गुरो ! महान् ॥
ज्ञानानन्दस्ततः क्षत्र-पुत्रपञ्चशतीवृतः। ययौ पुरबहिर्भूमिं युक्तो भुवनभानुना ॥५८॥
क्षत्रपुत्रान् ततः सर्वान् श्रेण्या संस्थाप्य सोऽब्रवीत्। हंहो ! राजसुताः सर्वे शृण्वन्तु वचनं मम ॥५९॥
१२ अग्रतः— चारौ चूततरौ वामपक्षशाखामवस्थितः। चापपक्षी दशोर्लक्षी-क्रियतां भूपसूनवः ! ॥६०॥
तथा, पक्षिणोऽस्यैव भो ! दक्षा ! दक्षिणेतरचक्षुषि। समाश्रित्यैकतानत्वं लक्षं बध्नीत निश्चलम् ॥६१॥
इत्याकर्ण्य वचश्चारु ज्ञानानन्दकलागुरोः। प्रमाणं युष्मदादेश एव ते क्षत्रिया जगुः ॥६२॥
ज्ञानानन्दः पुनः प्रोचे भो ! भोः ! क्षत्रियसूनवः !। चूतं शाखां खगं चापं चक्षुरस्य च पश्यत ॥६३॥

१ लास्यं-नाट्यशास्त्रम्। २ आलस्यरहितताम्। ३ भृङ्गारः-कलशः। ४ आसादि-प्राप्तः। ५ सादी-अश्वारोही।

अथैते प्रोचिरे स्वामिन्! कश्चिरेणाऽखिलं वयम्। पश्यामो व्यक्तिसंयुक्तमेतत् युष्मत्प्रभावतः ॥६४॥
अथो भुवनभानुं सोऽपृच्छत् किं त्वं च पृच्छ(पश्य)सि। ऊचेऽयं चापचक्षुः तत् पश्याम्यन्यन्न किंचन ॥६५॥
ज्ञानानन्दः कुमारस्य पृष्ठौ दत्वा करं जगौ। सिद्धो भुवनभानो! भो! राधावेधविधिस्तव ॥६६॥
४ वृक्षाद्यालम्बनैरन्यैः स्खलितं नो मनो मनाक्। सेधति स्म ततो राधावेधः सन्मेधसस्तव ॥६७।
यतः— धर्मे दया दानविधौ च धैर्यं सृष्टौ जलं लोभभरस्त्वपाये।
शास्त्रेषु मूलं भुवि मातृका स्यादेकाग्रतैवाऽखिलकार्यसिद्धेः ॥६८॥

जानीत क्षत्रियास्तस्माद् भवेऽमुत्र परत्र वा। सर्वदा सर्वदामेनां स्थिरामेकमनस्कताम् ॥६९॥
८ ज्ञानानन्दस्ततोऽशेषक्षत्रपुत्रयुतस्तदा। श्रीभीमसिंहभूपस्य हर्षदः पर्षदं ययौ ॥७०॥
तत्र च—सन्मान्याऽऽसनदानेन भूपः प्राह कलागुरुम्। हंहो! प्रबुद्धबुद्धिः किं युद्धे जातः सुतो मम? ॥७१॥
ज्ञानानन्दोऽथ सानन्दो जगाद जगतीपतिम्। राजन्नजनि दक्षस्ते तनयो विनयोच्चयात् ॥७२॥
किं बहुना? सकलकलापरिकलितो लावण्यपुण्यलीलाभिः। गुणगणमणिनिधिरेष प्रसन्नवेषः सुतो जातः॥
२ (ज्ञानानन्दगुरुसत्कारः—) अथोचे पृथिवीनाथो ज्ञानानन्दं कलागुरुम्। दानं त्वदानन्दकरं मुदाऽनन्तं ददेऽद्य किम्।
यतः— जन्मप्रदात्रे शरणप्रदात्रे कलाप्रदात्रेऽतिधनं वितीर्य।
नरोऽनृणीयन्नुपयाति हास्यं तुषान् प्रदाय्येव गृहीतरत्नः ॥७३॥

तथापि, कृतोपकाराय नराय लोकैः स्वस्यानुमानेन सदोपकार्यम्।

१ भाषायाम्-पीठ। २ सर्वदाऽर्थम्। ३ ऋणरहितो भवन्

संप्रीणतः किं वसुधां सुधाभिर्न मुच्यतेऽग्रे शशिनो दृशोऽन्तः ॥७६॥
ततो मम हृदानन्दकृते वद विदां वर !। मत्पुत्रशास्त्रदात्रे किं ददे तुभ्यं मनीषितम् ॥७७॥
अथ प्राह विहस्यैष गुरुर्हर्षात् कलागुरुः। भूमीश ! तव सन्मानमेव लब्धं मनीषितम् ॥७८॥
किन्तु, छात्रं भुवनभानुं त्वं पात्रं सद्गुणसंपदः। प्रार्थयिष्येऽधुनाभीष्टं न तु त्वां पृथिवीपते ! ॥७९॥
रसनाथसुतो भक्तिरसेनाऽथ कलागुरुम्। प्रणम्य प्राञ्जलिः प्रोचे हर्षोत्फुल्लमुखाम्बुजः ॥८०॥
अप्राप्यं स्वर्ण-रत्नाद्यै-रर्थमर्पयतां भुवि। भवादृशां पुरः किं किं दानं संढौकयेज्जनः ॥८१॥

(ज्ञानानन्द-दत्ता शिक्षा—)

तथापि प्रार्थ्यतां किञ्चिद् मम जन्म कृतार्थ्यताम्। अथ प्रोचे कलाचार्यो राजपुत्र ! वचः शृणु ॥८२॥
नैपुण्यं पुण्यतः प्राप्यं सकलासु कलास्वपि। अतः सुकृतिना भाव्यं कृतिनाऽपि सदा त्वया ॥८३॥
यतः— चन्दनं हि घनसारपरागात् स्यात् सुगन्धकलितं लशुनाच्च।
इत्थमत्र सुकृतादभिनन्द्या पापतो न तु कला विमलाऽपि ॥८४॥
अन्यच्च— यः कलालिकलितः सकलोऽपि स्यात् कलङ्ककलुषः किल चित्ते।
तस्य शीतलरुचेरपि तेजो हीयते हि शशिवद् भुवने ही ॥८५॥
यतः— धर्मिणं जनकं स्वीयं गुरुं संस्मरता च माम्। इच्छता चाऽऽत्मनः कीर्तिं धर्मे कार्यस्त्वयोद्यमः ॥
श्रीसर्वज्ञस्त्वया पूज्यः त्रिकालं च त्रिशुद्धितः। परोपकारे पुण्ये च यतितव्यमहर्निशम् ॥८७॥
त्वामेतत् प्रार्थये धीमन् ! नान्यत् किञ्चित् पुनः पुनः। इत्थमेव भवेत् कीर्तिः कलायास्तव मेऽपि हि ॥

१ षष्ठ्यन्तम्-शशिविशेषणम्।

इत्थं कलाचार्यवचः शुचि श्रुत्वा नृपाङ्गजः। नत्वा जगाद सुगुरो! करिष्येऽहमिदं ध्रुवम् ॥८९॥

अथ— अनुकृशो दुकूलानि भूपस्तस्मै कलाविदे। ददौ तदौचित्ययुतो गुणिगौरवहेतुवित् ॥९०॥

एवं श्रीभीमसेनेन भूभुजा सत्कृतः कृती। ज्ञानानन्दः कलाचार्यो निजं धाम जगाम सः ॥९१॥

अथाऽन्यदा कृतस्नानः संवीतशुचिचीवरः। गृहदेवगृहे देव—पूजायै नृपसूर्ययौ ॥ ९२ ॥

(दिव्या पत्रिका— ) उत्तारयन् स निर्माल्यं कुमारो निजपाणिना। जिनेन्द्रमूर्तिहस्तस्थामपश्यद् दिव्यपत्रिकाम् ।

स्वर्णवर्णावलीरम्यां पत्रिकां नृपनन्दनः। नीत्वेत्थं वाचयामास विस्मयावाममानसः ॥९४।

तथाहि— योऽत्र दुःख-सुखपूरगतोऽपि स्वीयसत्त्वतरणीं न विमुञ्चेत्।
गर्व-दैन्यजलधिद्वयमध्ये नो पतेत् स गतपातकभारः ॥९५।

अन्यच्च— पूर्वकर्मवशतः सुखिनः स्युर्दुःखिनश्च भुवने भविनोऽमी।
धीरधीभिरिति तत्त्वमवेत्य सत्त्वमेव सततं करणीयम् ॥९६॥

इत्थं दिव्यमिदं पत्रं वाचं वाचं स भूपभूः। स स्वान्तं स्नपयामास प्रमोदक्षीरनीरधौ ॥९७॥

ततः श्रीवीतरागस्य पूजां कृत्वा नृपाङ्गजः। काव्यद्वयं स्मरन्नेव चक्रे तद्दिननिर्गमम् ॥९८॥

विधाय सायमप्येष कुमारो जिनपूजनम्। याते यामेऽङ्गसौख्येन शय्यायां स्वापमाप सः ॥९९॥

( भुवनभानुर्विरूपां नारीमैक्षत— )

ततो यावज्जजागार कुमारः स्फारसत्त्ववान्। तावत् पुरो विरूपाङ्गीमेकां नारीमवैक्षत ॥१००॥

१ परिहितम्। २ विस्मय।

वक्रनंक्रां च वक्रास्यां रौद्राक्षीं भीषणोदरीम्। लम्बोष्ठीं लम्बदन्तां तां स विलोक्य विसिष्मिये ॥
अथ प्रोचे कुमारं सा घोरघर्घरनिःस्वना। भो! जातेऽपि निशाशेषे सखे! जागर्षि वा कथम्? ॥१०२॥
कुमारः प्राह निद्रा नो विशेषात् तव दर्शने। किन्तु मे कथ्यतां का त्वं मूढेऽप्यत्र किमागमः ॥१०३॥
सह सा प्राह हास्येन सहसा भूपतेः सुतम्। अलक्ष्मीं नाम देवीं मां विद्धि लक्ष्म्या हि वैरिणीम् ॥१०४॥
पुण्यं पापं च बन्धाय भवेऽस्मिन् भविनां भवेत्। अथो तद्बन्धविच्छित्त्यै लक्ष्म्य-ऽलक्ष्म्यौ विधिर्व्यधात् ॥१०५॥
अहं पुनरधिका। यतः—
उपार्जयन्ति यत् पापं लक्ष्मीसंगेन ये नराः। तस्य प्रक्षालनायाऽहं तान् सेवे कृपयाऽन्विता ॥१०६॥
अधुना तु— तव देहेऽवताराय समायाताऽस्मि सांप्रतम्। यदि त्वं वद तद् यामि समेष्यामि तु बाधके ॥
तस्यां जोषमुपेयुष्यामेवं प्राह नृपाङ्गजः। इदानीमेव हे देवि! देहे मेऽवतर त्वर ॥१०८॥
उक्त्वा यावदिदं वाक्यं कुमारो विरराम सः। छायावत् तावदस्याङ्गे दत्तावेशा विवेश सा ॥१०९॥
(भुवनभानुर्दुःस्थः) तदा विचिन्तयामास नृपजो निजचेतसा। वेदनीयोदयादस्य मामलक्ष्मीः समाश्रयत् ॥११०॥
(भुवनभानोः प्रवासः—) तस्या उपभोगाय यामि देशान्तरं ततः। कुटुम्बं मदभाग्येन दुःखं मा लभतां परम् ॥१११॥
यतः— बन्धुभिः सह सुखं परिभोग्यं नैव दुःखमिति सज्जनमार्गः।
स्यान्निशि ग्रहपतिर्ग्रहयुक्तो नाऽर्कतेजसि न रुद्रजटासु ॥११२॥
चिन्तयित्वेति जैनेन्द्रमूर्तिं नीत्वाऽऽत्मना समम्। सत्वरं सत्त्वरङ्गेण निस्ससार स सारवान् ॥११३॥

१ नक्र-नासा। २ जोषं-मौनम्।

(गतः—) गच्छन्नथ पथि प्रौढवृक्षश्रेणिविराजितम्। सरः सरसमम्भोधि-सदृशं स दृशा पपौ ॥ ११४॥
ततश्च— प्रक्षाल्य चरणौ जैनमूर्तिं नीत्वा नृपाङ्गजः। पपावपापः पानीयं पूत्वा पूतेन वाससा ॥११५॥

(प्रादुर्भूत राक्षसी—)

पीत्वा नीरं सुतृप्तोऽन्तर्यावद् व्यावर्तते ततः। तावत् प्रादुर्बभूवाऽग्रे राक्षसी भीषणेक्षणा ॥११६॥
निजगाद कुमारं सा रौद्ररावाऽथ राक्षसी। भो! युद्धं कुरु शीघ्रं वा मुञ्च शस्त्रं ममाग्रतः ॥११७॥
इति श्रुत्वा रणायैष यावदुत्तिष्ठते हठात्। तावत् तस्य करात् खड्गं हृत्वा खे राक्षसी ययौ ॥११८॥
हस्तं वीक्ष्य विशस्त्रं स्वं विहरतोऽन्तर्यचिन्तयत्। अहो! अलक्ष्म्या देव्याऽयं प्रभावो दर्शितो निजः ॥११९॥
लक्ष्म्या वासो हि खड्गः स्यात् गतः सोऽद्य करात् मम। अथवा बाह्यभावैः किं यातैः सत्त्वं प्रयातु मा॥
निश्चित्येति कुमारोऽयं धीरधीरद्भुतप्रभः। अचलाया विलोकाय सहेलमचलत् ततः ॥१२१॥
(श्रान्तपुरम्—) अथाऽसौ भूयसीं भूमिं भ्रान्तः श्रान्ततनुर्भृशम्। वसन्तपुरपार्श्वस्थमश्वत्थतरुमाश्रितः ॥१२२॥
(वसन्तः—) छायायां चलपत्रस्य स्थितो यावत् स निश्चलः। तावत् तत्र पुरे वह्निप्रदीपनमभूद् बहु ॥१२३॥
दिवा तारकितं व्योम स्फुलिङ्गैः स्फुटितैस्तदा। त्रुटितैर्ज्वालजालैश्च चक्रे सूर्यशतान्वितम् ॥१२४॥

( श्यामाङ्गो नरः— )

अस्मिन्नवसरे कोऽपि स्थूलः श्यामाङ्गकुत्सितः। नरो नगरतोऽभ्येत्येत्याऽऽतुरः प्राह भूभुजम् ॥१२५॥
कोऽपि सत्पुरुषोऽसीति वेद्मि सुन्दरदेहतः। स्वर्णपञ्चशतीग्रन्थिममुं पार्श्वे गृहाण तत् ॥१२६॥
कुमारो न्यगदद् भद्र! स्यादर्थोऽनर्थदो ध्रुवम्। ममाऽधुना विशेषेण दैवं हि विमुखं यतः ॥१२७॥
पुरुषः सोऽवदद् विश्व-बन्धो! बन्धोऽयमस्ति मे। चेत् त्वं गृहाण तद् वह्नेः रक्षामि स्वकुटुम्बकम् ॥ ॥१२८॥

हृदयान्तर्दया धृत्वा दाक्षिण्यामृतवारिधिः। कुमारस्तस्य तं ग्रन्थिं जग्राह निजपाणिना ॥१२९॥
गतेऽथ पुरुषे तस्मिन् कुमारे च निषेदुषि। तरौ तत्र विरौति स काकः क्रूररवो रयात् ॥१३०॥
कुमारश्चिन्तयामास कुरुतं कुरुते ह्यसौ। कष्टं तिष्ठति मे पुष्टं कथमस्मादपीह किम्? ॥१३१॥
(काकहृतं स्वर्णम्—) इत्थं गूढविचारेण गूढचित्तो नृपाङ्गजः। शीघ्रं वायसवित्रास-कृते तं ग्रन्थिमक्षिपत् ॥१३२॥
तदैव स्मृतिभाग् याव-दुत्थायाऽऽशु विलोकते। तावत् कुत्रापि न प्राप सम्यक्त्वं पापवानिव ॥१३३॥
अलब्ध्वा तदसौ स्वर्णं राजसूनुर्व्यचिन्तयत्। सूचितं काकशब्देन यत् कष्टं तदुपस्थितम् ॥१३४॥
कुमारे चिन्तयत्येवं पुरुषः स पुरात् पुरः। समागत्य प्रमोदेन व.वदूकोऽवदद् वचः ॥१३५॥
देव! त्वदीयसाहाय्यात् कुटुम्बं सकलं निजम्। गृहं च ज्वलनादस्मादक्षतं रक्षितं मया ॥१३६॥
(भुवनभानोश्चिन्ता—) विजयस्व चिरं तत् त्वं सर्वोपकृतिकारकः। समर्पय मदीयं च स्वर्णं स्थपनिकाऽऽहितम् ॥
उक्ते व्यक्तेऽथ तेनेति चिन्ताभूर्भूपभूरभूत्। याचतोऽस्याऽधुना किं किं वचो वच्मि वचस्यपि ॥१३८॥
काकस्य संमुखो ग्रन्थिः क्षिप्तः प्रत्येति को वचः?। यद्यपीत्थमसंभाव्यं सत्यं वक्ष्ये तथाऽपि तु ॥१३९॥
यतः— ऋजुषो वचनं सत्यं तस्थुषो धर्मिणां पथि। यद् भाव्यं तद् भवत्वेवं सुखं चाऽप्यसुखं मम ॥१४०॥
एवं सुचिन्त्य चित्तेन त्रपापूरप्लुताक्षरम्। स्वर्णवृत्तं यथावृत्तं जगाद स विषादभाक् ॥१४१॥
अथ, रूक्षाक्षरं बभाषेऽसौ पुरुषः परुषाकृतिः। भो! भोः! स्थपनिकामोषस्त्वयाऽपि विहितः कथम्? ॥
त्वादृशा अपि चेद् द्रव्यं मादृशानां हि गृह्णते। ततो जगति कः कस्य विश्वेऽस्मिन् विश्वसिष्यति ॥१४३॥

१ अपशब्दम्। २ भाषायाम्-थापण। ३ चिन्तास्थानम्।

ततोऽयं यामि मे स्वर्णं ददीथा अन्यजन्मनि। इत्युक्त्वा स नरः कोपाट्टोपाद् गन्तुं प्रचक्रमे ॥१४४॥
तं यान्तं नृपजो रुद्ध्वा बभाषे व्याकुलाक्षरम्। मया प्रमादमुग्धेन स्वर्णं निर्गमितं तव ॥१४५॥
तथापि कथमप्यस्मिन् भवे मामनृणीकुरु। ऋणरज्जुनिबद्धस्याऽन्यभवे न भवेद् गतिः ॥१४६॥
धर्मिणोऽपि कृतिनोऽपि कदाऽपि स्याद् ऋणं किमपि कस्यचिदेव ।
तस्य तत्र सकलेऽपि तु दत्ते संभवन्ति हि सुखानि परत्र ॥१४७॥
अन्यत्र— केऽप्युपार्ज्य धनमात्मकलाभिर्जीवियन्ति जलदा इव जीवान् ।
छद्मनाऽन्यधनमत्र नयन्ति स्वोदराय वडवाग्निवदेके ॥१४८॥ किं बहुना?
सतां मोक्षे वाञ्छा स तु सुकृततस्तच्च सुमते-र्गुरोरेवैषा स्यात् स्ववशमनुजत्वे च स गुरुः ॥
ऋणाच्च स्वातन्त्र्यं परभवगतानामपि ततो-ऽधमर्णत्वं मा भूत्-इति मतिमतां संमतमहो! ॥१४९॥
ऋणाद् महाभयं कुर्वन्नह्नैवाऽमुनाऽधुना। अनृणीभूयमिच्छामि भूत्वा कर्मकरोऽप्यहम् ॥१५०॥
बभाषे पुरुषः सोऽथ हंहो! क्षत्रियपांसन!। तव कर्मकरस्याऽपि योग्यं भोज्यं न मे गृहे ॥१५१॥
पुनः प्राह कुमारोऽसौ तव स्वर्णाधमर्णताम्। विहातुमीहेऽहमहो! भोज्यं भुञ्जे ततः कथम् ॥१५२॥
किन्तु, सप्त प्रहरान् यावत् कृत्वा कर्माऽखिलं तव। पाश्चात्ये दिनयामे तु वने भोक्ष्ये फलान्यहम् ॥१५३॥
स नरः प्राह किं कर्म समग्रं त्वं करिष्यसि। कुमारः प्रोचिवान् कस्त्वं कर्तव्यं किं किमस्ति ते? ॥१५४॥
(स श्यामो नरः चण्डमुण्डश्चण्डालः— )
सगर्वं स नरः प्राह विश्वे को नाम वेत्ति न। चण्डमुण्डाभिधं सर्वचण्डालाधिपतिं हि माम् ॥१५५॥

तथाच, श्मशानं रक्षणीयं हि नेतव्यं मृतकाऽम्बरम्। एतत् कर्म त्वया पञ्च मासान् कार्यमहर्निशम् ॥
कुमारश्चिन्तयामास हुं मातङ्गगृहे मया। भाव्यं कर्मकरेणेति हीनं हा! पाप्मनः फलम् ॥१५७॥
अथवा— हितेऽहिते वा विहिते हि देही देहेन चेत् स्यादमुनाऽनृणोऽयम्।
लाभो महीयानिति रेणुमुष्टि-क्षेपादिवोन्निद्रमृगेन्द्रनाशे ॥१५८॥

(चण्डालगृहे किंकरो भुवनभानुः—)

एवमार्यो विचार्योचे जातोऽहं किंकरस्तव। इमां मूर्तिं पवित्रे तु क्वाऽपि मुञ्चामि चेद् भण ॥१५९॥
उवाच श्वपचः सोऽथ को देवोऽस्ति तवाऽपि रे!। पावित्र्यं किं परद्रव्यचौरगौरवदूरग! ॥१६०॥
अथवा गच्छ कुत्राऽपि मुक्त्वा गच्छ श्मशानके। एवं प्राप्य वचो भूप-पुत्रोऽचालिद् द्रुतक्रमम् ॥१३१॥
गच्छन्नग्रे ददर्शाथ वटं शाखाभिरुत्कटम्। एकं विलोकयामास विकटं तत्र कोटरम् ॥१६२॥

(भुवनभानुना निजपार्श्वस्था जिनमूर्तिर्वटे मुक्ता—)

स्वर्णसमुद्गकाऽन्तस्थां जलकान्तमणीमयीम्। नृपजो जिनमूर्तिं तां मुमोच वटकोटरे ॥१६३॥
श्रीवीतरागमुद्दिश्य भूरिभावनया भृतः। स्थूलस्थूलानि चाऽश्रूणि मुञ्चन्नूचे नृपाङ्गजः ॥१६४॥
पुराभवांहसा तां कां सातङ्कां कुदशां गतः। ययाऽहं मोचितः स्वामिन्! त्वां देहात् तु न चेतसः ॥१६५॥
इतः श्मशानभूमिस्थो रे कर्मकृदिति ब्रुवन्। शब्दायते स्म मातङ्गस्तं भूपतिसुतं प्रति ॥१६६॥
श्रुत्वा भुवनभानुश्च वेगादागात्तदन्तिकम्। उवाच श्वपचः किं रे! सत्वरं नागमिष्यसि ॥१६७॥
कुमारः प्राह मां स्वामिन्! आदेशेन प्रसादय। तुङ्गगर्वः स मातङ्गस्ततो वक्तुं प्रचक्रमे ॥१६८॥
रात्रावत्र त्वया स्थेयं मृतकाऽम्बरनीतये। चितादग्धानि काष्ठानि मीलयाऽऽनीय सर्वतः ॥१६९॥

नीत्वेति श्वपचवचस्तस्थौ स जगतीशजः। श्रीवीतरागं सर्वज्ञं मनसा संस्मरन्नरम् ॥१७०॥
(कश्चिद् योगी—) अथाऽस्मिन् समये कोऽपि योगी कम्पतनुर्भृशम्। कुमारपार्श्वमायासीद् रक्षेति वचनं वदन् ॥
कुमारः प्राह मा भैपीर्भो योगिन्! वद किं भयम्। बभाषे प्रस्खलद्वर्णं वर्णी स पृथुवेपथुः ॥१७२॥
सुदुस्तपं तपस्तेपे षण्मासान् मन्त्रसिद्धये। किन्तु ब्रह्मव्रतं प्रान्ते मया खण्डितमेकदा ॥१७३॥
सिद्धिलोभादहं कृत्वा सत्त्वमत्र समागतः। आहुतावाहितायां कोऽप्याविरासीच्च राक्षसः ॥१७४॥
पुष्टा गुरूपदिष्टाश्च मन्त्रास्तत्लासहेतवे। स्मृता अप्यफला जाताः खण्डितब्रह्मणो[1] हि मे ॥१७५॥
यतः— (ब्रह्मचर्यवर्णना—) मन्त्र-तन्त्र-वरयन्त्रसमूहा औषधानि च यतः सुतपांसि।
वाञ्छितानि ददतेऽत्र परत्र ब्रह्म तद् विजयतां व्रतराजः ॥१७६॥
तथाच, कीर्तिर्यतः स्फूर्तिमियर्ति विश्वे यतः शुचिः स्यादिह देहमेतत्।
यतश्च मोक्षः स भवेत् परत्र तद् ब्रह्म जीयादखिलव्रतेन्द्रः ॥१७७॥
अथ, राक्षसो भुजमेकं मे बुभुजेऽहं च पीडितः। नंष्ट्वा त्वदीयं शरणं स्वरक्षायै समागमम् ॥१७८॥
कुमारः प्रोचिवान् शीघ्रं स्वां कन्थां मे समर्पय। यथा विधाय त्वद्रूपं राक्षसं प्रीणयामि तम् ॥१७९॥
योगी प्रोचे कथं चारुवपुस्तस्मै प्रदास्यते?। धर्मा-ऽर्थ-काम-मोक्षा हि संभवन्ति यतः स्फुटाः ॥१८०॥
ऊचे कुमारो भो योगिन्! परार्थे प्राणदानतः। धर्मा-ऽर्थ-काम-मोक्षास्ते साधिता एव सर्वथा ॥१८१॥
किंच, निःश्वासेन महोद्भूत-ज्वालया लक्षितो मया। पश्याऽयं राक्षसोऽभ्येति तद् योगीन्द्र! द्रुतं द्रव ॥

१ खण्डितब्रह्मचर्यस्य।

कृत्वा प्रसादं कन्थां तु निजां मम समर्पय । यथा विधाय त्वद्वेषं राक्षसं प्रीणयामि तम् ॥ १८३ ॥
योगी प्रोचे ममैकोऽस्ति हस्तो द्वैतीयिको न तु । तदुत्तारयितुं कन्थां न शक्तोऽस्मि शरीरतः ॥१८४॥
कुमारोऽथ स्वहस्तेन कन्थामुत्तार्य तत् तनोः । पर्यधादथ तस्यैकं भुजं भक्षितमैक्षत ॥१८५॥
४ याते योगिनि चित्तान्तश्चिन्तां चक्रे स भूपभूः । अहहाऽस्य वराकस्य हस्तहीनस्य का दशा ? ॥१८६॥
अथो कुमारमभ्येत्य राक्षसो रूक्षवीक्षणः । स रुष्टः स्पष्टमाचष्ट दष्टौष्ठो दौष्ट्यपुष्टितः ॥१८७॥
रे ! रे ! योगीन्द्र ! मदन्त-मध्याच्चणकयज्ञवात् । निर्गत्य नष्टः पापिष्ठः तत् किं जीवसि मेऽग्रतः ॥१८८

(भुवनभानु भक्षयति राक्षसः— )

८ इत्युक्त्वा राक्षसो भूप-पुत्रदेहस्य भक्षणम् । प्रारेभे भूरिसंरंभाद् रभसादुग्रदंष्ट्रया ॥ १८९ ॥
रक्षसा भक्ष्यमाणोऽयं कुमारः सारसारवान् । हर्षादचिन्तयच्चित्ते कृतार्थं देहमद्य मे ॥१९०॥ यतः—

( भुवनभानोः सद्भावना— )

यद् व्यधायि यद्दुःखविधायि पापभङ्गनिचयेन मयाऽग्रे । चेत् तदेकतनुकव्ययतोऽत्र क्षीयते मम ततः किम-
१२ अन्यच, रे शरीर ! तव नाथ ! इहात्मा दत्तवान् विविधभोगभरान् यः । [ पूर्णम् ॥
स्वव्ययात् पतिममुं दुरितारेर्मोचयन्नसि कृतज्ञधुरीण ! ॥ १९२ ॥
इत्थं कुमारो धर्मेण संवर्मितमना मनाक् । न वेद खेदमङ्गस्य भक्ष्यमाणस्य रक्षसा ॥१९३॥
राक्षसः प्राह भो ! योगिन् ! क्षत्रब्रह्मव्रतस्य ते । मन्त्रं साधयितुश्चैष दण्डो योग्योऽथवा न किम् ॥१९४॥
कुमारः प्राह दण्डोऽयं योग्य एव कृतस्त्वया । ममोर्वोर्मांसमद्यापि विद्यते तत् तु भक्षय ॥१९५॥

इत्युक्ते भूपपुत्रेण निष्ठुरस्याऽपि रक्षसः। ऊर्ध्वीबभूवुर्लोमानि तं द्रष्टुमिव सात्त्विकम् ॥१९६॥
राक्षसो विस्मयाद् दध्यौ नाऽयं योगी भवेद् ध्रुवम्। व्रते वा चलितचित्तो यो दुःखे न स हि सासहिः॥
निश्चित्येति समुत्थाय कुमारवदनाऽम्बुजम्। उन्नम्य निजहस्तेन राक्षसोऽथ व्यलोकयत् ॥१९८॥
पूर्णेन्दु ह्यचकोराणां राजाऽब्जं लोचनालीनाम्। तन्मुखं प्रेक्ष्य दुःखाश्रुपूर्णाक्ष्यो राक्षसोऽवदत् ॥१९९॥
हा हा नरोत्तमस्याऽस्य जगत्कल्पतरोर्मया। सत्त्वपीयूषकुण्डस्य विहितं खादितं महत् ॥२००॥

(प्रसन्नो राक्षसो भुवनभानुं जीवितं ददौ).

योगिनं यः परित्राय निजं देहं ददौ मम। परोपकारिणं तं हा! मारयामि नरं कथम्? ॥२०१॥
रक्षोराजो विचिन्त्यैवमौषधीं व्रणरोहिणीम्। सुकुमारे कुमारस्य मूर्छितेऽङ्गे व्यलेपयत् ॥२०२॥
रूढव्रणस्तयौषध्या कुमारो लब्धचेतनः। उत्तस्थौ मम देहं भो! भक्षयेति पुनर्वदन् ॥२०३॥
ततश्च, सर्वसत्त्वहितं सत्त्वसहितं नृपनन्दनम्। पलदो विपुलानन्दो नत्वा स्तुत्वा तिरोऽभवत् ॥२०४॥

(भुवनभानोः श्मशानकाष्ठग्रहणम्— )

अथाऽत्राऽभ्येति मातङ्ग उच्चैर्वाचमुवाच सः। रेऽर्धदग्धानि दारूणि मीलितानि त्वया न किम्? ॥२०५॥
अधुना तानि वक्ष्यामीत्युदित्वा स नृपात्मजः। काष्ठानि मीलयामास चित्ते स्तुवति भाऽन्त्यजे? ॥२०६॥
इतश्च— अन्धकाररजःपुञ्जमरुणो गगनाङ्गणात्। प्रमार्ष्टि स्म दिनाधीशो तत्राऽऽजिगमिषो द्रुतम् ॥२०७॥
दोषाकरं कलङ्काढ्यं सेवमाना निशाचराः। गृहाद् द्वीपान्तरं जग्मुरागते चण्डरोचिषि ॥२०८॥

१ लोचनभ्रमराणाम्। २ राक्षसः। ३ "वहीं प्रापणे" धातोः। ४ आगन्तुमिच्छौ। ५ रोचींषि–किरणाः।

अस्मिन्नवसरे मन्दा-ऽऽनन्दकन्दनिकन्दनम्। शुश्राव दुःश्रवं क्वापि क्रन्दनं नरनन्दनः ॥२०९॥
चण्डालश्चण्डतुण्डोऽथ जगादाऽऽनन्दतुन्दिलः। अहो! अद्य महालाभो रे! रेऽस्माकं भविष्यति ॥२१०

(धनदत्तः श्रेष्ठी, तत्पुत्रो वसन्तो मृतः—)

यतोऽत्र धनदत्तस्य श्रेष्ठिनस्तनयो नयी। विनयी सुभगस्त्यागी वसन्ताख्यो मृतोऽधुना ॥२११॥
चारूणि चीवराण्यस्य गत्वा याचस्व सत्वरम्। मत्पत्न्याः परिधानाय यथा तानि भवन्ति भोः ॥२१२॥

(भुवनभानोश्चिन्तनम्—)

स्वीकृत्येति वचस्तस्य कुमारश्चलितस्ततः। चिन्तयामास संसार—वैराग्यकलितो भृशम् ॥२१३॥
यो नरः स्वजनहर्षतरूणां वृद्धयेऽभिनवनीरदतुल्यः। तस्य संहरणमाशु विधत्तेऽनित्यतोग्रपवनोत्कलिकेव॥
तथा च;— संसारोद्यानमध्ये किल विविधकुलानोकुंहालीप्रसूतान्।
दैवो ह्यारामिकोऽयं विकसितकुसुमानीव मर्त्यान् विगृह्य।
श्रेयःसौरभ्ययुक्तान शुचिसुखवचनैश्छादयेत् स्वःकरण्डे।
तेभ्यो जीवानथाऽन्यानवकरदहो! निक्षिपेन्नारकान् वा ॥२१५॥
विश्वं विश्वं नश्वरं संनिरीक्ष्य कुर्याद्धर्मं निर्मलं धीरधीर्यः।
स्वीयां मूर्तिं कीर्तिमेवाऽत्र मुक्त्वा सोऽयं सारं स्वर्गसौख्यं भुनक्ति ॥२१६॥
अतः सत्पुरुषस्याऽस्य मृतस्याऽपि तनौ स्थितम्। सतां वस्त्रप्रदाताऽहं याचिष्ये चीवरं कथम्? ॥२१७॥
अन्यच; चौरैर्विगृह्यमाणानि रक्षामि वसनानि यः। वस्त्रं नेतुं कथं सोऽहं करोमि स्वकरं पुनः? ॥२१८॥

1. अनोकुहो द्रुमः।

इतोऽवदत् स मातङ्गः किं रे शीघ्रं न यास्यसि ? । तस्माद्प्यतिभीतोऽयं जगाम नृपजो जवात् ॥२१९॥
पुनर्विचिन्तयामास स गत्वा मृतकाऽन्तिकम् । धर्मशास्त्ररसज्ञा मे रसज्ञा याचतां कथम् ? ॥२२०॥
सत्पात्राणां करेभ्योऽपि यः शिक्षायोचतां पुरा । सोऽद्य मे दक्षिणः पाणिः किं याचेत मृताम्बरम् ॥२२१॥
अथवा, येन हस्तेन मातङ्गेऽर्जिता स्वर्णाधमर्णता । अधमो याचतां शुभ्रं फलत्यत्रैव पातकम् ॥२२२॥
यतः— स्वशरणस्य वधो गुरुतापनं पिशुनता शमिनां पितृवञ्चनम् ।
स्थपनिकाहरणं शिशुहिंसनं ध्रुवमिहाऽन्यभवेऽपि फलन्त्यहो ! ॥२२३॥
अतो हे हस्त ! पापद्रोर्यादृरूपं फलं स्फुटम् । आत्मनोपार्जितं भुङ्क्ष्व मृतवस्त्रायाऽग्रतो भव ॥२२४॥
कुमारश्चिन्तयित्वैवं स्वकरं स पुरोऽकरोत् । हर्षगीराऽथ गीराविरासीत् पौराऽऽस्यतस्तदा ॥
अहो भाग्यं वसन्तस्य मृते यस्मिन्नसौ पुमान् । आचारसारस्वाकारः किञ्चित् प्रार्थयतेऽद्य यत् ॥२२६॥
इत्युक्त्वा रोदनं मुक्त्वा नागरा रागसागराः । रत्नान्यारेभिरे दातुं उल्लोलैर्निजपाणिभिः ॥२२७॥
(मृतस्य वस्त्रं याचितं भुवनभानुना— )
राजसूनुः स दूनोऽन्तर्विधूयाऽऽत्मकरं रयात् । प्रोचे भोश्चण्डतुण्डस्य मातङ्गस्याऽस्मि किंकरः ॥२२८॥
गृह्णामि दानं नो कस्य किन्तु वस्त्रमिदं जवात् । इत्यर्धोक्ते दशावस्य पूर्णे हृद्दुःखवारिभिः ॥२२९॥
ईदृशोऽप्यन्तजस्यैष कर्मकृद् धिग् जगत्स्थितिः । इत्युक्त्वा मृतदेहस्थं वस्त्रं तेऽस्मै समार्पयन् ॥२३०॥
(भुवनभानुर्मूर्च्छ— ) मुक्तं तन्मृतवस्त्रं तैः स्वपाणौ प्रेक्ष्य भूपभूः ।
धिग् धिग् मे जन्म भूलोके वदन्निति मुमूर्च्छ सः ॥२३१॥

१ गीः—वाणी । २ पौराणां—नागरिकजनानाम्—अस्यतः—मुञ्चतः ।

देहं विहाय हंसोऽस्य यास्यत्युड्डीय दुःखतः। इतीव स्वपटीतुल्य-मूर्छया छन्नवान् विधिः ॥२३२॥
अन्ते धाऽर्धा घटीयुग्मं तस्थौ सुबद्धमोहतः। बन्धुवच्छीतलैर्वातैरालिङ्ग्योत्थापितस्ततः ॥२३३॥
(इन्द्रजालम्—) यावदुत्थाय नेत्रे स्वे निमृज्याऽग्रे विलोकते। तावत् कुमारो मृतकं वत्सं पौरांश्च नैक्षत ॥२३४
४ अथाऽयं चिन्तयामास किमिदं महदद्भुतम्। मातङ्गस्य निजेशस्य किं किं दास्यामि चोत्तरम् ॥२३५॥
चिन्तयन्निति वेगेन व्यावृत्तस्तत्र चागतः। न च श्वपचमैक्षिष्ट सर्वत्राऽऽलोकयन्नपि ॥२३६॥
प्रहरत्रितयं तत्र निविष्टः पृष्टवान् जनम्। परं नाऽकथयत्–कोऽपि चण्डतुण्डं तमन्त्यजम् ॥२३७॥
इन्द्रजालमुत स्वप्न-मतमोहोऽथ मे कुतः ?। ध्यायं ध्यायमिदं तुर्येऽह्यमेऽसौ समुत्थितः ॥२३८॥
८ (नदी—) नदीं स चन्द्रशिशिरां शिशिराम्भोभरैर्भृताम्। स्नानाय नृपजोऽह्नाय शिश्राय श्रेयसायतिः ॥
स्नात्वाऽथ वाटिकां गत्वा दत्वा स्वां स्वर्णमुद्रिकाम्। नीत्वा सुमनसः सारान् स आर सुमना वटे ॥

(वटगता जिनमूर्तिर्गृहीता—)

कोटरान्तः समुद्गत्वा समुद्गकमसौ नतः। नीत्वाऽथ चन्द्रशिशिरां सरितं त्वरितं ययौ ॥२४१॥
२ नद्यास्तटेऽथ विकटे निर्मलं स शिलातलम्। हेलया क्षालयामास सनमस्कारं स्मरन्नरम् ॥२४२॥
वेदकां तां स्वर्णकान्तां संस्थाप्य स्थाप्यमन्त्रवत्। धीरः स नीरमानैषीत् पद्मपत्रपुटैः स्फुटैः ॥२४३॥
(जिनपूजा—) मन्त्रपात्रं मुदा स्नात्रं कृत्वा हित्वाऽन्यचित्तताम्। पूजां भूजानिजश्चक्रे विधिवद् विधिवत् ततः
योजिताभ्यां स्वहस्ताभ्यां परमेष्ठ्याख्यमुद्रया। संसारार्तिहरं चारा-त्रिकं चक्रे जिनेशितुः ॥२४५॥

१ पृथिव्याः। २ आर-जगाम। ३ भूजानिजः भूपतिपुत्रः।

स्नात्रे मेरुस्थितं बालं पूजा-ऽऽरात्रिक्रयोर्नृपः। ध्यात्वाऽथ स्तोतुमारेभे स्मरन् केवलिनं जिनम् ॥२४६॥
वीतराग ! तव वीतरागता रागवन्ति नमयेत् त्रिजगन्ति ।
निस्पृहं स्फुटफलं सहकारं[1] किं श्रयन्ति न नराः स्वसुखाय ॥२४७॥
श्रीजिनेन्द्र ! गुणिनोऽपि जनास्त्वां न क्षमाः स्तुतिविधौ कथमन्ये ।
यद् गुणत्रयमयं त्वमतीत्य वर्तसे किल जगत्त्रयमेतत् ॥२४८॥
शक्रस्तवं भणित्वाऽथ कुमारः स कुमारराट्। मुक्ताशुक्त्यभिधां मुद्रां कृत्वाऽर्हन्तमथाऽवदत् ॥२४९॥
(जिनस्तुतिः—) जय वीतराग ! भगवन् ! भवतु मम त्वत्प्रभावतः स्वामिन् ।
भवनिर्वेदो मार्गानुसारता चेष्टफलसिद्धिः ॥२५०॥
लोकविरुद्धत्यागो गुरुजनपूजा परार्थकरणं च । शुभगुरुयोगस्त्वद्वचनसेवना त्वाभवमखण्डा ॥२५१॥[2]
अथ, कारं कारं नमस्कारं भूपभूर्भूरिभाग्यभाक्। पुनर्दिदृक्षान्यात्ताक्षो यावदग्रे व्यलोकयत् ॥२५२॥
(केनचिद् जिनमूर्तिर्हृता—)
तावत् समुद्गको नास्ति न च मूर्तिर्जिनेशितुः। अत उन्मनायमानो मानी मौनी तदोत्थितः ॥२५३॥
नाभेरूर्ध्वं नराकारः सर्परूपतनुस्त्वधः। फणाभिः पञ्चभिर्दीप्रमणीभिर्दीपयन्नतः ॥२५४॥
(उरगः—) हस्ताभ्यां मस्तके जैनमूर्तियुक्तं समुद्गकम्। दधं धृत्वोरगो गच्छन् ददृशे भूपसूनुना ॥२५५॥
हृत्वा मूर्तिं प्रसर्पन्तं सर्पं तं वीक्ष्य सोऽग्रतः। दिनत्रयं लङ्घितोऽपि कुमारस्तमथाऽन्वगात् ॥२५६॥

---

१ सहकार आम्रः। २ एतच्च सम्प्रत्यपि चैत्यवन्दनविधौ प्रसिद्धम्—' जय वीयराय ! जगगुरो ! ' इत्यादिस्तवनम् ।

(भुवनभानुना उरगो गृहीतः— )

सहसा साहसाश्लिष्टो रंहसा स महीयसा। धावित्वा स्वच्छचित्तस्तं छेकः पुच्छे गृहीतवान् ॥२५७॥
कुमारं पुच्छसंश्लिष्टमल्याविष्टः स सर्पराट्। प्रससर्प प्रवाहेऽथ नद्यास्तस्या हि संमुखे ॥२५८॥
जलकान्तमणीमय्यास्तस्या मूर्त्तः प्रभावतः। संमुखोऽप्यम्भसां भारो द्विधारूपो जवादभूत् ॥२५९॥
सर्पस्य धृतदर्पस्य लाङ्गूलमवलम्ब्य सः। अस्पृष्टनीरो धीरोऽयमतीयाय रयान्नदीम् ॥२६०॥
यतः— सा चन्द्रशिशिरा नदी तिष्ठति निर्मला। तस्मिन् विवेश सावेशः प्रवरे विवरे विषी ॥२६१॥

(पुनसर्पो भुवनभानुः पाताल प्रविवेश— )

कुमरोऽपि समं तेन यावत् पातालमाविशत्। तावद् ददर्श रत्नौघ-रम्यहर्म्यं पुरं पुरः ॥२६२॥
कन्दर्पजववारीभिर्नारीभिः पूर्णवीथिकम्। स्फीतैर्गीतैः सशृङ्गारशृङ्गाटकमितस्ततः ॥२६३॥
(नागनगरम्—) कर्णपीयूपकवलैर्धवलैः पूर्णमन्दिरम्। स नागनगरं प्रेक्ष्य यावज्जातोऽन्यमानसः ॥२६४॥
तावत् स भुजगो दिव्यशक्त्याऽस्य भुजगोचरम्। प्रविहाय विहायस्थो भूत्वाऽदृश्यत्वमीयिवान् ॥२६५॥
मूर्तिं श्रीवीतरागस्य गते हृत्वा भुजंगमे। मुद्गराहतवत् स्थित्वा क्षणं सोऽथ व्यचिन्तयत् ॥२६६॥
अहो! ममात्मना पूर्वं कीदृग् दुष्कर्म निर्ममे। येन श्रीवीतरागस्य मूर्त्याऽप्यऽस्मि वियोजितः ॥२६७॥
येनाऽह्निा हि मेऽनाँयि नायकः श्रीजिनेश्वरः। तेन वन्धुत्वमाश्रित्य कथं नीतं न जीवितम्? ॥२६८॥
देवतावसरं स्वं यो रक्षितुं न क्षमः क्षितौ। तस्य मे धिग् धीरत्वं क्षत्रव्रतकलङ्किनः ॥२६९॥

१ पुच्छम्। २ जगाम। ३ सर्पः। ४ कन्दर्पस्य जवं वारयित्रीभिः। ५ आपायाम्—पोळ। ६ जगाम। ७ नीतः।

व्रीडितः पीडितश्चेत्थं स्वचित्ते स नृपाङ्गजः । तावदेकां नागनारीं पार्श्वे यान्तीं व्यलोकत ॥२७०॥
(नागनगरे महोत्सवः—)
अथो वेगेन धावित्वा तत्पार्श्वे पृष्टवानिति । अम्ब ! किं नगरेऽमुष्मिन् स्युः सदेदृग्महोत्सवाः ? ॥२७१॥
सा प्राह स्वच्छ !, हे वत्स ! यन्महोत्सवकारणम् । सकर्ण !, दत्तकर्णस्तत् सर्वमाकर्णय द्रुतम् ॥२७२॥
(वासुकिः—) अत्र पातालपाताऽस्ति शेषाख्यो धरणेश्वरः । तस्य राज्ये प्रधानश्च राजा श्रीवासुकिर्वरः ॥
(महापद्मो नागः—) स वासुकिः पुरेऽमुष्मिन् पतिः पातितरां प्रजाः । तेन मित्रं महापद्मो नागोऽस्ति प्रेषितो भुवि॥
कंचिद् भुवनभान्वाख्यं नरं केनाऽपि हेतुना । आनेष्यति तथा पद्मः प्रपञ्चेन गरीयसा ॥२७५॥
वसुधावासिनस्तस्य पुरस्याऽस्य समागमे । सप्ताहमुत्सवान् कर्तुमाज्ञा राज्ञा मुदा ददे ॥२७६॥
नरोत्तमस्य तस्याऽस्य समालोकाय कौतुकी । पौरलोकः समस्तोऽपि समस्त्युच्चप्रदेशगः ॥२७७॥
अतो गत्वात्मनो गेहं श्रित्वोच्चां चन्द्रशालिकाम् । अहमालोकयिष्यामि तं कीर्त्यालोकनिर्मलम् ॥२७८॥
इत्युक्त्वा सा ययौ नारी स्फारीकृतपदास्पदा । दध्यौ कुमारः केनाऽहं कार्येणाऽऽनायितो बलात् ॥२७९
इतश्च— कर्पूरपूरगौराङ्गं शशाकांशुसितांशुकम् । राजहंससमारूढं फणाभिर्दशभिर्युतम् ॥ २८० ॥
सव्यहस्तसुविन्यस्त-पीयूषकलसं पुरः । श्रीवासुकिं ददर्शाऽसावायान्तं बन्दिभिः स्तुतम् ॥२८१॥
तत्समीपे च—राजपट्टप्रभं सप्त-फणं पीताम्बरावृतम् । जपमाला-शङ्ख-कुम्भ-मुद्राढ्यं चतुर्भुजम् ॥२८२॥
(नागराजः—) नागराजमनन्ताख्यं गरुत्पतिसमाश्रितम् । वीक्षामास समायान्तं कुमारो विस्मयाकुलः ॥
(तक्षकः—) दक्षिणांसे न्यस्तदण्डं वामे च स्थितकुम्भकम् । शोणाङ्गवक्त्रं सोऽपश्यत् तक्षकं वृषवाहनम् ॥

(कर्कोटकः—) कृष्णं कर्कोटकं पीतवस्त्रं भुजयुगान्वितम्। सर्प-दण्ड-शङ्ख-कुम्भयुक्तं, हस्तिस्थमैक्षत ॥२८५॥
एनं ससफणं श्वेतवस्त्राङ्गं हयवाहनम्। कुम्भाम्बुजयुतपाणिं स आयान्तमलोकयत् ॥२८६॥
श्वेतवस्त्र-धनुःपञ्चफणः कलश-शङ्खयुक्। महापद्मो मयूरस्थो नृपजेन तदैक्ष्यत ॥२८७॥
पुलिकः कृष्णवस्त्राङ्गः ससफणो हि दण्डवान्। पद्मारूढः प्रौढमना तदाऽनेन विलोकितः ॥२८८॥
शङ्खाख्यश्वेतवस्त्राङ्गः फणाभिर्दशभिर्युतः। रथस्थितः शङ्ख-कुम्भकरो दृष्टोऽथ तेन सः ॥२८९॥
इत्थं तस्य कुमारस्य पश्यतो मूर्धनि द्रुतम्। नागेन्द्रास्ते स्वकुम्भेभ्यः क्षिप्रं पीयूषमक्षिपन् २९०॥

(नागलोककृता भुवनभानुस्तुतिः—)

ततश्च— जय त्वं सात्त्विकाधीश! जय त्वं करुणाकर!। जय त्वं दानिनां धुर्य! जय त्वं क्षत्रियोत्तम! ॥
इत्थं वदन्तस्ते नागाः श्रित्वा व्योम प्रमोदतः। तस्योत्तमस्योत्तमाङ्गे पुष्पवृष्टिं व्यधुस्तदा ॥२९२॥
अथाऽलंकृत्य नेपथ्यैर्नागेन्द्रास्तं नृपाङ्गजम्। पुरं प्रवेशयांचक्रुर्निर्मितानेकनाटकम् ॥२९३॥
स्तूयमानं वन्दिवृन्दैरन्वितं नागनागरैः। श्रीवासुकिः स्वयं धाम नीतवान् नीतिवानमुम् ॥२९४॥
रत्नस्तम्भैः शुभां मध्यसभां प्रापय्य वासुकिः। प्रोचे भुवनभानो! भोः! सिंहासनमिदं श्रय ॥२९५॥
कुमारः प्राह नागेन्द्र! यस्य मे पाणितो जिनः। गतोऽशक्तेरभाग्याच्च तं मां गरसीह किम्? ॥२९६॥
इत्युक्त्वा तं वसुधायामासमानं भुजंगराट्। भद्रासनं समानाय्य तमुपावीविशत् पुरः ॥२९७॥
सुविष्टरनिविष्टेषु प्रधानेषु स वासुकिः। तुष्टदृष्टिः स आचष्ट नृपपुत्रं पवित्रवाक् ॥२९८॥
भोः कुमार!— यो नरो जिनवरं वरभक्त्या पूजयेदपि समीपगतं नो।

दूर एव स तु तस्य विमोहात् रत्नपुञ्ज इव दृग्विकलस्य ॥२९९॥
यो जिनं शिवपदस्थितमात्मोत्सङ्गगं शुचिमनःकुसुमेन ।
पूजयेदिह स केवलतेजाः स्याद् रवेरिव करै रविकान्तः ॥३००॥ किं बहुना ?
४ देवो गुरुर्वा भक्तस्य दूरस्थावपि पार्श्वगौ । अभक्तस्य तमोऽन्धस्य दवीयांसौ सदाऽपि तौ ॥ ३०१ ॥

( भुवनभानोः पातालानयने कारणम् — )

यतः— महतां वदतां धर्म-महनीयोऽसि सात्त्विकः । ईदृग् क्षत्रव्रतं यस्मिन् जैनी भक्तिस्तथेदृशी ॥३०२॥
हेतुना येन पाताले त्वमानीतो भुवस्तलात् । तं सर्वं शृणु वृत्तान्तं नितान्तं स्थिरमानसः ॥३०३॥
८ चतुश्चत्वारिंशत्संख्य-सहस्रभुवनप्रभुः । चतुर्विंशत्यङ्गरक्ष-सहस्रैः कृतसेवनः ॥३०४॥
पद्मावत्यादिभिः षड्भिर्महिषीभिर्निषेवितः । त्रायस्त्रिंशैश्च त्रिंशद्भिः सप्तानीकाधिपैर्युतः ॥३०५॥
अन्यैरनेकैर्नागैश्च शेखरितांह्रिनीरजः । सभानिविष्टो धरण इन्द्रः पृष्टो मयैकदा ॥३०६॥ ( विशेषकम् )
२ पाताल-स्वर्गयोर्नाग-देवेन्द्रैः परिपूर्णयोः । कुत्समर्त्याकुलो मर्त्य-लोको मध्ये कथं प्रभो ? ॥३०७॥
अथ श्रीधरणः प्राह शृणु भो ! वासुके ! सखे ! । मानुष्यार्जितपुण्येन जीवा इन्द्रत्वमाप्नुयुः ॥३०८॥
भूलोके केऽपि विद्यन्ते सात्त्विका धर्मिणो नराः । सुरा-ऽसुरैः समग्रैर्यं चाल्यन्ते नैव सत्त्वतः ॥३०९॥
तथाच; पृथिव्यामधुनाऽप्यस्ति भीमसिंहनृपाङ्गजः । नरो भुवनभान्वाख्यः क्षत्रियः सात्त्विकाग्रणीः ॥
अथाऽवोचमहं स्वामिन् ! मनुष्ये चर्मचक्षुषि । किमन्नकीटके सत्त्वं संभाव्यं स्वल्पमेधसि ॥३११॥

१ नीरजं-कमलम् ।

व्याख्यातो योऽस्य युष्माभिः सत्त्वं सत्त्वस्य तस्य हि। कषित्वेक्षामि दुःखाख्य-कषपट्टे सुवर्णवत् ॥३१२॥
इत्युक्त्वा धरणेन्द्रस्य सभाया अस्मि निर्गतः। अथो परीक्षा प्रारम्भि मया ते दुर्दशोदयात् ॥३१३॥
तथाहि— अलक्ष्मीरूपाद् भो! रजनिचरवध्वायुधकृते ऋणार्ते मातङ्गे तनुवितरणाद् योगिकृपया।
मृतस्याऽङ्गाद् वस्त्रार्थनजनितमूर्छोऽपि च यतः परीक्ष्यान्ते वीक्ष्य द्रुतमहमिहाऽऽगां नृपसुत! ॥३१४॥
ततो नागो महापद्मो मया पुण्यात्मनस्तव। आकारणाय प्रहितः स्वं कृतार्थयितुं पुरम् ॥३१५॥
आदितः स निवेद्येति तस्मै भुवनभानवे। मौनमुद्रामथाऽऽलम्ब्य यावदस्थाच्च वासुकिः ॥३१६॥
(धरण-स्वरूपः—) प्रभुः श्रीधरणस्तावद् बन्दिवृन्दाभिनन्दितः। नृविमानं समारूढः प्रौढहर्षादुपागमत् ॥३१७॥
वासुकिप्रमुखाः सर्वे सम्मुखा विकसन्मुखाः[1]। विवेकिनोऽतिवेगेनो-त्थाय नेमुरमी अमुम् ॥३१८॥
तदा भुवनभानुश्चाऽभ्युत्थाय प्रणमन् जवात्। आलिङ्ग्य धरणेनोचे वत्स! तुष्टोऽस्मि सत्त्वतः ॥३१९॥

(भुवनभानु-धरणयोः सलापः—)

अथ, सिंहासनसमासीनं धरणेन्द्रं नृपाङ्गजः। प्रणम्य प्राञ्जलिः प्रोचे हरैकं संशयं मम ॥३२०॥
यदा स्वनगरस्थेन नागराज! मया पुरा। उत्तारिता जिनेन्द्रस्य मूर्तेः पूजा पुरातनी ॥३२१॥
पवित्रा पत्रिका तत्र सत्त्वतत्त्वविवेचिनी। सुवर्णवर्णश्रेणीभिर्दिव्यकाव्यद्वयान्विता ॥३२२॥
ददृशे स्वदृशे हर्षं ददती या तदा मया। किमर्थं केन सा मुक्ता तथ्यमेतत् प्रकथ्यताम्? ॥३२३॥ (युग्मम्)
स्मित्वा श्रीधरणेन्द्रोऽथ वचस्वी वाचमूचिवान्। त्वद्बोधाय मया मुक्ता काव्ययुक्ता सुपत्रिका ॥३२४॥

1 विकस्वरमुखाः।

यतः— देवा यदि प्रचुरधर्मसुधाम्बुतुल्यान् रक्षन्ति नो नरवरान् बहुदानकुल्यान् ।
तेषां प्रभावतरवोऽपि हि पापतापात् शुष्यन्त एव सकला जगतीतले तत् ॥३२५॥
अतः, यो द्रव्यतश्चरिततः श्रुततस्तपस्तः श्रीजैनशासनविभासनमातनोति ।
सः सर्वदेवतगणोऽस्य हि सर्वदैव रक्षां करोति दुरितं च तिरस्करोति ॥३२६॥
( तुष्टो धरणः— ) अतस्तुष्टोऽस्मि किं तुभ्यं ददामि पुरुषोत्तम ! । भूपभूरब्रवीज्जैन-ध्यानमस्तु मयि स्थिरम् ॥
( भुवनभानोः सप्तनरकदिदृक्षा— )
तथाऽपि यदि तुष्टोऽसि नागराज ! ततोऽधुना । दर्शय श्रुतिनिर्दिष्टान् नरकान् सप्त सांप्रतम् ॥३२८॥
धरणः प्राह हे वत्स ! किमर्थं तान् दिदृक्षसि ? । कुमारो न्यगदत् पाप-फलजिज्ञासया प्रभो ! ॥
बभाषे धरणस्तावद् वाक्यैस्तान् प्रथमं शृणु । दुःखितैर्जन्तुभिः पूर्णान् शक्नोषि हि न वीक्षितुम् ॥३३०॥
तथाहि— ( नरकवर्णना— ) रत्नप्रभाख्ये त्रिंशल्लक्षास्तिष्ठन्ति नरकावासाः ।
पञ्चविंशतयो लक्षा नृपसूनो ! शर्करप्रभे नरके ॥३३१॥
पञ्चदशलक्षयुक्तस्तार्तीयो वालुकप्रभो नरकः । पङ्कप्रभश्चतुर्थो दशभिर्लक्षैर्युतो नरकगेहैः ॥३३२॥
धूमप्रभस्त्रिलक्ष्या तमप्रभः पञ्चहीनलक्षेण । पञ्चभिरेव तु गेहैर्युक्तोऽस्ति महातमःप्रभो नरकः ॥३३३॥
एवं च चतुरशीतिषु संस्थिता नरकवासलक्षेषु । सततं विततं दुःखं दुष्कृतिनो जन्तवो ह्यनुभवन्ति ॥
तथाहि-भार्या-पत्योरनुजीवि-स्वामिनोर्गुरु-शिष्ययोः । श्वश्रू-वध्वोर्मित्रयोश्च ये विभेदं हि चक्रिरे ॥
तद्वियोगक्षणमितान् वारांस्तेषां वृणां तनुः । बद्ध्वा शिरः कर्वबृक्ते क्रकचैः प्रविदार्यते ॥३३६॥

येऽलीकेन कलङ्केन साधुं नरमदूषयन्। सतां शून्यं च पैशुन्यं ये चक्रुर्वक्रचेतसः ॥३३७॥
उपहासवचोभिर्यैर्धर्मिणोऽधः कृता भुवि। यैर्दुर्वाग्भिः पिता माता गुरुर्नेताऽप्यनप्यत ॥३३८॥
तद्वचोऽक्षरसंख्यानि संवत्सरशतान्यहो!। तेषां जिह्वाः छिन्नरूढाश्छिद्यन्ते वज्रतुण्डकैः ॥३३९॥
परस्त्री वीक्षिता दुष्टैर्वीक्ष्य यैर्भुंजिता पुरः। यैश्चालोक्य स्वयं सार्थश्चौराणामर्पितोऽधमैः ॥३४०॥
तन्निमेषमितान् वर्षलक्षानेषां हि वीक्षणे। वज्रतुण्डाः खगा नित्यं खनन्ति खरचञ्चुभिः ॥३४१॥
एकावासस्थिते सर्वकुटुम्बे निर्दया भृशम्। द्रव्यं हृत्वा कलिं कृत्वा भुञ्जन्त्येकाकिनो हि ये ॥३४२॥
एकसार्थे समायान्तं बुभुक्षुं परिहाय ये। भुञ्जते ये च धनिनो निस्वबन्धोरुपेक्षकाः ॥३४३॥
यावन्तः कवला एक-भोज्ये स्युर्विहिताः पुरा। तत्संख्यलङ्घनप्रान्ते विष्टा तेषां प्रदीयते ॥३४४॥
यावन्ति द्रोहभोज्यानि स्युः कृतानि पुराभवे। तावद्वारं कदर्थ्यन्ते जीवा एवं नरोत्तम! ॥३४५॥
जन्तूनमन्तून् यो हत्वा भुक्तवान् रोमसंमितान्। वर्षसहस्रान् स तप्त-ताम्रखण्डानि भोज्यते ॥३४६॥
रात्रौ सुप्ते जने ग्रामा यैः पूर्वं परिदीपिताः। तेषां देहो लोहमूषैः क्षिप्रं प्रज्वाल्यतेऽनिशम्! ॥३४७॥
अन्यासक्तो निजां भार्यां त्यजेत् संतापयेच्च यः। तप्ततैलेन तद्देहः सिच्यते भो नरोत्तम! ॥३४८॥
इत्याद्यनेकोत्पन्नाः कथिताः स्वल्पवेदनाः। अन्येषां बहुदुःखानि व्याहर्तुं पारयामि न ॥३४९॥ यतः—
"नरएसु जाइं अइकक्खडाइं दुक्खाइं परमतिक्खाइं। नरकेषु यानि अतिकर्कशानि दुःखानि परमतीक्ष्णानि।
को वन्नेही ताइं जीवन्तो वासकोडीहिं ॥३५०॥ को वर्णयिष्यति तानि जीवन् वर्षकोटिभिः ॥३५०॥
नेरइआणु प्पाओ उक्कोसं पंचजोयणसयाइं। नैरयिकाणामुत्पाद उत्कृष्टं पञ्चयोजनशतानि।

दुक्खे निवडियाणं वेयणसयसंपगाढाणं ॥३५१॥ दुःखे निपतितानां वेदनाशतसंप्रगाढानाम् ॥३५१॥

(निवहुना ?)

अच्छिनिमीलणमित्तं नत्थि सुहं दुक्खमेव अणवरयं । अक्षिनिमीलनमात्रं नास्ति सुखं दुःखमेव अनवरतम् ।
नरए नेरइयाणं अहोनिसं पच्चमाणाणं ॥३५२॥ नरके नैरयिकाणाम् अहर्निशं पच्यमानानाम् ॥३५२॥

इत्युक्त्वा धरणेन्द्रस्तं पाणौ प्रारोप्य भूपजम् । व्यक्तितो नरकावासाम् दर्शयामास कत्यपि ॥३५३॥

( नरकदर्शनेन भुवनभानुर्मुमूर्च्छ— )

धरणेन्द्रकराब्जस्थो जीवानां वीक्ष्य वेदनाम् । कुमारो दुःखपूरेण क्लान्तकायो मुमूर्च्छ सः ॥३५४॥
पुनस्तत्र समानीय दिव्यपानीयसेचनैः । धरणेन्द्रः कुमारं तं चकार स्पष्टचेतनम् ॥३५५॥
व्यचिन्तयत् कुमारोऽथ देहसौख्याय धिग् जनाः । देहं धर्मकल्पद्रुं प्रापुः किं पापपोषिणः ॥३५६॥
ऊचेऽथ धरणो वत्स ! जाताऽद्य सप्तलङ्घनी । अङ्गं कृशं भृशं तेऽभूत् कुमार ! सुकुमारवत् ॥३५७॥
भो ! जनाधिपपुत्राऽद्य भोजनाय मया समम् । पुण्यपुष्ट ! तदुत्तिष्ठ सत्त्वरत्नैकरोहण ! ॥३५८॥
कुमारः प्रोचिवन्नाग ! मयाऽद्य जिनपूजनम् । न कृतं तत् कृतं देव ! भोजनैर्लौल्ययोजनैः ॥३५९॥
श्रुत्वेति वासुकिः प्रोचे देवतावसरे मम । सा मूर्तिर्वीतरागस्य विद्यते सर्वविद्य ! ते ॥३६०॥
अभ्युत्थाय ततः शीघ्रमत्रैव जिनपूजनम् । विधेहि विधिना धीमन् ! निधेहि प्रमदं मयि ॥३६१॥
इत्युक्त्वा वासुकिर्भूपपुत्रमाकृष्य बाहुना । स्नपयित्वा सुधाकुण्डे कारयामास पूजनम् ॥३६२॥

( धरणेन सह भुवनभानोः भोजनम्— )

धरणोऽत्यर्थमभ्यर्थ्य कुमारं दिव्यभोजनैः । अभोजयत् प्रीतिवह्लैः फलं पक्वं हि गौरवम् ॥३६३॥

(धरणेन भुवनभानवे दत्तानि चमत्कारकवस्तूनि—)

ततोंऽशुकयुगं स्वर्ण—पादुकायुगलं तथा। धरणेन्द्रः कुमाराय दत्त्वाऽवादीत् प्रमोदवान् ॥३६४॥
अनेन वस्त्रयुग्मेन संवीतेन तनौ तव। शीता-ऽऽतप-रजो-वातभवं दुःखं न भावि भोः! ॥३६५॥
पादुकायुगलस्याऽस्य प्रभावो व्योमगामिता। परोपकारे त्वं भूया धीरधीरनिशं भुवि ॥३६६॥
इत्युक्त्वा पेटिकां जैन-मूर्तियुक्तां स्वपाणिना। आर्पयन्नृपपुत्राय मणिं चैकं महौजसम् ॥३६७॥
भूत्वाऽथ निकषा कर्णं कुमारस्य मुदा तदा। महिमानं मणेस्तस्याऽऽचख्यौ छन्नं स नागराट् ॥३६८॥

(भुवनभानुः पातालात् पृथ्व्यामागतः—)

अथो मुमोच हुंकारं स्फारं स धरणेश्वरः। तदैवाऽथ कुमारोऽयं पृथ्व्यामात्मानमैक्षत ॥३६९॥
(रङ्गशाला नगरी-) अहो! अहं भुवं प्राप्तश्चिन्तयन्निति विस्मयात्। जगाम रङ्गशालाख्यां नगरीं श्रीगरीयसीम् ॥
तस्याः पुरप्रवेशेऽसौ चारुप्राकारवेष्टितम्। प्रासादं विस्मितोऽपश्यत् पिशङ्गध्वजयाऽन्वितम् ॥३७१॥
प्रासादोऽयं श्रियो देव्या अये! पीतध्वजान्वितः। विचिन्त्येति कुमारस्तत्प्राकारान्तर्विवेश सः ॥३७२॥
(लक्ष्मीमूर्तिः—) चारुचामीकरमयीमयं तत्र प्रमोददाम्। लक्ष्मीदेव्या ददर्शाऽथ मूर्तिं चम्पकपूजिताम् ॥३७३॥
उपसृत्य कुमारोऽथ निजगाद श्रियं प्रति। देवि! लक्ष्मि! त्वमेवाऽसि सतां पुण्यनिबन्धनम् ॥३७४॥
यतः— नृपस्य मानं गुरु-देवपूजा सत्तीर्थयात्रा निजबन्धुपोषः।
संसेव्यतां शेषकलाविदां च स्याल्लक्ष्मि! सर्वं त्वयि तोषवत्याम्। ॥३७५॥
सन्तः सुतीर्थे कृपणा रजोऽन्तस्त्वां स्थापयन्ति व्यसनेषु पापाः।

१ भयम्। २ धूल्याम्।

मत्वेति हे धर्मसुते ! सुलक्ष्मि ! कथं सतामेव गृहेषु नैषि ? ॥३७६॥
स कुमारः सुकुमारमिति यावद् वचोऽब्रवीत् । श्रीदेवता तावदेव प्रोवाचाऽनाहतं वचः ॥३७७॥ तथाहि—
पुण्यरज्जुभिरहं दृढबद्धा निर्विवेकि-सुविवेकिगृहेषु ।
संस्थिताऽत्र कुवचः सुवचश्च वत्स ! हे ननु सहेऽधनिनां हि ॥३७८॥
श्रुत्वेत्यसौ श्रियो वाक्यं दध्यौ प्राग्जन्मधर्मतः । श्रीः स्यात् कृपण-व्यसनिनराणां नान्यतो गुणात् ॥
(द्वौ विप्रौ) इतो गर्भगृहान्तस्थौ विप्रौ श्रीदेवदत्ताऽचंकौ । हुं चिह्नमेकं संजातमित्युक्त्वा जग्मतुर्द्रुतम् ॥
एताभ्यां किमभिज्ञानं दृष्टं विप्राविमौ च कौ । चिन्तयन्निति बभ्राम प्रासादं परि भूपभूः ॥३८१॥ तत्र च—
(पश्च आम्राः—) स्फाटिकैर्निर्मलजल-कलितैरालवालकैः । विपुलान् पत्रलान् पञ्च कम्रानाऽऽम्रानुदैक्षत ॥३८२॥
उपसृत्य कुमारोऽथ यावदालोकते स्थिरः । तावत् तान्निष्फलान् वीक्ष्य सव्यथं ध्यातवानिति ॥३८३॥
प्रसृतेऽपि वसन्तर्तौ द्रुमाणां परमर्द्धिदे । आः ! आनन्दप्रदा अक्ष्णोरप्येते निष्फलाः किमु ? ॥३८४ किन्तु,
दानेशा धनसंयुता भुवि सदाचारा परश्लाघिनो वैद्या लोभविवर्जिता यदि सुविद्वांसोऽप्यगर्वा हृदि ।
नित्यं स्वाम्पि सरांसि मृत्युरहिता मर्त्याः फलाढ्या द्रुमाः ।जायन्ते तदहो ! धरा वरतरा स्यात् स्वर्ग-पातालयोः ?
तथाऽपि धरणेन्द्रेण प्रदत्तस्य सुधामणेः । प्रभावेण करिष्यामि चूतानेतान् फलान्वितान् ॥३८६॥
ध्यात्वेति तं मणिं नीव्या कृष्ट्वा स्थानपाऽम्बुभिः । प्रक्षाल्याऽभिषिषेचैष चूतान् पञ्चाऽपि यावता ॥३८७
तावता स्वर्णवर्णानि कर्पूरसुरभीणि च । आविरासुः फलान्याशु सुधास्वादूनि तेष्वथ ॥३८८॥
इतश्च- विप्रौ क्षिप्रौ तौ तत्राऽऽयातौ फलाकुलान् । तान् (तांश्च) वृक्षान् समालोक्य मुदितावूचतुर्मिथः ॥

१ सुजलानि ।

अहो ! कर्पूरमञ्जर्या अपूरिष्ट मनोरथः। अवकेशिनोऽपि वृक्षा यज्जाताः सफला अमी ॥३९०॥
तयोरेको लघुर्विप्रोऽवचित्य सुफलोच्चयम् । शीघ्रं ययौ द्वितीयस्तु तत्राऽस्थान्नृपजान्तिके ॥३९१॥
अथाऽवदत् कुमारस्तं हे विप्राविह कौ युवाम् ?। कारितं श्रीगृहं केन किं नीत्वाऽगात् फलान्यसौ ? ॥
अथो स विप्रः प्रोवाच गिरा प्रेमपवित्रया। जानीहि प्रथमं देव ! रङ्गशालां पुरीमिमाम् ॥३९३॥
(विक्रमो नृपः—) विक्रमोऽत्र पतिः पाति पातितारिपतङ्गकः। भयान्धतमसाल्लोकं नीतिमार्गप्रदीपकः ॥३९४॥
(प्रीतिमती राज्ञी—) तस्य प्रीतिमती नाम पत्नी दृढपतिव्रता। सुप्ताऽन्यदा निश्यऽपश्यत् कर्पूरतरुमञ्जरीम् ॥
(कर्पूरमञ्जरी पुत्री—) संपूर्णसमये साऽथ समसूत सुतां सती। पिताऽपि तामतो नाम्ना चक्रे कर्पूरमञ्जरीम् ॥
(सामदेवो दैवज्ञः—) सुतायां सप्तवार्षिक्यां तस्यां श्रीविक्रमो नृ । दैवज्ञं सामदेवाख्यं पप्रच्छे तद्वरं नरम् ॥
कन्याङ्गलक्षणान्येप वीक्ष्य मौहूर्तिकोऽवदत्। वर्षेऽस्याः पोडशे भावी राधावेधकरो वरः ॥३९८॥
राजा श्रीविक्रमोऽवोचत् राधावेधस्य योग्यता। केन चिह्नेन विज्ञेया पुंसस्तस्येति भो ! वद ॥३९९॥
सोऽवादीद् देव ! वाग्देवीमुपोष्याऽऽराध्य सत्त्वरम्। सर्वं निवेदयिष्यामि तृतीये दिवसे तव ॥४००॥
सोमदेवस्तृतीयेऽह्नि सभामभ्येत्य भूपतेः। पाणौ चूतफलान्युच्चैस्तदा पञ्च समार्पयत् ॥४०१॥
राजोचे किं फलैरेतैः कर्तव्यमथ सोऽब्रवीत्। अर्पितानि सरस्वत्या ममैतानि प्रसन्नया ॥४०२॥
गदितं च सरस्वत्या महालक्ष्मीगृहं महत्। कारितं विद्यतेऽग्रे यत् स्वर्णमूर्तिविभूषितम् ॥४०३॥
तत्र कर्पूरमञ्जर्या कन्यया निजपाणिना। प्रसादस्याऽस्य पाश्चात्य-भागे वाप्यान्यमून्यहो ! ॥४०४॥
दिव्यस्वरूपा पञ्चाम्री ततस्तत्र प्ररोक्ष्यति। साऽनिशं निर्मलैर्नीरैः सिंचनीया च कन्यया ॥४०५॥

सा च हिरण्मयी लक्ष्मीः स्मेरचम्पकपुष्पकैः । कन्यया पूजनीयो हि स्नातया, शुचिवस्त्रया ॥४०६॥
पुंसा संभाषिता येन लक्ष्मीमूर्तिर्वदिष्यति । वरः कर्पूरमञ्जर्या नरः स भविता ध्रुवम् ॥४०७॥
सदाऽपि निष्फलान् दिव्यान् तानाम्रान् पञ्च यो नरः । करिष्यति फलैराम्रान् वरिष्यति स ते सुताम् ॥
राजन्! देव्या सरस्वत्या ममेति कथितं स्फुटम् । सोमदेवः स दैवज्ञ इत्युक्त्वाऽऽत्मगृहं ययौ ॥४०९॥
अमुं प्रासादमुर्वीशो, हेमश्रीमूर्त्तिसंयुतम् । अचीकरत् ततः सा च कन्याऽऽम्रानुसवत्यभूत् ॥४१०॥

(दिवाकर-गुणाकरौ विप्रौ—)

तदा नियुक्तावावां च दिवाकर-गुणाकरौ । श्रीपूजायै तस्य पुंसः परीक्षायै च भूभुजा ॥४११॥
(राधावेधस्तम्भः—) कन्याषोडशवर्षेऽस्मिन् राज्ञा वीवाहमिच्छता । अष्टोत्तरशतहस्तः स्तम्भोऽस्त्युत्तम्भितो बहिः ॥
दक्षिणान्यष्ट चक्राणि चाऽष्टौ वामभ्रमीणि च । तत्राऽन्तरे चारुतरां नृपो राधामकारयत् ॥४१३॥
राधावेधकरो यः स्यात् स नरो मे सुतावरः । इत्युद्घोष्याऽशेषराज्ञो दूतैरामन्त्रयन्नृपः ॥४१४॥
(कर्पूरमञ्जरीतपः—) निमन्त्रणानि भूपानां स्वस्वयंवरहेतवे । कर्पूरमञ्जरी श्रुत्वोपवासं विदधे तदा ॥४१५॥
राजाऽपृच्छत् कथं वत्से! विदधासि न भोजनम्? । भासयन्त्याऽऽस्यभासाऽग्रेऽसावभाषत भामिनी ॥
येषां बीजानि वाग्देव्याऽर्पितान्येते द्रुमा यदा । फलिष्यन्ति तदा तेषां फलैर्भोक्ष्येऽन्यथा तु न ॥४१७॥
उपवासत्रये जाते क्लान्तकाया कुमारिका । बभूव राजवर्गोऽपि चित्ते दुःखाकुलो भृशम् ॥४१८॥
चतुर्थेऽह्नि दिने राजा नत्वा लक्ष्मीं व्यजिज्ञपत् । देवि! यद्येकचित्ता मे पुत्री तल्लभतां वरम् ॥४१९॥
इत्युक्त्वाऽर्चां श्रियः कृत्वा यावद् राजा विनिर्ययौ । तावत् त्वया कुमारस्य लक्ष्मीः संभाषिताऽवदत् ॥
पूर्णमेकमभिज्ञानमिति प्रमुदितो भृशम् । गत्वा व्यजिज्ञपावाऽऽशु कन्यां कर्पूरमञ्जरीम् ॥४२१॥

सा प्रोचे प्रोचरोमाञ्चा सत्यं चेद् युवयोर्वचः। वृक्षाणां तदहो! तेषां फलान्यानयत द्रुतम् ॥४२२॥
इति प्रोक्तौ कन्ययाऽऽवां संशयानौ फलेष्वलम्। आगतौ फलितानेतान् वृक्षान् वीक्ष्याऽतिविस्मितौ ॥

(कर्पूरमञ्जरीपारणम्—)

एषां फलानि नीत्वाऽसौ मम भ्राता गुणाकरः। प्रयातोऽस्त्यधुना कन्या-पारणाकारणाय भोः! ॥४२४॥
कन्यायाः पारणायां च कृतायां विक्रमो नृपः। अत्रैष्यति भवन्तं तु प्रविवेशयिषुः पुरीम् ॥४२५॥
यावदुक्त्वेति विप्रोऽयं विरराम दिवाकरः। तावच्छ्रीविक्रमो राजा तत्राऽगात् सपरिच्छदः ॥४२६॥
गुणाकरेण विप्रेणाऽऽदिश्यमानपथो नृपः। आगत्याऽभ्युत्थितं हर्षात् कुमारं श्लिष्यति स्म सः ॥४२७॥
राजा दध्यावहो रूपं कुमारस्याऽस्य वीक्ष्य हि। स कन्दर्पः स्वकं दर्पमद्य तत्याज निश्चितम् ॥४२८॥

(भुवनभानोः पुरप्रवेशमहोत्सवः—)

राजाऽऽरुह्य गजं स्वाङ्के प्रारोप्यैनं कुमारकम्। पुरेऽप्रावेशयत् प्रौढ-प्रमोदभरमेदुरः ॥४२९॥
नृपो भुवनभानुं तमुत्सवेन महीयसा। चित्रशाले विशालेऽथ ससभूमे मुदाऽमुचत् ॥४३०॥
कुमारपरिचर्यायै दिवाकर-गुणाकरौ। तत्राऽन्यांश्च नरान् मुक्त्वा राजा स्वावासमासदत् ॥४३१॥ अथ,
उद्वर्त्य सुरभिद्रव्यैः संस्नाप्य विमलैर्जलैः। विलेप्य यक्षपङ्कैश्चाऽलंकृत्य स्वर्णभूषणैः ॥४३२॥
विधाप्य जिनपूजां च भोज्यैर्नानारसैस्तदा। तावभोजयतां विप्रौ कुमारं भक्तिनिर्भरौ ॥४३३॥
अत्रान्तरे सहस्रांशुर्म्लानांशुनिचयोऽजनि। वारुणीमीहमानस्य कस्य कान्तिर्न हीयते? ॥४३४॥

१ वारुणी-वरुणदिशा, सुरा च।

कुमारः प्रोचिवान् सूर्यः संपूर्य वसुभिर्भुवम्। व्रजत्यस्तं हहा दैवं सदसत्स्वपि दुःखदम् ॥४३५॥
अहो! लब्ध्वा पूर्वं किल विबुधनाथस्य ककुभं जगत्युच्चैर्भूतो दिशमभिलषन् यज्जडपतेः।
मरुन्मार्गात् सूरोऽप्यथ पतति तन्निर्मलकुलां श्रियं हातुः पातो ध्रुव इति वदन् विश्वमिव भोः! ॥४३६॥
विश्वं पश्यति विश्वेऽस्मिन् स सहस्रकरोऽपि हि। ममज्ज पश्चिमाऽम्भोधौ दिनान्ते केन किं भवेत् ॥४३७॥
पाशपाणिदिशाऽम्भोधौ पात्यमाने खगे खगाः। शब्दायन्ते स्म वृक्षेषु मिलित्वा दुःखिता इव ॥४३८॥
अस्तंगते दिवानाथे काष्ठास्वन्धमुखीषु च। पक्षिणोऽमी अभुञ्जाना धन्या अज्ञानिनोऽपि हि ॥४३९॥
राक्षसाः प्रेत-भूताद्या म्लेच्छाश्चाऽश्नन्ति निश्यऽपि। स्वर्गिणः पितरश्चैव धर्मिणो मनुजास्तु न ॥४४०॥
दूरमेष यथा सूरस्तमःपूरस्तथा तथा। श्रियं हरति पद्मानां निर्नाथः स्यात् सुखी हि कः? ॥४४१॥
रत्नैः प्रदीपै रविणेन्दुना च क्षतं तमः स्यात् पुनरक्षितं हि।
यथा जिनेन्द्रैर्मथिता मदाद्या अपि त्रिलोकीं तु पराभवेयुः ॥४४२॥
अथो दिवाकरोऽवोचद् विधायोर्ध्वां स्वतर्जनीम्। कुमार! पुरतः पश्य प्राच्यां चन्द्रोऽभ्युदेत्यसौ ॥४४३॥
प्रभालोकं कुर्वन् रविरवनितापं यदतनोत् तमिस्रा शीताऽपि प्रचुरतिमिरं यच्च कुरुते।
द्वयोर्दोषावेतावमृतरुचिरेषोऽप्यपहरत् कलङ्कं स्वं हर्तुं प्रभवति न तत् क्षीयत इव ॥४४४॥
अथो गुणाकरोऽवोचच्छयनीये नृपाङ्गज!। सत्वरं कुरु विश्रामं यथा याति तव श्रमः ॥४४५॥
तथाऽकरोत् कुमारोऽपि स्मृत्वा पञ्चनमस्कृतिम्। संवाहयांचक्रतुश्च तावथो तं यथासुखम् ॥४४६॥

१ [illegible]

इति विक्रमराजस्य निर्देशात् तलरक्षकाः। नगरीं मण्डयामासुराशु चन्द्रोदयादिभिः ॥४४७॥
विभातायां विभावर्यां वर्याङ्गर्जितमन्मथाः। पृथ्वीनाथा अथाऽभ्येयुः सर्वे पूर्वनिमन्त्रिताः ॥४४८॥
ततः श्रीविक्रमो राजा नृपानेतान् ससंभ्रमम्। सर्वान् संमानयामास रम्यावासप्रदानतः ॥४४९॥
इतो भुवनभानुं तमुपेत्य नृपनन्दिनः। इत्युपश्लोकयन्ति स्म प्रभाते सौप्रभातिकाः ॥४५०॥
जय जय नृपपुत्र! सच्चरित्रैः पवित्रः परिहर बहुनिद्रां मोहराजेन्द्रमुद्राम्।
वितनु तनुविशुद्धिं निर्मलां स्वां च बुद्धिं स्मर जिनवरमन्तः पुण्यकृत्यैरनन्तः ॥४५१॥
इत्थं जागरितः प्रातःकृत्यं कृत्वा नृपाङ्गजः। राज्ञोऽमात्यैर्मुदा निन्ये स्वयंवरणमण्डपम् ॥४५२॥
गरिष्ठेषु निविष्टेषु तत्र भूपेषु भूरिषु। आसांचक्रे कुमारोऽपि चारुचामीकरासने ॥४५३॥
ललनाभिः कृतोद्धुलालनाभिर्वृताऽथ सा। हंसीव कलकण्ठीभिरागात् कर्पूरमञ्जरी ॥४५४॥
राधास्तम्भमथोपेत्य पूजयित्वा प्रमोदतः। तस्थौ सुस्थमनास्तत्र बालिका धृतमालिका ॥४५५॥
दिवाकराभिधो विप्रः प्राह भूमीपतीनथ। विधाय राधावेधं भोः! कन्येयं परिणीयताम् ॥४५६॥
एवं दिवाकरेणोक्ते शक्तिमन्तोऽपि केचन। राधावेधाय नोत्तस्थुर्विलीनविषयस्पृहाः ॥४५७॥
तत्र केचिदनात्मज्ञा उत्थायोर्वीशसूनवः। अपराद्धेषुतां[1] प्राप्य जग्मुस्ते हास्यपात्रताम् ॥४५८॥
श्रीविक्रमस्य संकेताद् विप्रः सोऽथ दिवाकरः। वीरं भुवनभान्वाख्यं तमुदस्थापयज्जवात् ॥४५९॥
मण्डलापितकोदण्ड-मण्डितापतसायकः। राधालीढमनाः मत्या-लीढस्थानं स तस्थिवान् ॥४६०॥

१ अपराद्धबाणताम्।

( भुवनभानुना राधावेधः कृतः— )

युवचित्तैश्च चक्रैश्च विभ्रमद्भिर्वृतामपि। कन्यां राधां च विव्याध सौभाग्येन शरेण च ॥४६१॥ वरमालां वरस्याऽस्य कण्ठे क्षिप्त्वा पतिंवरा। यावद् दूरतरौ चक्रे करौ वेपथुमन्थरौ ॥४६२॥ तावच्च,

(कश्चिद् देवः— ) विनापराधं मे पुत्रो वत्से! बद्धः कथं त्वया। वदन्निति दिवः कोऽपि देवः प्रादुरभूत् पुरः ॥ देववाणीमिति श्रुत्वा पाणी संयोज्य विक्रमः। नृपः प्रोवाच गीर्वाण! किमेष तनयस्तव ॥४६४॥ जगाद निर्जरः सोऽथ स्वरूपं मम भूपतेः। शृणु त्वं निश्चलीभूय भूयसः किल कौतुकात् ॥४६५॥

( काञ्चनपुरम्— ) अहं भीमनृपोऽभूवं श्रीकाञ्चनपुरे पुरा। अयं भुवनभान्वाख्यस्तनयः सनयो मम ॥४६६॥ कारणेनैष केनाऽपि सुतो देशान्तरं ययौ। अहं तु हन्तुमारेभे दुःखादात्मानमुत्सुकः ॥४६७॥

( चित्राङ्गदः साधुः— नृसिंहो नृपः— )

तदा चित्राङ्गदः साधुर्मामेत्य प्रत्यबोधयत्। नृसिंहं स्वं सुतं राज्येऽभिषिच्याऽग्रहिषं व्रतम् ॥४६८॥ भावना द्वादश श्रुत्वा व्याख्यानेऽहं गुरोर्मुखात्। मत्वाऽसारं च संसारं विधृत्वाऽनशनं मृतः ॥४६९॥ सौधर्म्यादथ सौधर्मे कल्पेऽहमभवं सुरः। दृष्ट्वाऽमुं सात्त्विकं पुत्रं ज्ञानेनाऽत्र समागतः ॥४७०॥ आगतोऽत्र सुतं माला-बद्धं कन्यकयाऽनया। प्रेक्ष्याऽहं सहसा राजन्निषेधं कृतवानिह ॥४७१॥ यतः—

लब्धेऽपि सुमानुष्ये संप्राप्ते पाप-पुण्यनैपुण्ये। यो यतते न यतित्वे तिर्यक्त्वादौ स किं कर्ता ॥४७२॥ अन्यच्च,

दानं नाऽभयदानतस्त्रिभुवने शीलव्रतान्न व्रतं संतोषान्न सुखं न मर्मवचनादन्यच्च तीव्रं विषम्। तृष्णाया अपरं लघुत्वमपि नो धर्मान्निधिर्नापरः स्त्रीपाशान्न परोऽस्ति पाश इह भोः! कारा भवान्नापरा

ततो भो! विक्रमोर्वीश! पुत्रमेनं सुधार्मिकम्। चारित्रं ग्राहयिष्यामि त्याजयिष्यामि संसृतिम् ॥४७४॥ ॥२५०

इत्युक्त्वा विरतस्याऽस्य देवस्य स्वपितुः पदे। नत्वा भुवनभानुः स प्रोवाच स्वच्छधीर्वचः ॥४७२॥
महीयसाऽत्र मोहेन मुह्यमानं मनो मम। त्वया तात! परित्रातमहो! वात्सल्यमद्भुतम् ॥४७३॥

(देव-विक्रमयोः सलापः—)

अथ श्रीविक्रमो राजाऽभ्युत्थाय निजविष्टरात्। शेखरीकृत्य हस्तौ च निजगाद सगद्गदम् ॥४७७॥
रतिं जयन्ती रूपेण वैजयन्ती कुलौकसः। सुतेयं मम सुतस्तेऽयं पुण्येन प्रवरो वरः ॥४७८॥
वरे वरवधूकेऽस्मिन् लावण्यामृतवारिधौ। निश्चलीभूय देवेन्द्राऽनिमिषत्वं कृतार्थय ॥४७९॥
मत्पक्षिभिर्वाञ्छ्यमानः कन्योद्वाहसुरद्रुमः। सुमनस्त्वयि दृष्टेऽपि फलत्यद्यापि किं न भोः! ? ॥४८०॥
इत्युदित्वा नृपं पाद-प्रणतं प्रेक्ष्य सोऽमरः। उत्थाप्य निजपाणिभ्यामालिङ्ग्य प्राह साञ्जसम् ॥४८१॥
तव संश्लेषवाक्येन परितुष्टोऽस्मि भूपते!। यत् त्वं कथय तच्छीघ्रं करोम्येव नरोत्तम! ॥४८२॥
राजा प्रोवाच देवेन्द्र! तव वाक्येन धर्मिणा। संसारमोहसुप्तोऽद्य ममाऽऽत्मा प्रतिबोधितः ॥४८३॥
किन्तु पुत्रस्तवैवाऽयं यदि राज्यमिदं मम। त्वद्वाक्येन वधूयुक्तः पाति द्वादशवत्सरीम् ॥४८४॥
तदादाय व्रतं पोतं निस्तरामि भवाम्बुधिम्। मध्येभूय विवाहं तत् कारयाऽऽशु सुरोत्तम! ॥४८५॥
इत्थमभ्यर्थितो राज्ञा तथेति प्रतिपद्य सः। देवः कुमारीवीवाहं कारयामास हर्षितः ॥४८६॥
अथो विवाहे निर्वृत्ते भीमदेवे च तस्थुषि। वरं कर्पूरमञ्जर्या राजा राज्ये न्यवेशयत् ॥४८७॥ ततश्च,
(विक्रमो राजर्षिः—) गुरोर्धर्मप्रभाख्यस्य पादान्ते दान्तचेतसा। व्रतं जग्राह कुग्राहरहितोऽरिहितो नृपः ॥४८८॥
अथो विक्रमराजर्षिं नीत्वा भीमसुरोत्तमः। रङ्गशालापुरीमध्यमागाद् भुवनभानुना ॥४८९॥

१-हे देवेन्द्र!। २ पक्षिणः-स्वजनाः, खगाश्च

देवो भुवनभानुं तमथाऽऽह स्मेरलोचनः । वत्स ! द्वादशवर्षेभ्यस्त्याज्यं राज्यं त्वया ध्रुवम् ॥४९०॥
तयेरयथ कुमारेण प्रोक्ते भुवनभानुना । दिवं विद्योतयन् देवो महसा सहसाऽगमत् ४९१॥
(भीमविहार.—) पितुः पुण्याय वैडूर्य-मयीं मूर्तिं जिनेशितुः । नव्ये भीमविहारेऽसौ न्यधाद् भुवनभानुराट्॥
मित्रं दिवाकरविप्रमसौ भुवनभानुराट् । पूजाधिकारिणं तत्र चक्रे वक्रेतराशयः ॥४९३॥
अथो वसुमतीं शासन्नसौ वसुमतीपतिः । आत्मानं सुमतीकुर्वंश्चक्रे वसुमतीः प्रजाः ॥४९४॥
(कर्पूरमञ्जरीगर्भधारणम्—) अथ स्वल्परजोभावा राजयोग्यमुपेयुषी । कर्पूरमञ्जरी गर्भं सत्त्वं प्रकृतिवद् दधौ ॥
राज्ञी सैवाऽन्यदा राज्ञा सौधमूर्ध्नि निषेदुषी । दर्शं दर्शं रविबिम्बं रुदन्ती ददृशे भृशम् ॥४९६॥
(कर्पूरमञ्जर्या दोहदः— )
पार्थिवोऽपि पुरोभूय प्रोचे प्रेमपरः प्रियाम् । अयि ! ते दयिते ! चित्ते विद्यते दुःखमद्य किम् ? ॥४९७॥
अथाऽसौ प्राह मन्दाक्षं मन्दाक्षरमदो वचः । जिनं भानुविमानस्थं नन्तुं मोहो हृदः प्रियः ॥४९८॥
राजा भुवनभानुः स स्पष्टमाचष्ट तुष्टहृत् । रम्यामेनां स्पृहां देवि ! पूरयिष्यामि ते ध्रुवम् ॥४९९॥
मा ताम्य भामिनि ! तत इत्युदित्वा धराधवः । स्वदुकूलाञ्चलेनैव निर्ममार्ज प्रियामुखम् ॥५००॥
प्रियां प्रेमामृतप्रीतामेवं कृत्वा नरेश्वरः । धरणेन्द्रदत्ते पदयोः पादुके अथ पर्यधात् ॥५०१॥
धरणेन्द्रप्रदत्तं च शीता-ऽऽतपनिवारणम् । परिधाय वस्त्रयुग्मं हुंकारमकरोन्नृपः ॥५०२॥
( भुवनभानुर्भानुविमानं प्राविवेश— )
अवलान्तरताप-वाताभ्यां सद्य आस्कन्द्य रोदसीम् । पादुकाभावतो भानु-विमानद्वारमीयिवान् ॥५०३॥

१ धनयुताः ।

आयान्तं दूरतो दृष्ट्वा भूपं भुवनभानुकम्। अभ्युत्तस्थौ रविर्देवः कस्य मान्यो हि नाऽतिथिः ? ॥५०४॥

( भानु-भुवनभान्वोः संलापः— )

पदप्रणम्रं पृथ्वीशमुत्थाप्याऽऽश्लिष्य हर्षतः। दिव्यासने निविश्याऽग्रे रविः कोमलमालपत् ॥५०५॥
४ आगमोपक्रमेणैवं सहसा साहसिन्नहो !। यथा त्वया मोदितोऽहं तथा कार्येण मोदय ॥५०६॥
राजा प्रोवाच देवेन्द्र ! ज्ञानात् कार्यं ममाऽखिलम्। जानन्नपि कथं मर्त्य-व्यवहाराय पृच्छति ॥५०७॥
सूर्यदेवः क्षणं मौनमालम्ब्य प्रोचिवान् पुनः। अत्र श्रीजैनमूर्तिं किं विवन्दयिषसि प्रियाम् ॥५०८॥

( कर्पूरमञ्जरी अपि भानुविमाने गता— )

८ आनेष्यामि ततोऽत्रैव वधूं कर्पूरमञ्जरीम्। इत्युदित्वा दिव्यशक्त्या तत्र तां रविरानयत् ॥५०९॥
अकस्मादागतां प्रेक्ष्य प्रियां कर्पूरमञ्जरीम्। अहो ! शक्तिरहो ! शक्तिरिति भूपो विसिस्मिये ॥५१०॥
इतो भर्तारमालोक्य हृष्टा कर्पूरमञ्जरी। ततो विनयतः सूर्यमिन्द्रं यावन्ननाम सा ॥५११॥
( सूर्यपत्नी रत्ना— ) सूर्याग्रमहिषी तावद् रत्ना देवी ससंभ्रमा। आलिलिङ्ग समागत्य राज्ञीं कर्पूरमञ्जरीम् ॥
२ भूपं भुवनभानुं तमथो भूयः सुरेश्वरः। विधृत्य पाणौ प्रासादे जैने प्रावेशयद् मुदा ॥५१३॥
देवीचतुःसहस्रैः सा धृता रत्नाभिधाऽमरी। कर्पूरमञ्जरीं जैने मन्दिरेऽस्मिन् निनाय ताम् ॥५१४॥
द्वारे द्वारेऽथ चत्वारि मध्ये चाष्टोत्तरं शतम्। इत्यानर्चाऽर्हतो मूर्तीः स विंशतिशतं नृपः ॥५१५॥
अथो सभासु त्रिद्वारभूषितास्वपि पञ्चसु। षष्टिसंख्याः स आनर्च जिनमूर्तीर्मणीमयीः ॥५१६॥
एवं जिनेन्द्रबिम्बानि विमाने शाश्वतान्यसौ। आनर्च सूर्यसौहार्दात् तत्राऽशीतिशतं नृपः ॥५१७॥
इत्थं कर्पूरमञ्जर्याः संपूर्णे दोहदे नृपः। नत्वा स्तुत्वा रविं देवं नगरीमाययौ निजाम् ॥५१८॥

( कर्पूरमञ्जरी सुरवल्लभं सुतमसूत )

कर्पूरमञ्जरी साऽथ प्रमोदामृतपूरिता । संपूर्णसमयेऽसूत सुतमद्भुततेजसम् ॥५१९॥
सुरवल्लभ इत्याख्यां सत्यां तस्य ददौ नृपः । उपाध्यायादधीतश्च जज्ञे स दशवार्षिकः ॥५२०॥
देववल्लभनामानं निजे राज्येऽथ तं सुतम् । निधाय भूपतिः पत्न्या सहितो व्रतमग्रहीत् ॥५२१॥

( भुवनभानुर्मुनिः— ) तदा गुणाकरो विप्रः प्राव्राजीत् स्वामिना समम् । मुनिर्भुवनभानुश्च प्राप सूरिपदं क्रमात् ॥५२२॥

( मुक्तिं गतौ कर्पूरमञ्जरी-गुणाकरौ— )

गुरौ भुवनभान्वाख्ये भवव्याख्यां वितन्वति । ते गुणाकर-कर्पूरमञ्जर्यौ ज्ञानमापतुः ॥५२३॥
तयोः संप्राप्तयोर्मोक्षे सूरिर्भवविरागतः । संलेख्याऽनशनं कृत्वा द्वादशस्वर्गमीयिवान् ॥५२४॥

( गजपुरं पुरम्— ) भोगान् भुक्त्वा ततश्च्युत्वाऽमुष्मिन् गजपुरे पुरे । महासेनस्य पुत्रोऽभूदयं विजयसेनराट् ॥

। इति विजयसेनमण्डलेशस्य पूर्वभवः ।

इतो दिवाकरो विप्रो भीमविहारसंस्थितः । अभुञ्जन् देवतद्रव्यं चिरं चक्रे जिनार्चनम् ॥५२५॥
विवर्धमानभावोऽयं जिनपूजां दिने दिने । चारु चारुतरां चक्रे तत्र विप्रो दिवाकरः ॥५२७॥
षण्मासशेषे संजाते तस्य विप्रस्य जीविते । प्रकृतेश्च विपर्यासाद् धर्मभावः क्षयं ययौ ॥५२८॥

( देवपूजाकारी दिवाकरो देवद्रव्यभोजी— )

ततो निर्धर्मभावत्वाद् देवद्रव्यं बुभोज सः । पूर्णे च जीविते मृत्वा बभ्रामाऽसंख्यशो भवान् ॥५२९॥

( स च दिवाकरो मृत्वा गुणागमः श्वा जातः— )

भ्रान्त्वेत्थं विप्रजीवोऽत्र श्वानो गजपुरेऽजनि । देवद्रव्योपभोगो हि दुरन्तो निश्चितं भवेत् ॥५३०॥

तथाऽऽगमः—( संबोधप्रकरणगतं गाथाकदम्बकम्- )

| | |
|---|---|
| "भक्खेइ जो उविक्खेइ जिणदव्वं च सावओ। | भक्षयति य उपेक्षते जिनद्रव्यं च श्रावकः। |
| पुण्णहीणो भवे जो उ लिप्पए पावकम्मणा॥ | पुण्यहीनो भवे (भवेद्) यस्तु लिप्यते पापकर्मणा॥ |
| आयदाणं जो भंजइ पडिवन्नधणं न देइ देवस्स। | आयदानं यो भनक्ति प्रतिपन्नधनं न ददाति देवस्य। |
| नस्संतं समुविक्खइ सो वि हु परिभमइ संसारे॥ | नश्यत् समुपेक्षते सोऽपि खलु परिभ्रमति संसारे॥ |
| चेईयदव्वं साहारणं च जो दुहइ मोहियमईओ। | चैत्यद्रव्यं साधारणं च यो द्रुह्यति मोहितमतिकः। |
| धम्मं च सो न याणेइ अहवा बद्धाऊओ नरए॥ | धर्मं च स न जानाति अथवा बद्धायुष्को नरके॥ |
| चेईयदव्वविणासे तद्दव्वविणासणे दुविहभेए। | चैत्यद्रव्यविनाशे तद्द्रव्यविनाशने द्विविधभेदे। |
| साहू उविक्खमाणो अणंतसंसारिओ होइ॥ | साधुरुपेक्षमाणः—अनन्तसंसारिको भवति॥ |
| जिणप्पवयणवुड्ढिकरं पभावगं नाण-दंसणगुणाणं। | जिनप्रवचनवृद्धिकरं प्रभावकं ज्ञान-दर्शनगुणानाम्। |
| रक्खंतो जिणदव्वं परित्तसंसारिओ होइ॥५३५॥ | रक्षन् जिनद्रव्यं परीतसंसारिको भवति॥५३५॥ |
| जिणप्पवयणवुड्ढिकरं पभावगं नाण-दंसणगुणाणं। | जिनप्रवचनवृद्धिकरं प्रभावकं ज्ञान-दर्शनगुणानाम्। |
| वड्ढंतो जिणदव्वं तित्थयरत्तं लहइ जीवो॥" | वर्धयन् जिनद्रव्यं तीर्थकरत्वं लभते जीवः॥५३६॥ |

इत्थं ज्ञात्वा जिनेन्द्रस्य द्रव्यं धर्मधनैर्जनैः। येन केनाऽप्युपायेन वर्धनीयं सदैव हि॥५३७॥

(विजयसेन-गुणारामयोः स्नेहकारणम्—)

देवद्रव्योपभोगोत्थ-कर्मणा श्वानजन्मनि। जीवो दिवाकरस्यैषोऽवततार नरेश्वर!॥५३८॥

तथा विजयसेनस्य चित्ते स्नेहभरो महान्। पूर्वजन्मनि संभूत-बहुसंगतितो ध्रुवम्॥५३९॥

हंहो! विजयसेन! त्वं यदा जिनमपूपुजः। तदा पूर्वभवाऽभ्यस्तः श्वानोऽसौ भृशमैक्षत॥५४०॥

भृशं ध्यायन्नसौ श्वानस्तदा श्रीजिनपूजनम्। पूर्वजन्म च सस्मार ध्रुवमासन्नसिद्धिभाग् ॥५४१॥
एवं विजयसेनस्य श्वानस्य च पुराभवौ। हंहो! सोमयशोराजन्! अस्माभिः कथिताविह ॥५४२॥
इत्युक्त्वा विरतस्याऽस्य पुण्डरीकगणेशितुः। प्रणनाम पुरोभूय श्वानः संविग्नमानसः ॥५४३॥

(गुणारामः उत्पुच्छयते—)

अत्युत्पुच्छयमानेऽस्मिन् नताऽऽस्ये शुनके चिरम्। ऊचे विजयसेनोऽथ प्रभो! किं कथयत्ययम्? ॥५४४॥
पुण्डरीकः प्रभुः प्राह भषणो ह्येष भूपते!। देवस्वस्वादजं पापं निन्दन्नस्तीति मानसे ॥५४५॥
अन्योपायैरपि प्राप्ये हा! धने दुर्धिया मया। देवद्रव्यं समास्वाद्य स्वात्मा दुःखे निपातितः ॥५४६॥
प्राप्ते नरत्वे दुष्प्रापे हा! प्रापे न मया शिवम्। दान-पूजाद्ययोग्योऽहं पशुरत्र करोमि किम्? ॥५४७॥

( गृहीतमनशनं गुणारामेण शुना— )

भवे पूर्वत्र भावेन प्रथमं यज्जिनोऽर्चितः। तेन मे पुण्यभावेन गुरुयोग्योऽधुनाऽजनि ॥५४८॥
गृहीत्वाऽनशनं तस्मात् संतोषामृतवारिधौ। आत्मानं स्नपयिष्यामि पूर्वं तृष्णाऽऽतपार्दितम् ॥५४९॥
एवं विचिन्त्य श्वानोऽयं पार्थिवेष्वितिवादिषु (?)। श्रीपुण्डरीको राजर्षिर्ददावनशनं शुनः ॥५५०॥
मनसाऽनशनं नीत्वा सभायाः शुनकोत्तमः। दूरं गत्वा स्मरन्नस्थाद् मन्त्रं श्रीपारमेष्ठिकम् ॥५५१॥
अथो विजयसेनोऽपि जातिं स्मृत्वा पुरातनीम्। पार्श्वे श्रीपुण्डरीकस्य ययाचे व्रतमादरात् ॥५५२॥
भगवान् पुण्डरीकोऽथ प्रोचे विजसेन! भोः!। गच्छन्ति(च्छामः) स्मो वयं सिद्ध-पर्वतं प्रति संप्रति ॥
(तीर्थानि-) "अट्ठावय-संमेए पावा-चंपाए उज्जलि नगे य। अष्टापद-संमेतेऽपापा-चम्पायाम् उज्ज्वले नगे च।

१ आप धातोः कर्मणि रूपम्।

वंदित्ता पुन्नफलं सयगुणियं तं पि पुंडरीए ॥५५४॥ वन्दित्वा पुण्यफलं शतगुणितं तदाऽपि पुण्डरीके ॥५५४॥
केवलनाणुप्पत्ती निव्वाणं जत्थ आसि साहूणं । केवलज्ञानोत्पत्तिर्निर्वाणं यत्र आसीत् साधूनाम् ।
पुंडरियं वंदित्ता सव्वे ते वंदिया तित्था ॥५५५॥ पुण्डरीकं वन्दित्वा सर्वाणि तानि वन्दितानि तीर्थानि॥
पडिमं चेइयहरं वा सित्तुंजगिरिस्स मत्थए कुणइ। प्रतिमां चैत्यगृहं वा शत्रुंजयगिरेर्मस्तके करोति ।
मुत्तूण भरहवासं वसइ सग्गे निरुवसग्गे ॥५५६॥ मुक्त्वा भरतवर्षं वसति स्वर्गे निरुपसर्गे ॥५५६॥
पूयाकरणे पुन्नं एकगुणं सयगुणं च पडिमाए । पूजाकरणे पुण्यमेकगुणं शतगुणं च प्रतिमायाम्— ।
जिणभुवणेण सहस्सं अणंतगुणं पालणे होइ ॥ जिनभुवनेन सहस्रम् अनन्तगुणं पालने भवति॥
किं बहुना ?
जं किंचि नाम तित्थं सग्गे पायाल-माणुसे लोए । यत् किञ्चिद् नाम तीर्थं स्वर्गे पाताल-मानुष्यके लोके।
तं सव्वमेव दिट्ठं पुंडरीए वंदिए संते ॥५५८॥ तत् सर्वमेव दृष्टं पुण्डरीके वन्दिते सति ॥५५८॥
अन्यच्च, पूर्वं भुवनभानुस्त्वं मातङ्गप्रेष्यतादिभिः । दुःखात् क्षोणिपते ! क्षीणकलुषः खलु तिष्ठसि ॥५५९॥
मन्दिरं मोहमदिरा-पूरितं परिहाय तत्। सुमनः[1] ! कुरु चारित्र-गङ्गायां स्नानमातरम् ॥५६०॥
(विजयसेनो मुनिः—) इत्यादेशं गुरोर्लब्ध्वाऽलुब्धबुद्धिर्भवे भृशम्। त्रिकोट्या सहितो निन्ये व्रतं विजयसेनराट्॥
(गुणारामस्य मरणम्—)
अथैकतानः स श्वानः स्मरन् पञ्चनमस्कृतिम् । प्रथमानयशाः पृथ्व्यां प्रथमं कल्पमीयिवान् ॥५६२॥
गुणारामस्य श्वानस्य देहं सोमयशा नृपः । आशु संस्कारयामास चन्दनाऽगुरुवह्निना ॥५६३॥

1 प्रतौ तु हे सुमनः ।

( गुणारामस्मृतये भगवतो विहारः— )

श्रीमान् सोमयशा नृपोऽस्य सुगुणैस्तुष्टः शुनः श्रेयसे श्रीनाभेयजिनेशबिम्बसकलं श्रीपुण्डरीकस्य च ।
मूर्त्या भूपितमुज्ज्वलं वरतरं प्रासादमुच्चैस्तरं सत्रागारचतुष्टयेन च धृतं हर्षेण सोऽचीकरत् ॥५६४॥

प्रासादे नृपतिविनिर्मितेऽथ तत्र संतोषात् किल मृगवेष एष देवः ।
जैनेन्द्रार्चनममरा–ऽमरीपरीतः संगीतप्रभृतिभिरुत्सवं च चक्रे ॥५६५॥

( सिद्धाचल जिगमिषुः पुण्डरीकः— )

अहो ! अंहोहीनाश्चलत जगतः साधव इति स्वशिष्यानादिश्याऽमलविमलशैलेश्वरमभि ।
युगादीशस्याऽऽद्यो गणधरवरोऽभूज्जिगमिषु–र्जगद्दृष्टयुन्मेषोद्यतवचनकर्पूरकलशः ॥५६६॥

(षष्ठः सर्गः-)[1]श्रीरत्नप्रभसूरिसूरकरतो दोषाभिषङ्गं त्यजन् यो जाड्यस्थितिरप्यनूनप्रतिदिनं प्रासादुद्भुतप्रातिभः ।
तेन श्रीकमलप्रभेण रचिते श्रीपुण्डरीकप्रभोः श्रीशत्रुंजयदीपकस्य चरिते षष्ठोऽथ सर्गोऽभवत् ॥५६७॥

॥ इति श्रीपुण्डरीकपुराणे श्रीविजयसेन–गुणाराजस्थानपूर्वभव–
वर्णनः षष्ठः सर्गः ॥

। सप्तमः सर्गः ।

( श्रीपुण्डरीको मथुरां अगाम- ) श्रीयुगादिजिनराजगुणेन्द्रः पुण्डरीकऋषिरेष महौजाः ।
साधुसंघसहितोऽवहितोऽन्त–राजगाम मथुरापुरपार्श्वम् ॥ १ ॥

१ अन्तःसावधानः ।

( धनः श्रेष्ठी- ) तत्र तिष्ठति धनो व्यवहारी दानवान् दम-दयाऽव्यभिचारी।

निर्ययौ प्रवरपौरपरीतः साधुवन्दनकृते स पुरीतः ॥ २ ॥

( देवदत्तः पुत्रः — ) देवदत्तमथ स स्वतनूजं रूप-यौवनकलाकलिताङ्गम्।

४ पुण्डरीकपदयोर्नमनाय श्रेष्ठिराट् सह तदैव निनाय ॥ ३ ॥

स्वर्गि-साधुसमवायसमेतं तं प्रति विमलशीलपथिस्थम्।

भक्तितोऽथ स धनः प्रणिपत्य कुड्मलीकृतकरो निजगाद ॥ ४ ॥

सद्गुरोऽत्र नगरेऽद्य गरेणोन्मूढमङ्गिनिचयं निजवाचा।

चेतनान्वितमहो ! सुधयेव त्वं जवात् समवसृत्य विधेहि ॥ ५ ॥

इत्यसौ वचनमस्य निशम्य यावदेव मनसा मुनिरस्थात्। तावदेव मणिपीठमकुण्ठो निर्ममौ हरिवेषसुरोऽपि॥

( धनः पुण्डरीकं पृष्टवान्— )

निर्मितेऽमरवरैर्मणिसौधे संस्थिते सकलसाधुसमूहे। तं प्रभुं विमलपीठनिविष्टं पृष्टवानिति धनो व्यवहारी॥

( वसुभूतिपुत्री विमला— ) देवदत्त इति मे तनयोऽयं श्रेष्ठिनोऽत्र वसुभूत्यभिधस्य।

पुत्रिकामुदवहद् विमलाख्यां कोमलां लवणिमाऽमलमूर्त्तिम् ॥ ८ ॥

( विमलायाः दुरभिगन्धत्वम्— ) सद्विवाहविधितोऽथ चतुर्थे वत्सरे मम वधूरमलाभा।

सर्वरोगरहिताऽपि नितान्तं साऽभवद् दुरभिगन्धशरीरा ॥ ९ ॥

---

१ वेष्टितः। २ स्वर्गिणो देवाः। ३ समूहः। ४ मोहविषेण। ५ निर्मलकान्तिः।

औपधेपु विविधेपु तदङ्गे लेपितेपु बहुशोऽपि सुवैद्यैः। वृद्धिमेव तदगाद् दुरभित्वं पापिनीव नृपतावपकीर्तिः॥
विस्तृतेऽखिलपुरेऽथ कुगन्धे तां नरेन्द्रवचनेन वधूटीम्। मुक्तवान् द्रुतमरण्यकृतेऽहं धामनि प्रचुररक्षकयुक्तम्[1]॥
तद्दिनाद् मम सुतोऽद्भुतदुःखात् त्यक्तचारुशयना–ऽऽसन–भोज्यः।
वत्सराष्टकमसाविति यावन्म्लानघूर्णनयनोऽतिनिनाय ॥ १२ ॥ किं बहुना ?
सा कुगन्धतनुरस्ति वधूः किं स्नेहवान् मम सुतश्च किमस्याम् ?।
त्वं प्रसह्य मनसि स्थितमद्य संशयं हर तमोहरमूर्ते ! ॥१३॥
(अवदत् पुण्डरीकः) सोऽवदन्निजकृतश्रवणाय तामिहाऽऽनय वधूं व्यवहारिन् !।
ऊचिवानयमथाऽतिकुगन्धामानयामि कथमत्र सभायाम् ॥१४॥
श्रेष्ठिना निगदिते वच एतद्धर्पितो हरिणवेपसुरोऽसौ। पुण्डरीकचरणौ स्नपयित्वा दिव्यनीरभरमार्पयदाशु[2]॥
स्वां स्नुषां मुनिपदस्नपनेनाऽनेन सिञ्च दुरभित्वविभित्त्यै।
सोऽमरस्तमनुशिष्य मुदैवं श्रेष्ठिनं परिपदो विससर्ज ॥१६॥
(दुरभिगन्धशरीरा विमला श्रीपुण्डरीकपदस्नपनेन सुगन्धशरीरा सती तत्सदसि आगता—)
पुण्डरीकपदनीरनिपेकात् स्वां स्नुषां शुचिसुगन्धशरीराम्।
आनयत् सदसि तत्र धनोऽसौ पूर्वजन्मकृतसंश्रवणाय ॥१७॥
(आललाप पुण्डरीकः—) दुःखितां कृतनमस्कृतिमेतां कोरकीकृतकरां विनिविष्टाम्।
संनिरीक्ष्य विशेपदयालुराललाप कलगीर्[3]मुनिराजः ॥१८॥

१. सप्तम्यन्तम्। २. क्रियाविशेपणम्। ३. मधुरभापायुतः।

पूर्वजन्म विमलाभिधवध्वा देवदत्ततनयस्य च सर्वम् ।
त्वं शृणु स्थिरमना व्यवहारिन् ! पाप-पुण्यफलनिश्चयनाय ॥१९॥
( शङ्खपुरम्, महसेनः, वसुमित्रः, कीर्तिमती- ) भो ! विदेहभुवि शङ्खपुरे प्राग् भूपतिः समभवद् महसेनः ।
निर्धनो वणिगभूद् वसुमित्रः कीर्तिमत्यजनि तस्य कलत्रम् ॥२०॥
( विमलबुद्धि-सुबुद्धी पुत्रौ— तत्सुतौ विमलबुद्धि-सुबुद्धी तिष्ठतो निजवधूद्वययुक्तौ ।
निर्धनावतिधनाध्यवसायं सर्वदा विदधतावपि गाढम् ॥२१॥
( कीर्तिमतीस्वप्नः— ) अन्यदाऽस्य वणिजोऽथ दरिद्रस्याऽपि धर्मनिरतस्य तु भार्या ।
हरितराजमधिरूपमपश्यद् वीतरागममलं निशि सुप्ता ॥२२॥
प्रातरुत्थितवती निजभर्तुः पार्श्वमेत्य किल कीर्तिमती सा ।
वक्ति यावदतिफुल्लविनेत्रा तावदाश्वऽजनि तु क्षुतमग्रे ॥२३॥
( स्वप्नपाठकः— ) तन्निशम्य पुरतः क्षुतमेषा स्वप्नमेनमनिगद्य तदग्रे ।
चारुपुष्पफलपूरितपाणिः स्वप्नपाठकसमीपमियाय ॥२४॥
स्वप्नमेनमनया अभिहितं स स्वप्नविद् निगदति स्म विचार्य। अङ्गजस्तव भविष्यति भूपः सर्वलोचनमदप्रदरूपः
स्वप्नपाठकममुं पुनरेषा श्रेष्ठिनी प्रमुदिताऽथ बभाषे ।
किं प्रियस्य पुरतो निगदन्त्या मे क्षुतं कथमभूत् कथयेति ? ॥ २६ ॥

१ क्षुतम्-छींक-छिंक ।

सोऽप्युवाच शृणु सुन्दरि ! शीघ्रं यत् क्षुतं तव पुरो हि तदाऽभूत् ।
पुत्रराजसमये पितृमृत्युं सूचयत्यहह ! तद् दुरुदर्कम् ॥२७॥
स्वप्नपाठकवचस्त्विति सर्वं संनिशम्य धृतहर्ष-विषादा ।
मन्दिरं स्वमियमेत्य सुखेनाऽपूरयत् सकलगर्भदिनानि ॥ २८ ॥
( कीर्तिमती सुषुवे सुतम्— ) साऽथ पूर्णसमये परिपूर्णं सोमसौम्यसुभगं सुभगाङ्गम् ।
नन्दनं प्रसुषुवे जननेत्राऽऽनन्दनं प्रमुदितोच्चमुहूर्ते ॥२९॥
वालनालमथ तत्र निधातुं धात्र्य उल्लिलिखुराशु सुधात्रीम् ।
स्वर्णपूर्णकलशः किल तूर्णमुन्ममज्ज च तदा प्रमदाय ॥३०॥
( गज इति नाम पुत्रस्य— ) हैमकुम्भमथ तं समवाप्य वर्धमानधन-धान्यसमूहः ।
श्रेष्ठिराट् स विदधे विधिनाऽस्य स्वाङ्गजस्य गज इत्यभिधानम् ॥३१॥
पूर्वशैलशिखरस्य इवार्कः कल्पवृक्ष इव मेरुशिरस्थः । ज्योतिषा च वपुषा निजवंशेऽनुक्षणं प्रववृधे शिशुरेषः
( गजो युवा— ) सर्वशास्त्रनिचये समधीती सत्कलासु विदिती सकलासु ।
संगती सरलसाधुसमूहे यौवनं शुचिवयाः स समूहे ॥३३॥
( गजस्य प्रतापः— ) दानतः सुकृततोऽथ यथाऽत्र तत्प्रताप उदयं समवाप ।
भ्रातरौ सु (स्व) मनसः कुमुदत्वं चक्रतुर्ननु तथा अडेतोत्थम् ॥३४॥

१ दुष्ट उदर्को यस्य तद् दुरुदर्कम्–तत् । २ सुभूमिम् । ३ समुदवहत् । ४ कुत्सितं मुदत्वमपि । ५ जलत्रोत्थमपि ।

सद्‌शाढ्यममलं कुलदीपं सोदरौ हृदि यथा दधतुस्तम् । एतयोर्हृदि महामलिनत्वं मन्दमन्दमुदियाय तथोग्रम्॥

(गजप्रतापमसहमानौ तस्य ज्येष्ठौ भ्रातरौ—) अन्यदा रहसि तौ पितरं स्वमित्थमाहतुरितीव सरोषौ ।

अर्जयाव इह सद्धनमावां दुर्व्ययं तु कुरुते लघुरेषः ॥३६॥

अर्णवोत्तरणमीश्वरसेवां दुर्गमार्गगमनं सुधियोऽपि ।

यत्कृते विदधते हि धनं तत् दुर्धियो विगमयन्ति मुधा हि ॥३७॥

येन बन्धु-नृप-मन्त्रिषु मानं यच्च भोग-सुभगत्वनिधानम् ।

यच्च दुस्समय-दुःखविनाशि तद्धनं न निधनं नयनीयम्॥३८॥

बाल एष तु यथा धनहानिं लीलया प्रतिदिनं विदधाति ।

आवयोर्मनसि तात ! तथैवाऽदीप्यऽतो बहुविषादहुताशः ॥३९॥

श्रेष्ठ्युवाच तनयौ लघुकोऽयं सोदरोऽपि युवयोः शुभदृष्ट्या ।

दानतोऽतिमहितो नगरे यत् तद् यशो निजकुलस्य पवित्रम् ॥४०॥

(सजनको गजो ज्येष्ठभ्रातृभ्यां पृथक्कृतः) चेद् भवेन्न युवयोर्हृदि सौख्यं तत् पृथक्कुरुत तं द्रुतमेतम् ।

इत्यवाप्य जनकस्य वचस्तौ चक्रतुः स्वधनपञ्चविभागान् ॥४१॥

ऊचतुश्च जनकं ननु तात ! त्वं भविष्यसि तु कस्य गृहान्तः ।

श्रेष्ठिना निगदितं लघुपुत्रस्यौकसि स्थितमहं प्रविधास्ये ॥४२॥

१ दीपि हि घृते गवाक्षे मांसिन्यमेव जायते—अतोऽत्र कुलदीप-दीपयोः साम्यम् । २ अदीपि । ३ गृहे ।

तौ गजाय जनकाय जनन्यै श्रीनिति प्रददतुर्धनभागान् ।
अत्र चाह गज एप कुमारो नात्मभागधनमेस्मि नयामि ॥४३॥
पूर्वजन्मनि कृतं सुकृतं स्यात् यद् धनं बहु भवेदधनस्य ।
अन्यथा निजजनैरपि दत्तं याति पाणितलतश्चपलत्वात् ॥४४॥
सोदरावपि युवां कुरुतश्चेद् दूरगं निरपराधमपीह ।
श्रीरियं सहजचापलयुक्ता दूरयिष्यति कथं न हि मां तत् ॥४५॥
( गजेन न गृहीतः स्वधनविभागः— ) एवमेव स निगद्य वितीर्य स्वं धनं निजसहोदरयोस्तत् ।
संयुतोऽथ जनकेन जनन्या तस्थिवान्निजगृहे गज उच्चैः ॥४६॥
स्नाननिर्मलतनुः शुचिवासाः प्रातरेव परिपूज्य जिनेन्द्रम् ।
नित्यशो नवनवैः शुचिकाव्यैः स्तौति शुद्धहृदयो हृदयालुः ॥४७॥
( गजस्य मातापितृसेवा— ) भक्तितः समशृणोद् मसृणोऽन्तः साधुराजवदनाज्जिनधर्मम् ।
आरराध पितरौ च विनीतः सोऽनिशं सुभविको भवभीतः ॥ ४८ ॥
( गजस्य धनार्जनाय प्रवासेच्छा— ) अन्यदा स्वजनकं स जगाद मां धनार्जनविधौ विसृजाऽऽशु ।
युज्यते पितृधनस्य च भोगो मातुरङ्कशयनं च न यूना ॥४९॥
श्रेष्ठ्युवाच लघुरेव कुमारो देहि भुङ्क्ष्व च धनं त्वमदोषः ।

१ अहमर्थे । २ अन्तः कोमलः ।

सोऽवदत् पितरहं धनहृतायाम्ययश्यमुदधा वहनन ॥५०॥

गच्छतो मम कदापि समुद्रे दुर्गमे भवति चेदथ विघ्नम्।
धर्मकृत्यमिह किं विदधामि त्वत्प्रियं तदधुना वद तात! ॥५१॥

(प्रवासमङ्गलाय जीर्णजिनगृहोद्धारः—) धर्मकृत्यमतुलं तव वाक्याच्चेद् विधाय जलधावपि यामि।
ते सुखं मनसि मे व्रजतः स्याच्छम्बलं परभवे च भवेत्ते ॥५२॥

इत्थमङ्गजवचः स निशम्य श्रेष्ठ्युवाच मुदितः शृणु वत्स!।
मित्रमत्र मम स व्यवहारी श्रीधरः समजनिष्ट विशिष्टः ॥५३॥

तेन पुत्ररहितेन सुभावात् कारितं जिनगृहं गुरु चारु।
दुस्समीरणसमीरणतस्तज्जर्जरं समभवत् समयेन ॥५४॥

वत्स! तन्मम वयस्ययशोवद् जैनगेहमिदमुद्धर पुण्यम्।
स्यां यथाऽहमनृणोऽस्य च सख्यात् त्वं सुपुत्र! भव पुण्यनिधिश्च ॥५५॥

इत्यवाप्य वचनं स्वपितुस्तद् जैनमन्दिरमसौ गजराजः।
उद्दधार कनकस्य सुकुम्भैः सस्मिताऽऽननसहस्रमिवोच्चैः ॥५६॥

(गजजनकेन कृत तपः—) वासनाशुचिमना वसुमित्रश्रेष्ठिराड् विहितवानुपवासान्।
अष्ट चाष्ट दिवसान् स गजोऽपि निर्ममौ विततमुत्सवमत्र ॥५७॥

---

१ प्रवहणेन। २ पाथेयम्। ३ ते—तव।

( तपसः पारणे भोजनोत्सवः— ) पारणस्य दिवसेऽथ गजोऽयं धर्मिणो नु विजनानभिमन्त्र्य ।
बन्धुवर्गमखिलं च गृहे स्वेऽभोजयद् विविधभक्तिभरेण ॥५८॥
( ज्येष्ठभ्रातृभ्यां दत्तं विषं गजस्य— ) पारणेऽथ विहिते निजपित्रा भोजनं विदधतोऽस्य गजस्य ।
भ्रातरौ गरलमिश्रितघोलं भाजने निदधतुर्दरोपौ ॥५९॥
गर्वतः श्रुतमहो ! कृपणत्वात् श्रीभरः सुमहिमाऽनृतवाक्यात्
दम्भतः सुकृतिता नृपसेवा दूष्यते ननु यथाऽतिजडत्वात् ॥६०॥
( पीतविषमिश्रघोलो गजो विचेताः— ) दूषितं गरलतः किल घोलं तत् तथैव निपपौ स च यावत् ।
म्लानघूर्णितमुखा-ऽक्षिपयोजस्तावदेव समभूद् गतचेताः ॥६१॥
सर्वसाधुहृदयानि गृहीत्वा गच्छति द्रुततरं परलोके ।
आकुलः कलकलः किल लोकस्याऽऽकुलस्य तदैव प्रससार ॥६२॥
तत्र जाङ्गुलिक-मान्त्रिकवैद्यान् यावदाह्वयति सज्जनवर्गः ।
तावदेष विनिमीलितनेत्रो नीलमूर्तिरपतद् वसुधायाम् ॥६३॥
बन्धुवर्गसहितो वसुमित्रः श्रेष्ठिराड् विपुलदुःखभृतोऽन्तः ।
रोदिति स्म किल तद्गुणरत्नश्रेणिमेष गणयन्निव साराम् ॥६४॥
चारुता चतुरता प्रशान्तता धर्मिता प्रणयिता पवित्रता ।
भोगिता सुभगता गुणज्ञता दानिता भवंति यांति याति ही ॥६५॥

१ निजपित्रा सह । २ अक्षिकमलम् । ३ सप्तम्यन्तम् ।

(आगतः कश्चिद् दिव्यो मयूरः— ) इत्थमत्र विधुरे बहुमित्रश्राद्धाने प्रजयति स्वजने च ।
चित्तचित्रजननोऽतिविचित्रो व्योमतोऽवतरति स्म मयूरः ॥६६॥
विस्मयेन नयनानि जनानां निर्मितानि विततानि तथोच्चैः ।
निस्ससार सहसैव स शोकः पीवरोऽपि च यथा हृदयेभ्यः ॥६७॥
हेमभूषणविभूषितकण्ठो व्यात्तपक्षनिचयः स मयूरः । मूर्छितेऽथ गरलेन गजाङ्के दिव्यनीरकणिकाः प्रववर्ष ॥
(मयूरेण गजः सचेतः कृतः— ) विस्मितस्तिमितदृष्टिभिरुच्चैर्वीक्षितः सपदि दिव्यमयूरः ।
तं गजं समभिषिच्य पयोभिर्निर्विषं विहितवान् हितबुद्धिः ॥६९॥
जृम्भमाणवदने स्मितनेत्रे प्रोत्थितेऽथ गजनाम्नि कुमारे ।
उत्सवो रविरिवाऽभ्रविमुक्तो बन्धुहर्षभरतः प्रदिदीपे ॥७०॥
किं गजस्तरलितो गरलेन को मयूर इह किं समुपेतः ।
किं जहार विषमं विषमित्थं व्यापमाप हृदि संशयवल्ली ॥७१॥
इतश्च— (गजा महसेनेन भुवा दिव्यवाणी—) भूपतिं सपदि जागरयन्ती निर्मलं नयपथं च दिशन्ती ।
अन्तरिक्षतलतोऽतुलतोषा गीरभीरसुरभीरतराऽभूत् ॥७२॥
"शासति त्वयि भुवं महसेनक्षोणिपाल ! समभून्नयलोपः ।
तद् व्रजामि नगरात् तव शीघ्रं नैव पातकमिहेक्षितुमीशे" ॥७३॥

१ मृगाम् । २ अभीः–भयरहिता । ३ असुराणां भियं ईरयति अतिशयेन सा असुरभीरतरा ।

(राज्ञा सर्वे पौरमुख्या आहूताः—) तद्वचश्चिरुदितं स निशम्य क्ष्मापतिः पतितगर्वमलोऽन्तः ।
स्नानतः सुवसनानि वसानोऽजूहवत् सकलपत्तनमुख्यान् ॥७४॥

सर्वपौरसहितोऽथ गजोऽयं केकिनं च कलयन् करपद्मे ।
द्वारपालविनिवेदितमार्गोऽभ्येत्य तं नरपतिं प्रणनाम ॥ ७५ ॥

(तस्य दिव्यमयूरस्य वृत्तान्तम्—) 'को मयूरः' इति भूपतिपृष्टे तं जगाद स गजो नरराजम् ।
बन्धुरं गरंहरं मम बन्धुरङ्गदं ह्यमुमवैमि न चाऽन्यत् ॥७६॥

(समस्तसेनाः सर्वे यक्षमन्दिरे गताः—) इत्युदीरितमथाऽस्य निशम्य नागरान्नरपतिर्निजगाद ।
मत्पुराधिपमहेश्वरयक्षस्याऽर्चनाय चलत स्थिरभक्त्या ॥७७॥

इत्युदीर्य वरपौरपरीतो वाजिनं समधिरुह्य नरेन्द्रः । आययावथ महेश्वरयक्षस्यालये सफलशीलपरीते ॥

तं सुरं नरपतिः परिपूज्य कुड्मलीकृतकरोऽवददुच्चैः ।
यक्षराज ! मम पत्तननाथ ! ब्रूहि दुर्नय इहाऽस्ति क एषः ? ॥ ७९ ॥

ततश्च— (यक्षवाणी—) मौलिमूलविलसन्मणिमूलिश्चण्डकुण्डलविमण्डितगण्डः ।
हारहारिहृदयोऽथ सुयक्षः प्रादुरास सुविहासविलासः ॥८०॥

यक्ष एष वसुधाधिपमूचे त्वं नरेन्द्र ! वचनं शृणु सर्वम् ।
प्राग् मया रजतशैलगतेन केवली ललितमूर्तिरवन्दि ॥८१॥

---

१ विषहरम् । २ बन्धुहर्षदम् ।

(नैवो स्वचरः —) रूपचन्द्र इति खचरराजोऽस्य ... 

पृष्टवान् मम यतो रजताद्रि-स्वामिताऽजनि कुतोऽद्भुतपुण्यात् ॥८२॥



(स्वचरः श्रीधरजीवः—) साधुराह भवता जिनगेहं श्रीधराख्यभवमाश्रयताऽग्रे ।

४ कारितं सुगुरुशङ्कपुरे यत् तेन तेऽजनि विभुत्वमुदग्रम् ॥८३॥

तत् क्रमेण पतयालु च जीर्णं स्वव्ययस्यतनुजेन गजेन ।

उद्धृतं निजधनव्ययमुग्रं संविधाय विधिना विविधेन ॥८४॥

हा !! हा!! हाऽत्र सुकृती स गजोऽपि व्याहतोऽरित गुरुणा गरलेन ।

८ प्रायशो रुचिरवस्तुषु विघ्नं जायते न हि कुवस्तुषु विश्वे ॥८५॥

मागुपायमिति सोऽपि निशम्य क्ष्मापतिर्द्रुतमुवाच वचस्वी ।

बन्धुरेव मम स व्यवहारी बन्धुरेण सुकृतोद्धरणेन ॥८६॥

(विमानोऽर्पितो मयूरः—) तुष्टया विजयया मम देव्याऽस्त्यर्पितो गरहरः सुमयूरः ।

१२ तं गजस्य विषविघ्नविनाशे प्रेषयामि मुनिराज ! जवेन ॥८७॥

इत्युदीर्य स तु दिव्यमयूरः प्रेरितः खचरभूपतिनाऽत्र ।

आगतोऽतिजवतो ग(नि)जदेशात् संजहार विषमं विषमान्यम् ॥८८॥

पृष्टमत्र च मया मुनिपार्श्वे केन तस्य गरलं ननु दत्तम् ? ।

साधुराह तदऽदायि गजस्य मौढ्यान्धवयुगेन तु कोपात् ॥८९ ॥

(निशमय्य कथा इति यक्षवचः— ) इत्थमत्र वचनं मुनिनोक्तं संनिशम्य गुरुरोषधरोऽहम् ।
पापयोर्विषयोः कदनार्थमागतोऽत्र गजरक्षणहेतोः ॥९०॥

भूमिनाथ ! तदिमावतिपापौ सागसौ सुकृतिनि स्वकबन्धौ ।
भासुराशय ! विनाशय भासुंराशयः स्युरमलाश्च यथा ते ॥९१॥

(गजस्य औदार्यम्— ) इत्युदीर्य विरते सुरराजे रोषरूक्षनयने नरनाथे ।
साहसी स सहसाऽऽह हसित्वा धर्मवानथ गजो व्यवहारी ॥९२॥

यक्षराज ! भुवने भविनां या दुःखराजय इह स्युरुदग्राः । पूर्वजन्मकृतदुष्कृतवृक्षस्यैताः फलमहो विजयन्ते ॥
सर्वदापिनि जने सुखदेये सर्वदाऽप्यनुकंपाः पुरुषास्ते ।
येऽपि दुःखजनने कुजने स्युस्ते वहन्ति पुरुषोत्तमतां तु ॥९४॥

चेत् प्रसन्नहृदयोऽसि मयि त्वं सांप्रतं स्वकृपयैव कृपालो ! ।
सोदरौ सुकृतसादर ! मेऽद्य रक्ष रक्षणविचक्षण ! यक्ष ! ॥९५॥

दैवते त्वयि नृपे महासेने भाग्यतो मम च संप्रति तुष्टे ।
चेत् करोमि न हि बान्धवरक्षां तत् कदा प्रविदधामि सुरेन्द्र ! ॥९६॥

इत्युदीर्य विरतेऽथ गजेऽस्मिन् भूपतिः प्रमुदितोऽन्तरुवाच ।
सर्वलोकपरितोषविधात्री निर्मला जयति सज्जनवृत्तिः ॥९७॥

१ पापरागौ । २ भाः-कान्तिः, तस्याः सुराशयः-समूहाः ।

(गर्दनस्वभावः—)हेमन्ते सलिलं वसन्तसमये दध्यादि दौर्घ्यं भजेत् चञ्चन्दन–सान्द्रचन्द्रकिरणस्पर्शौ वियोगे पुनः।
शीतं स्नेहयुतं यशःसुरभितं माधुर्यधुर्यं सुखं सन्तः संततमेव हन्त युगपद् यच्छन्ति संगान्निजात् ॥९८॥
दक्ष ! चित्तकपिबन्धनदाम धर्मबुद्धिललनारतिधाम । सर्वदा सुवचनैरभिरामः सज्जनो जयति पूरितकामः ॥
सज्जनस्य तव वागुपरोधाद् दुर्जनावपि भृशं नहि हन्मि ।
किन्तु देशमखिलं मम हित्वा गच्छतां द्रुतमिमावतिपापौ ॥१००॥
( तयोर्विदायकर्णांदेशाद् निर्वासनं कृतम् — ) इत्यवाप्य वचनं वसुधेन्दोस्तौ ततो नगरतस्तलरक्षः ।
दुर्बलः शबलितौ जनलक्षैर्निन्दितौ स निरसारयदाशु ॥१०१
इतश्च— (मेघवाहनचन्द्र-महसेननृपयोः समागमः—) कर्णतर्णकमदाय सुदु( र्व )त्वं (?) चित्तषट्पदमुदं परपद्मम् ।
आविरास सरसं सुरमार्गात् किङ्किणीक्वणितमद्भुतमारात् ॥१०२॥
कुत्र किङ्किणिगणक्वण उच्चैर्यावदेवमवदन्नरदेवः । तावदेव गगनेऽत्र विमानान्याविरासुरमलप्रतिभानि ॥१०३॥
एकतोऽतिगुरुतोऽथ विमानाद् रूपचन्द्र इति खेचरराजः ।
वेगतः क्षितितलं समुपेत्याऽऽलिङ्गति स्म नृपतिं महसेनम् ॥१०४॥
( मेघरेण स्वपुत्री प्रियमित्रा दत्ता गजाय— ) जीर्णजैनभुवनोद्धरणेन भूपते ! मदुपकारकरोऽयम् ।
सोदरीमहमतः प्रियमित्रां दातुमागत इहाऽस्मि गजाय ॥१०५॥
'एवमस्तु' नृपतेरिति वाक्यं प्राप्य खेचरपतिः प्रमदाढ्यः ।
निर्ममौ किल तयोः सुविवाहं कान्तिभिः कलितयोर्ललिताभिः ॥१०६॥

तद्विवाहनविधावथ पूर्णे तौ निवेश्य च सुवर्णनिवासे।
खेचरोऽक्षयनिधिं च समर्प्य पत्तनं निजमगाद् रजताद्रौ ॥१०७॥
निर्मलाऽतुलकलालिपु केलिं लीलयैव कलयन् गजराजः।
कल्मषैरकलुषः कलमूर्तिः कालमाकलयति स्म कियन्तम् ॥१०८॥
(गजपार्श्वे आगतः कश्चिद् मालाकारः—) पुष्पकालदिवसेष्वथ पुष्पाजीवकः सुरभिपुष्पसमूहम्।
नूतनं गजकुमारवराय प्रौढया निजमुदोपनिनाय ॥१०९॥
पुष्पसंचयभवा गजराजः श्रेष्ठिनः स्वपितुरन्तिकभाजः।
सोऽढौकदमलाः किल मालाकारपाणितलतोऽखिलमालाः ॥११०॥
स्वाऽङ्गजेन विनयादथ दत्तां स्वां गजेन कुसुमस्रजमेषः।
श्रेष्ठिराट् निजकरेण विगृह्य जिघ्रति स्म मुदितः किल यावत् ॥१११॥
(मालाकारदत्तपुष्पात् सर्पाविर्भावेन गजपिता मृतः—) तावदेव कुसुमस्रजि लीनो राजिलो गरधरो गरलोग्रः।
श्रेष्ठिनं झटिति तं स्थिरनाशोद्देश एव दशति स्म स दैवात् ॥११२॥
तस्य दंशवशतः पितरं स्वं परासुमवगत्य गजोऽयम्।
दुःखितो भृशमतर्कि वज्रघाहतेरिव बभूव हृदन्तः ॥११३॥
(पितृमरणाद् आत्मानं जिघांसुर्गजो हठाद् जीवितः—) हा! मयैव कुसुमानि समर्प्य द्रोह एष विहितो जनकस्य।

१ माली। २ मुदा। ३ नागाभागे। ४ परासुम्-गतप्राणम्।

इत्युदीर्य तनुमेव जिघांसुं श्रेष्ठिनी तमवरुध्य जगाद ॥११४॥
ज्ञानिना मम पुरोऽपि पुरैतत् व्याहृतं तनय ! तिष्ठति भाव्यम् ।
त्वत्पतेश्च मरणात् तव पुत्रस्योदयो ननु भविष्यति वत्स ! ॥११५॥
( गजपितुरुत्तरकृत्यम्— ) इत्यवाप्य जननीवचनानि चक्रिवान् स्वपितुरुत्तरकृत्यम् ।
स्यान्नरः सुवचसा हि विशोको वायुनेव शशभृद् विगताभ्रः ॥११६॥
( स एव मालाकारः राज्ञे पुष्पाणि ढौकते— ) अत्र चेव समये किल पुष्पाजीवकोऽभिनवपुष्पसमूहम् ।
आनिनाय महसेननृपाय ढौकते निजसमाजगताय ॥११७॥
यावदेव गुरुपुष्पकरण्डं भूपपादपुरतः स मुमोच ।
श्रेष्ठिमृत्युदमहिं किल तावद् मन्त्रिणः कुसुमनिर्गतमूचुः ॥११८॥
( 'पुष्पनिर्गतसर्पेण गजपिता मृतः' इति राज्ञे सभ्यैः कथितम्— ) भूपतिस्तत उवाच कथं स श्रेष्ठिराड् गजपिता कुसुमोत्थात् ।
सर्पतो मृतिमवाप ततो ही मृत्युरेव सुलभः खलु लोके ॥११९॥
( गजपितुर्मरणं श्रुत्वा राजा विचिन्तयति— ) जन्मिनो जगति यत् किमपीह बिभ्रते सुखकृते स्वशरीरे ।
धिक् तदेव कुरुतेऽकरुणोऽन्तजीवितव्यविधौ विधिरेषः ॥१२०॥
रक्षितुं क्षितिभृतोऽक्षतधैर्याः स्युः क्षमा क्षितिमिमामसुरक्षाम् ।
एकतोऽपि रिपुतोऽन्तकतस्तु कुर्वतेऽत्र न निजामसुरक्षाम्[1] ॥१२१॥

१ प्राणरक्षाम् ।

इत्यनेकविधविश्वविरागं चिन्तयन् मनसि तत्र दिनेऽसौ ।
पूजनादि च जिनस्य विधाय सौख्यतो निशि नृपः स्वपिति स्म ॥१२२॥
कोमले नरपतिः शयनीये सोऽनुभूय शयनोद्भवसौख्यम् ।
उत्थितो रजनितुर्यविभागे चिन्तितैरजनि संयुत एवम् ॥१२३॥
(अपुत्रो राजा गजमेव राज्येऽभिषिञ्चति— ) नैव दैववशतोऽस्ति सुतो मे मां च मज्जयति वार्धकवार्धिः ।
गोत्रिणोऽप्यजयिनो निखिलास्ते राज्यमर्हति न जन्तुरनर्हः ॥१२४॥
यतः— भूपतावसुकृताश्रितचित्ते मन्त्रितामनयिनि श्रुतहीने ।
यस्तपस्विगुरुतामन्हताद्ये स्थापयेत् स लभतेऽतुलदुःखम् ॥१२५॥
यद्गुणो भवति राज्यधरोऽयं तद्गुणं विमलराज्यमपि स्यात् ।
यत्र तु स्फुटविभः स्फटिकः स्यात् तन्निभां किमु विभां न बिभर्ति ॥१२६॥
धर्मनिर्मलविभं नररत्नं रत्नसूकुलवधूमुकुटेऽस्मिन् ।
स्वे पदे कमहमद्य विधाय सत्कलाद इति कीर्तियुतः स्याम् ॥१२७॥
आः स तिष्ठति गजोऽङ्गजवद् मे राज्यमेतदथ तत्र निधाय ।
स्वं भवं विमलयामि तमग्र्यं दीक्षया विमलयाऽमितपुण्यात् ॥१२८॥
चेतसीति सरसे स रैंसेशो निश्चिकाय शुचिकाय-मनस्कः ।

१ गलमू.-पृथ्वी । २ रगाया-भूमेः ईशः ।

तावदेष तरणिर्निजपादैः प्रेर्य रात्रिमुदियाय दिनाय ॥१२९॥
(दीक्षां प्राप्तो राजा—) प्रातरेव नृपतिर्महसेनस्तं गजं प्रमुदितं निजराज्ये।
उत्सवेन स निधाय जिनोक्तं मुक्तिमार्गपथिकत्वमवाप ॥१३०॥
४ (मृता कीर्तिमती श्रेष्ठिनी) सर्वदैव दृढदैवविभावं संविभाव्य भवमस्थिरभावम्।
श्रेष्ठिनी च किल कीर्तिमती सा मुक्तिमाप तपसा गतपापा ॥१३१॥
(राज्यं पालयति गजः—) नीतिनिर्मलमना गजभूपो नित्यनूतनविवेचनपूतः।
प्राज्यपुण्यविधिपुण्यतरं तद् राज्यमेष परिपालयति स्म ॥१३२॥
८ (ग्रीष्मे गजस्य जलकेलिः—) अन्यदा स तपर्तुदिनेषु तापनोत्तपनतापितगात्रः।
केलिपल्वलगतो जलकेलिं कामिनीजनयुतो विततान ॥१३३॥
निर्मले सरसि कोकिलयुग्मं कौतुके स रसिको नरनाथः।
पश्यति स्म च पुरः प्रियमिश्रां स्वप्रियां प्रमुदितो निजगाद ॥१३४॥
१२ वक्षसि स्थितवतोः कुचयोस्ते दृक्पुरःसुहृदयोरपि लक्ष्मीम्।
हाऽपहृत्य वलितं स्वकराभ्यां धारयामि वद कोकिलयुग्मम् ॥१३५॥
(विफलं कृतं कोकिलयुग्मं गजेन—) इत्युदीर्य जलमज्जननेत्राऽलक्ष्य एष नृपतिः प्लवदक्षः।
चक्रवाकयुगलं करयुग्मे सोऽग्रहीत् कमलकोमलमध्ये ॥१३६

१ मज्जमाननेत्रः।

चक्रवाकयुगलाद् नृपपत्नी पक्षिणीमधृत पाणिसरोजे ।
हर्षतोऽतिसरसः सरसस्तु निर्ययौ सपतगः क्षितिपः सः ॥१३७॥
चक्रवाकमिथुनं पृथगेतद् विप्रयोगविधुरारवदीनम् । पार्थिवोऽथ पृथुपञ्जरयुग्मे दुःखितं स्वसुखतः क्षिपति स्म ॥
इत्थमेव जलकेलिविलासं ग्रीष्मकाललसितं कलयित्वा ।
चारुपुष्पचयसंचयनाय नायकः स चलति स्म वनाय ॥१३९॥
कोमलानि सुरभीणि सुमानि सोऽचिनोद् नरपतिः शिखरिभ्यः ।
पुण्यकीर्तिकलितानि वचांसि भव्यजीव इव जैनमुनिभ्यः ॥१४०॥
( आरामे ददर्श मुनिं गजः— ) पाणिना सुमनसः सुमनोज्ञान् भूपतिः स सुमनाः परिचिन्वन् ।
पश्यति स्म मुनिमेकमुदग्रं ज्ञानगाङ्गजलमुत्थितहंसम् ॥१४१॥
स क्षमांपतिरतिस्थिरभावस्तं क्षमांपतिमनन्तविभावम् ।
भूतलप्रविलुलन्मणिमौलिः प्रोज्ज्वलप्रणयवान् प्रणनाम ॥१४२॥
भूपतिर्यतिपतिं प्रणिपत्याऽचिन्तयत् स्वमनसीति निविष्टः ।
यो भवोदधिममुं प्रतितीर्षुः सोऽयमेव सुकृती मुनिराजः ॥१४३॥
( गजपत्नी मलिनं मुनिं दृष्ट्वा घृणिता— ) भूपतिप्रियतमा प्रियमिश्रा स्वेदमग्नरजसा शबलाङ्गम् ।
तं मुनीश्वरमथ प्रणमन्ती कुत्सहृद् झटिति थूत्कुरुते स्म ॥१४४॥

१ भूपतिः । २ मुनिः ।

चक्रवाकमिथुनस्य वियोगाद् दूनदीनहृदयस्य विरावैः ।
नष्टनिश्चलसमाधिरनाधिः साधुराह वसुधाधिपमेनम् ॥१४५॥

किं विहंगयुगमुखविरावैः रोदितीव नरनाथ ! विनाथम् ।
भापया च निजया त्वयि कोपाटोपतः प्रकटयेत् कटुराटिम् ॥१४६॥

(मातुबोधितेन गजेन तत् कोकिलयुग्मं सयुक्तं कृतम्—) आह भूपतिरथो मुनिनाथं चक्रवाकमिथुनं पृथगेतत् ।
कौतुकात् करतलेऽस्ति गृहीतं मत् करोति विरसं स्वरमित्थम् ॥१४७॥

साधुराह नृप ! कौतुकतोऽपि प्राणिनामसुखमेव न कार्यम् ।
अर्ज्यते हि दुरितं महसद्भिश्छुप्यते न परत्र रुदद्भिः ॥१४८॥

तद् विमुञ्च विहगद्वयमेतद् वाञ्छया व्रजतु वाञ्छितभूमिम् ।
याम एक इह दुस्तरदुःखादेतयोरजनि वर्षसहस्रम् ॥१४९॥

(मुनिदेशना—) तन्निशम्य नृपतिर्मुनिवाक्यं चक्रवाकयुगलं स मुमोच ।
देशनां तदनु तत्र निविष्टो निश्चलः समशृणोद् मसृणोऽन्तः ॥१५०॥

धर्मतत्त्वमवगत्य ततोऽयं भूपतिर्यतिपतिं प्रणिपत्य ।
उत्थितः स्वनगरं समुपेत्याऽपालयच्चिरमसौ निजराज्यम् ॥१५१॥

(वीतरागगृहे नृपन्तं गजं ज्ञात्वा रजस्वलैव तत्पत्नी मन्दिरमागता—) वीतरागभुवने गजराजं कारयन्तमवगत्य सुवृत्तम् ।

१ निर्मोक्षः । २ प्रहरः ।

सा रजोऽशुचिरपि प्रियमित्राऽभ्याजगाम शुचिवस्त्रसुशोभा ॥१५२॥
याममेकमपवित्रशरीरा तस्थुषी जिनगृहे नृपपत्नी ।
सा पुनः प्रशमपूरितचित्ता पुण्यतः सपदि चिन्तयति स्म ॥१५३॥
(सा 'रजस्वल्या मन्दिरे नागन्तव्यम्' इति पश्चात्तापेन प्रत्यागता—) हा ममेयमविवेकविचेष्टा हीदृशी जिनगृहे यदुपाऽगाम् ।
इत्थमात्महृदि सा प्रविचार्य प्रत्यगाद् निजगृहे सविषादा ॥१५४॥
(गपत्नीकेन गजेन स्वपुत्र राज्येऽभिषिच्य गृहीतं मतम्—) श्रीपतिं स्वतनयं प्रियमित्रासंभवं निजपदे त्वभिषिच्य ।
वर्धमानसुगुरोश्चरणान्ते सोऽग्रहीत् तु चरणं सकलत्र[1]: ॥१५५॥
(दपी गजो ध्यानाय प्रेतवने—) अन्यदा निजगुरुं प्रणिपत्य प्रेतवेश्मनि गतो यतिराजः ।
सत्समाधिमधिकाऽधिकशुद्धध्यानधौतहृदयः स बभार ॥१५६॥
इतश्च— (तौ विपक्षायकौ गजभ्रातरौ गृध्रौ जातौ—) भ्रातरौ विमलबुद्धि-सुबुद्धी यौ पुराऽपि महसेननृपेण ।
त्याजितौ निजपुरं सुरवाक्यात् तौ मृतौ गुरुशुचा वनमध्ये ॥१५७॥
(ताभ्यां गृध्राभ्यां हतो गजो जातो धनपुत्रो देवदत्तः—) गृध्रतामुपगतावतिपापौ आगतौ मुनिमिमं ससमाधिम् ।
वीक्ष्य पूर्वधृतवैरभरेण राक्षसाविव रुषाऽजनिषाताम् ॥१५८॥
तौ स्वचञ्चुपुटकोटिकठोरौ तद्धृदयं च (?) विपाटयतः स्म ।
साहसाद् मुनिवरः परिपेदे सोऽनपेक्षहृदयो निजदेहे ॥१५९॥

1 कलत्रेण सहितः, सकलान् वा यते वा सकलत्रः । 2 पुस्तके नेव पाठः सम्यक् पठितुं शक्यते—' हृदनेनपद्' ।

तं परीषहमसौ परिषह्य मृत्युमाप गतपापविकारः ।
तस्य जीव इह ते तनयोऽयं देवदत्त इति योऽस्ति पुरस्तात् ॥१६०॥
(गजपत्नी मृता जाता देवदत्तपत्नी— ) सा ततश्च पतिनी प्रियमित्रा सातताशु मुनिमृत्युमवेक्ष्य ।
वेगतोऽनशनमेव विधाय पञ्चतामुपगता मृदुचित्ता ॥१६१॥
(मुनिपूजातः तस्या इह भवे विमलाभिधानायाः दुर्गन्धशरीरता—) साऽवधूतदुरिता खलु मृत्वा त्वद्गृहे सुतवधूरजनिष्ट ।
पूर्वजन्मनि कृताद् विचिकित्साकर्मतोऽजनि कुगन्धशरीरा ॥१६२॥
(चक्रवाकवियोगकरणेन तस्या एव पतिविरहः—) यावदष्टघटिकाविरहो यच्चक्रवाकयुगले विहितोऽग्रे ।
अष्टवार्षिकमभूदिति दुःखं त्वद्वधू-तनययोस्तु वियोगात् ॥१६३॥
(अष्टौ घटिका गजस्कन्धतया जिनमन्दिरे स्थानेन अष्ट वर्षाणि तस्या दुरभित्वम् —)
यावदष्टघटिका जिनगेहे पुष्पवत्यशुचिकुत्सशरीरा ।
तस्थुषी तदियमत्र कुगन्धा वत्सराऽष्टकमभूदपवित्रा ॥१६४॥
सर्वदेव सुपवित्रितगात्रैरङ्गिभिः सुकृतिभिर्जिनगेहे। चारुपुष्प-फलपूरितहस्तैः पूजनैकहृदयैर्गमनीयम् ॥१६५॥
इत्यवाप्य शशिशीतमहांसि पुण्डरीकमुनिराजवचांसि ।
सर्वसभ्यभविनां सुमनांसि जज्ञिरे गतविमोहतमांसि ॥१६६॥
तैर्वचोभिरमलीकृतचित्तः पूर्वजन्म च निजं कलयित्वा ।
श्रेष्ठिनोऽस्य तनुजोऽतनुतोषः प्रोचिवान् गणधरं प्रणिपत्य ॥१६७॥

( स्वपूर्वभवं श्रुत्वा देवदत्तस्य वैराग्यम्— ) सांप्रतं कृतकृपैः कथयद्भिः पूर्वजन्म मम तत्रभवद्भिः ।
छेदितः सकल एव भवद्भिर्मोह एष सुकृतं प्रथयद्भिः ॥१६८॥
अथ मातृ-पितृ-बन्धु-कलत्राद्येषु नो मम मनो धृतमोहम् ।
तत् प्रसद्य भगवन्! जिनदीक्षां देहि देहिषु सदेहितकारिन् ॥१६९॥
पुण्डरीक! ऋषिराज! सुधीमन्! संप्रति प्रचलिता वयमग्रे ।
सिद्धितीर्थमभि सिद्धिनिमित्तं श्रीयुगादिजिनराजनिदेशात् ॥१७०॥
तद् विहाय भवसंभवबन्धं दीक्षया सपदि निर्मलय स्वम् ।
सिद्धपर्वतमुपेत्य च पूर्वं पापमुग्रमपि भिन्द्धि समग्रम् ॥१७१॥
अग्रतो ननु वराणसिपुर्यां सिद्धशैलशिखरस्य विलोकात् ।
भाविनां प्रभविता प्रमदस्तत् त्वं समेहि समयेऽत्र समेहि ॥१७२॥

यतः ( शत्रुंजयवर्णकः— )

मित्तुंजदंसणमीओ पूयाकरणेण मासीयं लहइ । शत्रुञ्जयदर्शनमितः पूजा करणेन मासिकं लभते ।
तलजागरणे पामइ छम्मासियं वाऽत्र (वेत्थ) जामेण ॥१७३॥ तलजागरणे प्राप्नोति षण्मासिकं वाऽत्र यामेन॥

पच्चक्खाणं काउं वंदित्ता सग्गुरुं पडिक्कमिउं । प्रत्याख्यानं कृत्वा वन्दित्वा सद्गुरुं प्रतिक्रम्य ।
थुवंतो झायंतो वंदंतो गुणगणकला च ॥१७४॥ स्तुवन् ध्यायन् वन्दमानो गुणगणकलाश्च ॥१७४॥
वीसामणं कुणंतो सबालवुड्ढस्स समणसंघस्स । विश्रामणां कुर्वन् सबालवृद्धस्य श्रमणसंघस्य ।

| | |
|---|---|
| अभयं वद्धावितो बहुहरिसुब्भिन्न रोमंचो ॥१७५॥ | अभयं वर्धापयन् बहुहर्षोद्भिन्नरोमाञ्चः ॥१७५॥ |
| ‘जय जय’ रवं कुणंतो जिणमुत्तिं पासिऊण मग्गेवि । | ‘जय जय’ रवं कुर्वन् जिनमूर्तिं दृष्ट्वा मार्गेऽपि। |
| पूयंतो भत्तीए खवेइ संसारमवि णंतं ॥१७६॥ | पूजयन् भक्त्या क्षपयति संसारमपि अनन्तम् ॥१७६ |
| पंथे वच्चंतस्स वि अ वन्दिए जइ हविज्ज पज्जंतो। | पथि व्रजतोऽपि च वन्दिते यदि भवेत् पर्यन्तः । |
| उक्कोस-जहन्नेणं वेमाणीय सन्नीय सुरत्तं ॥१७७॥ | उत्कृष्ट-जघन्येन वैमानिक-संज्ञिक-सुरत्वम् ॥१७७॥ |
| अह वंदिऊण कहमवि कालसमत्ती हविज्ज सिज्झेइ । | अथ वन्दित्वा कथमपि कालसमाप्तिर्भवेत् सिध्यति । |
| अट्ठभवाणं मज्झे सुद्धं चित्तं जइ हविज्जा ॥१७८॥ | अष्टभवानां मध्ये शुद्धं चित्तं यदि भवेत् ॥१७८॥ |
| दढं सित्तुंज दंसित्ता मग्गे पावइ सम्ममचिरेण। | दृढं शत्रुंजयं दृष्ट्वा मार्गं प्राप्नोति सम्यगचिरेण। |
| गुरुकुलजम्मो जइ हुज्ज चेयणा मच्चुकाले वि ॥१७९॥ | गुरुकुलजन्म यदि भवेत्–चेतना मृत्युकालेऽपि॥१७९ |
| सित्तुंजं वंदेइ ति३ पंच५ वेला य सत्त७ वाराओ । | शत्रुंजयं वन्दते त्रीन् पञ्च वेलाश्च सप्त वारांस्तु । |
| तइयभवे सिज्झेइ इइ कहियं जिणवरिंदेहिं ॥१८०॥ | तृतीयभवे सिध्यति इति कथितं जिनवरेन्द्रैः ॥१८० |
| एक्काए वेलाए कालेणं अप्पएण बहुएणं । | एकया वेलया कालेन अल्पकेन बहुकेन । |
| अहवा तिमुहुत्तेणं सिज्झेइ जहन्नमुक्किट्ठं ॥१८१॥ | अथवा त्रिमुहूर्तेन सिध्यति जघन्यमुत्कृष्टम् ॥१८१॥ |

भारतक्षितितले गुरुतीर्थं सिद्धपर्वतममुं सुपवित्रम् ।
प्राप्य जन्म निखिलाघविमुक्तं स्वं विधेहि सुविधे ! हितमिच्छन् ॥१८२॥

(देवदत्तो यतिः—) इत्यवाप्य मुनिनाथनिदेशं श्रेष्ठिसूनुरतिहर्षितचित्तः ।

त्रिंशता सुवणिजा ससहस्रैः संयुतो यतिरजायत तत्र ॥१८३॥

(देवदत्तवधूरपि विरक्ता-- ) तद्वधूरपि विधूय विमोहं साधुराजमवनम्य विनीता।
प्राह भोगसुभगत्वविकल्पच्छेदनानि वचनानि विवेकात् ॥१८४॥

आत्मदेहपरिपोषनिमित्तं हन्ति हन्त खलु जन्तुरनेकान्।
निर्मलानि मलिनानि विधत्तेऽप्यात्मदेहविमलीकरणाय ॥१८५॥

आत्मरूपभृशगर्वितचित्तोऽन्यान् गुरूनपि हसेत् कुशरीरान्।
देहमोहितमहादुरितौघैर्बाध्यते परभवेऽपि हि जीवः ॥१८६॥

तत् प्रभो! प्रतिभवं तनुबन्धादेव दुष्टदुरितानि भवेयुः।
तद् ममाऽनशनमेव भवन्तः संदिशन्तु वितनुत्वविधाने ॥१८७॥

ऊचिवानथ मुनिर्ननु वत्से! पूर्वलक्षमितमस्ति तवाऽऽयुः
नाधुनाऽनशनयोग्यशरीरा त्वं सुदुस्तपतपस्सुतपस्य ॥१८८॥

(पुण्डरीकविहारः-- ) एवमेष गणभृत् प्रतिबोध्य सोऽभवज्जिगमिषुर्विमलाद्रिम्।
तावदेष मृगवेषसुरोऽत्राऽभाषत प्रभुममुं प्रणिपत्य ॥१८९॥

संप्रतीह भगवन्! भरतेशेनाऽन्वितसकलसंघयुतेन।
श्रीयुगादिजगदीश्वर एनां पावयिष्यति भुवं स्वविहारात् ॥१९०॥

श्रुत्वेत्थं मुदितमना मुनीश्वरोऽयं तस्थौ तैर्यतिभिरभिश्रितः सुरैश्च।

मत्वा तं गणभृतमास्थितं नरेन्द्रास्तत्रेयुः सुकृतकृते समस्तदिग्भ्यः ॥१९१॥
सम्यक्त्वं परिगृह्य जैनभुवनान्यारीरचन् केचन नीत्वा द्वादशसद्व्रतानि भुवि केऽप्याऽऽजूहुपन् रक्षणम् ।
त्यक्त्वा काममपीह केऽप्यऽचकमन् ब्रह्म त्वजिम्हप्रभं वाक्यात् तस्य मुनेस्तु केचन नृपाश्चारित्रमाशिश्रियन् ॥
नृपाः सत्कर्माणः प्रगलदघमर्माण इति ते गृहीतब्रह्माणः प्रकटितसुधर्माण इतरत् ।
परित्यज्य श्रीमद्गणधरवरं पावितधरं तदाऽऽसेवन्ते स्म स्फुटसुकृतकर्पूरकलसम् ॥१९३॥
(सप्तमः सर्गः—) श्रीरत्नप्रभसूरिसूरकरतो दोषानुषङ्गं त्यजन् ।
यो जाड्यस्थितिरप्यभूत् प्रतिदिनं प्रासाद्भुतप्रातिभः ।
तेन श्रीकमलप्रभेण रचिते श्रीपुण्डरीकप्रभोः श्रीशत्रुंजयदीपकस्य चरिते सर्गोऽभवत् सप्तमः ॥१९४॥
॥ इति रत्नप्रभसूरिशिष्यकमलप्रभसूरिविरचिते श्रीपुण्डरीकचरित्रे देवदत्तपूर्वभव-
वसुधनदीक्षाग्रहणोनाम सप्तमः सर्गः ॥

---

## अष्टमः सर्गः

(आदिजिनं पृच्छति भरतः—) अथ पुण्यसौरभरतो भरतो नृपतिः सुभक्तिभरतो यतिनः ।
प्रणमन्नवीक्ष्य गणभृत्-प्रथमं परिपृच्छति स्म स तमादिजिनम् ॥ १ ॥
भगवन्! भवद्गणभृतां १ वरः स्वविहारतः शुचिचरित्ररतः ।
विमलीकरोति किमलीकपथिच्छिदुरो महीतलमहीनमहाः ॥ २ ॥

---

१ अहीनमाहाः ।

(अवदत् आदिजिनः—) अवदत् ततः प्रथमतीर्थपतिः श्रृणु चक्रनायक ! स साधुवरः ।
विकलङ्कयत्यनुकलं भविनो विमलाचलं प्रविचलन्नधुना ॥ ३ ॥
विमलाचलस्य तलमाप्य मुदा गणभृत् तदाऽस्मदुपदेशवशात् ।
कलयिष्यति स्फुटकलङ्ककलाविकलः स केवलमहः सकलम् ॥ ४ ॥
अत एव संप्रति वयं विमलाचलयात्रया ऋषभसेनमुनेः ।
नवकेवलोत्सवविधिं यतिभिः सुदिदृक्षुभिर्भृशमहोत्सुकिताः[1] ॥ ५ ॥
इति पुण्यपोषदमिदं वचनं भरताधिपः प्रथमशम्भुमुखात् ।
परिपीय पीवरतरप्रमदो वदतां वरः प्रवदति स्म तदा ॥ ६ ॥
(भरतस्य विमलाचलयात्रा—) भगवन् ! प्रसद्य सुकृतैकविधिः प्रविधीयतामथ विहारविधिः ।
विमलाद्रिमाप्य सुकुटुम्बयुतः स्ववपुः पुनाम्यहमपीह यथा ॥ ७ ॥
इति चक्रवर्तिहृदयं वचनैः शुचि वीक्ष्य विघ्नहृदयं[2] जिनपः ।
बहुपुण्यलाभमवगत्य नृणां विमलाद्रिसंगममियेष ततः ॥ ८ ॥
(यात्रायै पटहघोषणा—) स्वपुरे समेत्य भरताधिपतिर्निजबान्धवांश्च पुरमुख्यजनान् ।
विमलाचलं जिगमिषुः सुकृती समतत्वरत्[3] पटहघोषणया ॥ ९ ॥
दिवसेऽर्पितेऽथ स बृहस्पतिना स्नपिताङ्कोऽम्बरसरिद्वरया[4] ।

१ भृशं महे उत्सवे उत्सुकिताः । २ विघ्नं हरति इति विघ्नहृत् । ३ "त्वर्" धातोः क्रिया । ४ गङ्गादेव्या स्नपिताङ्कः ।

इह रोहिणीप्रभृतिषोडशभिस्त्वमरीभिरेष कृतमाङ्गलिकः ॥१०॥
हरिणा विनिर्मितशिरस्तिलको बहुशः सुरीगणसुगीतगुणः ।
मघवाऽर्पितं सुजिनबिम्बमथो तदपूपुजद् भरतचक्रपतिः ॥११॥
४ (इन्द्रादिभिः कृत भरतसाहाय्यम्—) अथ तं मनोरथमवेत्य तद्ऽप्यमरेश्वरः स्वरसतः सुकृती ।
मणिदेवतालययुतं स्वरथं जिनमूर्तिसुस्थितिकृतेऽर्पितवान् ॥१२॥
(यात्रामहः—) जिनबिम्बमाशु परिपूज्य स तद् निदधौ रथस्थमणिदेवगृहे ।
जयतादसौ प्रथमसंघपतिस्त्विति पुष्पवृष्टिरजनिष्ट तदा ॥ १३ ॥
अथ चन्द्रमा उडुगणाधिपतिः स्वतुरंगमान् विततरङ्गभरात् ।
उपनीय योजितकरो न्यगदद् भरतेश्वरं सुकृतबन्धुतया ॥१४॥
जय चक्रभृत् !. प्रथमसंघपते ! तुरगानमून् मम जिनेन्द्ररथे ।
विनियोज्य तीर्थपथयुग्यतयाऽनुगृह्णाण मां प्रियसधर्मिजि(ज)नः ॥१५॥
इति, चन्द्रदेवविहिताग्रहतो भरतेश्वरो हरिहरीन् हरितान् ।
परिहृत्य तानथ रथोद्वहने निदधे हयान् कुमुद-कुन्दरुचः ॥१६॥
यमुनासुरी च सुरसिन्धुसुरी कृतभूषणे विधृतचामरके ।
रथमेनमाप्य जिनगेहपुरो मुदिते सुतस्थतुरुरूप्रतिभे ॥१७॥

१ इन्द्राधान । २ द्विवचनम् ।

गजगोऽथ गोमुखसुरो वरकृत्रपमालिकाभृदपसव्यकरः ।
पुरतः स्थितो विपुलसव्यकरद्वयबीजपूरफल-पाशधरः ॥ १८ ॥
गरुडस्थितिः कनकपिङ्गतनुः शर-पाश-चक्रभृदिदंवरदा ।
इति वामकैरथ सुदक्षिणकैर्धनुरङ्कुशा-ऽशनि-सुचक्रधरा ॥१९॥
सुकृतस्थभव्यजनविघ्नहरा जिनराजशासनविभावकरा ।
पुरतो रथस्य भविषु प्रचुरीकृतसंमदा स्थितसुचक्रसुरी ॥२०॥
अथ हस्तिमल्लमधिरूढवता त्रिदशेश्वरेण सुरलक्षयुजा ।
सह चक्रभृन्नृपसहस्रवृतः गजगोऽगमज्जिनरथानुगतः ॥२१॥
अथ पञ्चशब्दमुखरे गगने जयरावधादिनि सुवन्दिजने ।
सुरगीतलास्यसुविलास्यजगज्जनताऽऽस्यहास्यमहसि प्रसृते ॥२२॥
धरणीभृतः पविभृतश्च तदा युगपद् महाद्रविणदानभरैः ।
अदरिद्रतामुपगते जगति प्रचचाल सोऽथ जिननाथरथः ॥२३॥
विनमेः सुताप्रभृतयो दयिता भरतेश्वरस्य सुकृतेषु रताः ।
सहिता विमानचयमुचशचीप्रमुखाऽमरीभिरिह चारुरुहुः ॥२४॥
भरतेशितुः प्रथमसंघपतेरमरीगणाः शुचिगुणानगणाः ।

१ प्र० रथागतः । २ इन्द्रस्य ।

प्रमदाभिरत्र सह भूमिभुजां प्रमदाद् जगुर्जगति भूरिकरान् ॥२५॥
कनकात्म दिव्यवसनात्म तदा सुरगीतिकात्म सुकृतात्म मुदा ।
जगतां हितात्म महितात्म भृशं तदयोध्यपत्तनमभूदनिशम् ॥२६॥
इति चत्वर-त्रिक-चतुष्क-महापथकेषु गीतनवनृत्यभरम् ।
प्रविलोकयन् प्रमदयन् भविकान् समचीचरद् निजरथं भरतः ॥ २७ ॥
(शकटाननम् उद्यानम्—) शकटानने निजपुरोपवनेऽवनिपालनः स रथमेनमथ ।
सुकृती कृती सपदि तं जगतः प्रमदेन निश्चलयति स्म समम् ॥२८॥
(यात्रायै नृपाणां निमन्त्रणम्— ) विमलाचलं प्रति यियासुरसौ सुरसौहृदाद् भरतसंघपतिः ।
भरतक्षितिस्थितिभृतः क्षितिपान् समजूहवत् सुकृतलाभकृते ॥२९॥
भरतेशितुः शुभरतेर्वचनं क्षितिपा अवाप्य मुदिताः स्वहृदि ।
इति भावनां विदधिरे रुचिरां परमात्मनः सरसभोज्यनिभाम् ॥३०॥
प्रभवो भवन्ति न भवेऽत्र कति प्रभवेन्न केषु च जयो जगति ।
नरमाप्य कंचन रमा श्रयति ननु केषु नो भवति दानमतिः ॥३१॥ किन्तु,
प्रभुता शमप्रणयिनी नयनी विजयोऽस्य विक्रमशुचिः क्रमवान् ।
कमला गलन्मदकलङ्कमला सुगतेर्निदानमपि दानमिदम् ॥३२॥

---

१ सर्वाणि आत्मान्तपदानि अयोध्यापत्तनस्य विशेषणानि ।

वरमस्मदल्पबलताऽपि यथा विजिता वयं भरतभूमिभुजा ।
अनुजीविताऽपि वरमस्य विभोः सुकृतोद्यमो भवति यद्वशतः ॥३३॥
(आगता नृपाः—) इति चेतसा नृपतयो निखिलाः परिभाव्य भूरितरभावभृतः ।
भरतेशपार्श्वमुपजग्मुरसी विमलाचलं प्रति यियासुहृदः ॥३४॥
(आदिजिनोऽपि स्फुटिकाचलाद् अचलत्—) तदनु त्र्यशीतिगणभृत्प्रवरैः सहितस्तपोधनसहस्रवृतः ।
कनकाऽम्बुजेषु चरणौ निदधत् स्फुटिकाचलादचलदादिजिनः ॥३५॥
अतनोस्तनोः परिमलाद् विदधत् सुरभिं समग्रतरुपुष्पचयम् ।
अतिदीपयन्नमलदीप इवाऽखिलरोदसीं स्वमहसा सहसा ॥३६॥
मणिरत्नमौक्तिकमयप्रतताऽऽतपवारणत्रितयतो जगताम् ।
सुविकाशयन्नधिपताममरैर्धृतचामरैर्विहितभक्तिभरः ॥३७॥
गगनस्थधर्मकरचक्र–महाध्वज–सिंहपीठ–पदपीठयुतः । नदवुचदुन्दुभिरतिप्रणमद्विटपानुकूलशाकुन–श्वसनः ॥
प्रसरत्सुगन्धजलसत्कुसुमोच्चयवृष्टिरीतिकृतभीतिहरः ।
सकलेन्द्रियप्रमददायिऋतु प्रसृतद्रुमं क्षितितलं रचयन् ॥३९॥
(आदिजिनेन सह नृपसमूहसहितो भरतः यात्रायै प्रस्थितः—) सुरकोटिभिः प्रतिपदं प्रमदात् क्रियमाणपुण्यविजयध्वनितः ।
विमलाचलं प्रति महातिशयः पवित्ताशयः स विजहार विभुः ॥४०॥

१ श्वसनो वायुः । २ ईतिकृतां भीतिं हरति यः ।

भरतो युगादिजगदीशमहं समुपागतं समवनस्य मुदा ।
तमचीचलत् तदनुगस्तदनु पृथुनोत्सवेन जिननाथरथम् ॥४१॥

अथ मूल्लजो निजजिनेन्द्ररथान् विकेरुपषोडशसहस्रमितान् ।
अनुचारयन्ति मुदिताः स्म ततो विनयोज्ज्वलं हि सुकृतिनां कृतिनाम् ॥४२॥

अनुकूलशीतलसुगन्धतरैर्विरजीकृते क्षितितले समीरैः ।
शुभगन्धवारिधरवारिवरैः शिशिरीकृते च मृदुवर्षकरैः ॥४३॥

द्विगुणोव षोडशसहस्रसरः सरसीकृतः सुचतुसत्रगृहः ।
सहितश्च दिव्यफल-पुष्पयुतोत्तमशाखिभिः परिवृतः संततम् ॥४४॥

( भरतसंघो मथुरागमत्— ) अदरिद्रपक्षमलपंश्च सदा भृशदानतः सुकृततश्च जगत् ।
अनघः स संघ इह संघपतेर्भरतेश्वरस्य मथुरामगमत् ॥४५॥

( पुण्डरीकगणागमः— ) मथुरापुरीपरिसरे प्रथमं जिननाथमागतमवेत्य तदा ।
अथ पुण्डरीकगणभृत् सगणः समुपेत्य चारु विनयादनमत् ॥४६॥

प्रथममनुपणपक्रमभपा रुरुचे मुनिः स सविशेषरुचिः ।
दुरितोपशान्तिकृतये जगतः शशिनो रुचेव वचसामधिपः ॥४७॥

अथ पुण्डरीकगणभृत्प्रवरं प्रविलोक्य शुभ्रयतिकोटिवृतम् ।

१ १२०००।२ दुरसतीः।

प्रणनाम भूतलमिलन्मुकुटः प्रकटप्रमोदभरतो भरतः ॥४८॥
प्रथमार्हतः प्रणमनप्रमदात् दुरितव्ययो गणधरस्य यथा।
भरताधिपस्य च तथैव गणाधिपतेः पदप्रणमनात् समभूत् ॥४९॥
सुकृतोत्तरोत्तरपवित्रतरः सुकृती त्रिलोकजनहर्षकरः।
स चतुर्विधश्चतुरधर्मिनरः प्रचचाल संघ उदयत्प्रसरः ॥५०॥
(स संघो वराणसिपुरीमगमत्—) अथ संघ एव पृथिवीमखिलामपि पावयन् प्रचुरपुण्यभरैः।
अगमद् वराणसिपुरीं तु यतो न गरीयसी दिविषदां नगरी ॥५१॥
(तेन संघेन अत्र विमलाचलो दृष्टः—) बहुकालतोऽभिलषितं हृदये लिखितं युगादिजिनवाक्यरसैः।
विमलाचलं प्रथितसिद्धगिरिं ददृशुर्भृशं शुचिदृशोऽत्र जनाः ॥५२॥
स वराणसीपरिसरं सरसं गतवान् समग्रसुरसंगतवान्।
विमलाचलप्रथमवीक्षणतो मुदितोऽजनि प्रथमसंघपतिः ॥५३॥
मणि-हेम-रूप्यमयवप्रवरत्रययुग् युतं च मणिपीठिकया।
समशिश्रियद् जिनगृहं जिनपः सुरराज-संघपतिभक्तिभरात् ॥५४॥
इह सर्वजीवहृदयप्रमदप्रदमेष योजनविसर्पि तदा।
वचनामृतं विमलशीलमहामहिमान्वितं शुचि ववर्ष जिनः ॥५५॥
प्रभुदेशनाश्रवणतो हि तदा हितदा भृशं विगतसर्वमलाः।

इह केवलप्रतिभया कलिता भविनोऽभवन् दशसहस्रमिताः ॥५६॥

( विमलाचलप्रथमवीक्षणमहः-- ) अथ केवलोत्सवममी त्रिदशा विविधं व्यधुर्विधिविवेकविदः ।
विमलाचलप्रथमवीक्षणजं विदधे महं च भरताधिपतिः ॥५७॥

विमलाद्रिमूर्तिमधिरोप्य पुरः परिपूज्य पूज्यजनपूजनकृत् ।
समितां घृतेन ( १ ) सितया ( २ ) प्रमितां निदधे मूढकसहस्रमिताम् ॥५८॥

स्वधर्मिणां त्रिदशनाथमथो सहितं समग्रविबुधैः स हितम् ।
प्रचुराग्रहेण सुनिमन्त्रितवान् निजभोजनाय जननाथवरः ॥५९॥

विगतैनसा स्वमनसा सुमनःपतिरेष किञ्चिदवगत्य महत् ।
अनुमन्यते स्म भरतस्य वचो महतां मतिः सुकृतवृद्धिकरी ॥६०॥

निखिलानथो सुकृतिनो नृपतीन्-अभिमन्त्र्य चक्रधरसंघपतिः ।
इह लक्ष्यसंख्यमणिरत्नगृहान् समचीकरत् स्थपतिरत्नकरात् ॥६१॥

अमरानसौ सुरपतिप्रमुखान् कनकासनेषु विनिवेश्य मुदा ।
मणिभाजनानि विविधानि पुरो बहुभक्तितः स्म किल मण्डयति ॥६२॥

मणि-हेम-रत्न-रजतान्युपंसि परिपाकपेशलरसानि भृशम् ।
समभोजयद् मधुसुहृत्समभोऽसमभोगतस्तदनु तोषितवान् ॥६३॥

---

१ प्रातः । २ अनङ्गप्रभः ।-

(मनुष्याणाम्, देवानां च सह भोजनम्—) अमरेश्वरः स्वपरिवारयुतो विदधेऽशनं निजसधर्मिगृहे।
इति लोकरङ्करणैकबलैर्बुभुजे सुरैरपि तदा कवलैः ॥६४॥
दिवसस्य मध्यसमयेऽथ नृपान् भरतेश्वरः स्वपरिवारवृतान्।
४ स रसाधिपो रसवतीः सरसाः प्रविधाप्य तान् सपदि भोजितवान् ॥६५॥
इति धर्मकर्मनिरतान् भरताधिपतिः सुभोज्यशुचिभोज्यभरैः।
वसनैश्च रत्न-कनकाऽऽभरणैः नृ-सुरेश्वरान् परिपूजितवान् ॥६६॥
(तत्र मुक्तिं प्राप्ता मुनयः—) अथ तत्र तेऽभिनवकेवलिनोऽनशनं विगृह्य परिपाल्य शुचि।
८ अजरामरं पदमवापुरथो भरतस्तदुत्तरविधिं विदधे ॥६७॥
(तत्र अतिमुक्तकं तीर्थं प्रथितम्—) भवसंभवं सुपरिहृत्य तमो भुवि यत्र मुक्तिमगमन् यतिनः।[1]
अतिमुक्तकाभिधसुतीर्थमिह प्रथितं बभूव शुचि तत्र महत् ॥६८॥
१२ ('विश्वनाथ' देवगृहं भरतेन कारितम्—) इह विश्वनाथ इति नाम मणीमयमूर्तिभूषितमदभ्रतरम्।
रचयांचकार गुरु देवगृहं सुविवेकिनां गुरुरयं नृपतिः ॥६९॥
(दशसहस्रमितानि पौषधगृहाणि—) परितस्ततो भरतसंघपतिः सुगुरूणि पौषधगृहाणि तदा।
समचीकरद् दशसहस्रमितान्यमितप्रभाणि सुकृताय कृती ॥७०॥
अथ लक्षमेकमिह धर्मरतान् भविनो जनांस्तु विरताविरतान्।

---

१ प्र० मुक्तिं गमयन्।

समतिष्ठपत् प्रथितकाकणिकामणितञ्जिरेखितहृदः सुहृदः ॥७१॥

गुरुचारुचक्रवलयेन वृतां धन-धान्यराशिभिरतीव भृताम् ।
विहितां विलोक्य भरतेन पुरीमितराममन्यत जनो भुवनात् ॥७२॥

(संघो विमलशैलमाह्वः—) अथ पुण्डरीकगणभृद्विहिताग्रहतो हतोग्रदुरितो जगताम् ।
प्रथमप्रभुर्विमलशैलमभि प्रचचाल संघपतिनाऽनुगतः ॥७३॥

विमलाचलप्रथमवीक्षणतः क्षणतः प्रमोदभरपूर्णहृदौ ।
नृ-सुरेश्वरौ स मृगवेषसुरः परिभाव्य भावसहितं न्यगदत् ॥७४॥

तथाहि— (सिद्धाचलनामपूर्वकं स्तुतिः—)
परागरुङ्गीनैर्विहिततिलकः स्वद्रुमभवैः स्वशृङ्गप्रोद्भूतान् विमलकरणानक्षतविभान् ।
क्षिपन्नुच्चैरेष्यद्भविकजनशीर्षेषु पुरतः प्रभुः श्रीसिद्धाद्रिर्वितरतु सितं मङ्गलशतम् ॥७५॥

(त्रिशृङ्गनामा—) महीमहीनप्रतिभो महाभृत् त्रिशृङ्गनामा गुरुनीलशृङ्गः ।
शृङ्गारयत्यम्बरगप्रभाभिर्विलोभयन् सूर्यरथस्य रथ्यान् ॥७६॥

(भूमिगृहाभिधानः—) सिद्धाद्रिशृङ्गं सुगिरिर्गरीयानयं पुरो भूमिगृहाभिधानः ।
यो धाऽनुशृङ्गैररुणस्य चित्तेऽरुणोदयाशङ्कनमादधाति ॥७७॥

(कदम्बः—) किल सकलकलाभृतां निषेव्यः कनकरसाकरकूपिकौषधीभिः ।
सहित इह हितो महीतलस्य गुरुगिरिरेष विलोक्यतां कदम्बः ॥७८॥

(तलध्वजनामा—) पुरत इतोऽस्ति तलध्वजनामा क्षितिधर एष निर्मलधामा ।
यस्य गुहासु समाधिसुधीराः सन्ति सदौषधसिद्धशरीराः ॥७९॥

(रैवतकपर्वतः—) स रैवतिकपर्वतो विमलशैलराजस्य यः कुमार इव राजते क्षितिपराज ! ते दक्पुरनः ।
सुवर्णशिखरद्युता कपिशितांशुभरो यतः सितांशुरपि पद्मिनीं निशि धिनोति सिद्धिभ्रमम् (?) ॥८०॥

मणिपूतभूतलभूतनूतनचूतराजिविराजितं शुचिसरससरसीसारसरसिजसुरभिरजसा रञ्जितम् ।
परिपाकपेशलहाररा(राजी)हारिहर्म्यकसंकुलं परिहरति गिरिवरमेनमनिशं नैव किंनरवरकुलम् ॥८१॥

विमलस्मिता भृशविस्मिता गिरिशृङ्गसंगमरञ्जिताः । लसदङ्गरङ्गविवर्तनं रचयन्ति निर्मलनर्तनम् ॥८२॥

विमलस्मिता भृशविस्मितस्मितललितनयनसरोरुहाः गिरिशृङ्गसंगमरञ्जितस्थितमनसि सकलकलावहाः ।
लसदङ्गरङ्गविवर्तनालससंरसकिंनरसंगता रचयन्ति निर्मलनर्तनान्यतिमदनमदनरसं गताः ॥८३॥

शशिमण्डलाननमण्डलाः श्रवणावतंसितकुण्डलाः । जनयन्ति संततडम्बरं निविडप्रभाभरमम्बरम् ॥८४॥

शशिमण्डलाननमण्डलद्युतिदलितकैरवजालिकाः श्रवणावतंसितकुण्डलक्षनगण्डदर्पणपालिकाः ।
जनयन्ति संततडम्बरं धनवारिशीकरतालिकाः निविडप्रभाभरमम्बरं सुरसिद्धकिंनरबालिकाः ॥८५॥

निर्दम्भा रम्भा हर्षजुषः शृङ्गारागारालापपुषः । संसारं सारं रङ्गकृतं कुर्वन्त्योऽवन्त्यो दुःखभृतम् ॥८६॥

निर्दम्भा रम्भा हर्षजुषः सुखसखमणिभिः (!) सह हास्यभृताः
शृङ्गारागारालापपुषः कपमुखकथितोत्तमकनकनिभाः ।
संसारं सारं रङ्गकृतं कृतकृतिजनताविततप्रमदाः कुर्वन्त्योऽवन्त्यो दुःखभृतं भृतधृतिमनसं सुमनःप्रमदम् ॥

सा (ता) रम्भा रम्भागर्भरुचः स्वच्छन्दा मन्दामोदमुचः।सव्रीडं क्रीडन्त्यो गगने शोभन्ते ऽनन्ते सिद्धघने ॥
सा(ता)रम्भा रम्भागर्भरुचः कुचघटघटिताऽतनुहारगणाः स्वच्छन्दा मन्दामोदमुचः शुचमपहर्तुं जगतः प्रगुणाः।
सव्रीडं क्रीडन्त्यो गगने गुरुगजगतिगमना लावणिकं शोभन्तेऽनन्ते सिद्धघने घनजनितातपवारणकम् ॥
४ उपशम्भुरयं गिरिः पुरः परिबिभ्रत् सुरनिर्मिताः। पुरविविधैरमरद्रुमैर्नवैरमरीयौऽरमरीरमत् सदा ॥९०॥
(चतुरशीतिः शृङ्गाणि—) इत्यादिभिश्चतुरशीतिभिरेव शृङ्गैः शृङ्गारितः परित एव भुवस्तलेऽस्मिन् ।
शत्रुञ्जय-क्षितिधरोऽस्ति युगादिदेवपदाम्बुजप्रचरितोच्चतरप्रभावः॥९१॥

इति वर्णयत्यमलकर्णसुधाश्रवया गिरा हरिणवेपसुरे ।
विमलाचलं प्रथमतीर्थमथाऽधिरुरोह स प्रथमतीर्थपतिः ॥९२॥

(आदिजिनदेशना— ) मुदिताश्चतुर्विधसुरा जिनपस्थितये तदैव समवसरणम् ।
रचयांप्रचक्रुरमलप्रतिभं विबुधत्वमेव सुविवेकनिधिः ॥९३॥

इह तीर्थराट् समवसृत्य चतुर्वदनो दिशन् सदुपदेशमसौ ।
परिपूर्य च प्रथमपौरुषिकामभिरामरुक् स विरराम विभुः ॥९४॥

१२ अथ पुण्डरीकगणभृत् स विभोः पदपीठमाप्य निजदेशनया ।
भविनो व्यबोधयदसौ सकलान् स्वगुरुक्रमोन्नतिकृते हि शुभाः ॥९५॥

अपरां प्रपूर्य किल पौरुषिकाम्—उपदेशतः स्वयमपि व्यरमत् ।
भवभावभीरुहृदयोऽन्यदिने गणभृद्वरस्तु स चिन्तितवान् ॥९६॥

(तलध्वजनामा—) पुरत इतोऽस्ति तलध्वजनामा क्षितिधर एष निर्मलधामा ।
यस्य गुहासु समाधिसुधीराः सन्ति सदौषधसिद्धशरीराः ॥७९॥
(रैवतकपर्वतः— ) स रैवतिकपर्वतो विमलशैलराजस्य यः कुमार इव राजते क्षितिपराज ! ते दक्पुरनः ।
सुवर्णशिखरद्युता कपिशितांशुभरो यतः सितांशुरपि पद्मिनीं निशि विनोति सिद्धिभ्रमम् (?) ॥८०॥
मणिपूतभूतलभूतनूतनचूतराजिविराजितं शुचिसरससरसीसारसरसिजसुरभिरजसा रञ्जितम् ।
परिपाकपेशलहारारा(राजी)हारिहर्म्यकसंकुलं परिहरति गिरिवरमेनमनिशं नैव किन्नरवरकुलम् ॥८१॥
विमलस्मितो भृशविस्मिता गिरिशृङ्गसंगमरञ्जिताः । लसदङ्गरङ्गविवर्तनं रचयन्ति निर्मलनर्तनम् ॥८२॥
विमलस्मिता भृशविस्मितस्मितललितनयनसरोरुहाः गिरिशृङ्गसंगमरञ्जितस्थितमनसि सकलकलावहाः ।
लसदङ्गरङ्गविवर्तनालससंरसकिन्नरसंगता रचयन्ति निर्मलनर्तनान्यतिमदनमदनरसं गताः ॥८३॥
शशिमण्डलाननमण्डलाः श्रवणावतंसितकुण्डलाः । जनयन्ति संततडम्बरं निविडप्रभाभरमम्बरम् ॥८४॥
शशिमण्डलाननमण्डलद्युतिदलितकैरवजालिकाः श्रवणावतंसितकुण्डलक्षनगण्डदर्पणपालिकाः ।
जनयन्ति संततडम्बरं घनवारिशीकरतालिकाः निविडप्रभाभरमम्बरं सुरसिद्धकिन्नरबालिकाः ॥८५॥
निर्दम्भा रम्भा हर्षजुषः शृङ्गारागारालापपुषः । संसारं सारं रङ्गकृतं कुर्वन्त्योऽवन्त्यो दुःखभृतम् ॥८६॥
निर्दम्भा रम्भा हर्षजुषः सुखसखमणिभिः (?) सह हास्यश्रुताः
शृङ्गारागारालापपुषः कषमुखकषितोत्तमकनकनिभाः ।
संसारं सारं रङ्गकृतं कृतकृतिजनतावितप्रमदाः कुर्वन्त्योऽवन्त्यो दुःखभृतं भृतधृतिमनसं सुमनःप्रमदम् ॥

सा (ता) रम्भा रम्भागर्भरुचः स्वच्छन्दा मन्दामोदमुचः। सव्रीडं क्रीडन्त्यो गगने शोभन्ते ऽनन्ते सिद्धघने ॥
सा(ता)रम्भा रम्भागर्भरुचः कुचघटघटिताऽतनुहारगणाः स्वच्छन्दा मन्दामोदमुचः शुचमपहर्तुं जगतः प्रगुणाः।
सा(ता)रम्भा रम्भागर्भरुचः कुचघटघटिताऽतनुहारगणाः स्वच्छन्दा मन्दामोदमुचः शुचमपहर्तुं जगतः प्रगुणाः।
सव्रीडं क्रीडन्त्यो गगने गुरुगजगतिगमना लावणिकं शोभन्तेऽनन्ते सिद्धघने घनजनितातपवारणकम् ॥
उपशम्भुरयं गिरिः पुरः परिबिभ्रत् सुरनिर्मिताः। पुरविविधैरमरद्रुमैर्नवैरमरीयौऽरमरीरमत् सदा ॥९०॥
४ (चतुरशीतिः शृङ्गाणि—) इत्यादिभिश्चतुरशीतिभिरेष शृङ्गैः शृङ्गारितः परित एव भुवस्तलेऽस्मिन् ।
शत्रुञ्जय-क्षितिधरोऽस्ति युगादिदेवपदाम्बुजप्रचरितोद्यतरप्रभावः॥९१॥

इति वर्णयत्यमलकर्णसुधाश्रवया गिरा हरिणवेषसुरे ।
विमलाचलं प्रथमतीर्थमथाऽधिरुरोह स प्रथमतीर्थपतिः ॥९२॥

(आदिजिनदेशना— ) मुदिताश्चतुर्विधसुरा जिनपस्थितये तदैव समवसरणम् ।
रचयांप्रचक्रुरमलप्रतिभं विबुधत्वमेव सुविवेकनिधिः ॥९३॥

इह तीर्थराड् समवसृत्य चतुर्वदनो दिशन् सदुपदेशमसौ ।
परिपूर्य च प्रथमपौरुषिकामभिरामरुक् स विरराम विभुः ॥९४॥

१२ अथ पुण्डरीकगणभृत् स विभोः पदपीठमाप्य निजदेशनया ।
भविनो व्यबोधयदसौ सकलान् स्वगुरुक्रमोन्नतिकृते हि शुभाः ॥९५॥

अपरां प्रपूर्य किल पौरुषिकाम्—उपदेशतः स्वयमपि व्यरमत् ।
भवभावभीरुहृदयोऽन्यदिने गणभृद्वरस्तु स चिन्तितवान् ॥९६॥

(पुण्डरीकगणभृतः सलेखना—) प्रभुरुचिवान् यदनुभाववशाद् मम केवलोद्भवमयं स गिरिः।
मनसेत्यऽवेत्य यतिकोटिवृतः समलेखयत् स विधिवद् गणभृत् ॥९७॥

उक्तं च— (संलेखनास्वरूपम्—)

" सर्वोन्मादमहारोग-निदानानां समन्ततः। शोषणं सर्वधातूनां द्रव्यसंलेखना मता ॥९८॥
यो राग-द्वेष-मोहानां कषायाणां तु सर्वथा। नैसर्गिकद्विषां छेदो भावसंलेखना तु सा " ॥९९॥

प्रतनूचकार स निजां च तनूमपि रोष-तोष-मदनप्रभृतीन्।
अथ साधुकोटिभिरसौ वृतो गणनायकः प्रविदधेऽनशनम् ॥१००॥
अपरेद्युराद्यजिनपः स्वगणेश्वरकेवलोदयकृते सदसि।
विमलाचलस्य महिमानमिति प्रततान मानवधियोऽप्यतिगम् ॥१०१॥
(अनशनं कृतवतः पुण्डरीकस्य कैवल्यम्—) भवमोहसंशयतमश्छिदुरात् भृशशुद्धमुक्तिपदवीविदुरात्[1]।
प्रभुवाक्यतो गणभृतो निभृतः प्रससार केवलमहो सुभृतम् ॥१०२॥
किल केवलावरणहेतुचयं स जिनस्तथा किल विवेचितवान्।
यतिपञ्चकोटिभिरयं प्रकटः प्रहतोऽवगत्य सकलोऽपि यथा ॥१०३॥
यतिपञ्चकोटिभिरमुष्य विभोः शुचि सर्वथाऽप्यवगतं वचनम्।
कथमन्यथाऽनघमघच्छिदुरं तदमीषु केवलमहोऽभ्युदितम् ॥१०४॥

1 वेदकं विदुरम्।

( चैत्र पूर्णिमायांपुण्डरीकः शिवं गतः-- ) अथ चैत्रमासि शुभभासि तदोत्तमपूर्णिमाख्यदिवसे स्ववशाम् ।
स्वशिवश्रियं प्रथममाश्रितवान् गणभृत् स ततो मुनयोऽनुययुः ॥१०५॥
गणनायके सुयतिवर्गयुतेऽप्यपवर्गमाश्रितवतीह सुराः ।
भरताधिपप्रभृतयश्च नृपा अभवन् सुदुःखिनहृदो निखिलाः ॥१०६॥
अनुलिप्य तं मुनितनुप्रचयं शुचिदुग्धनीरनिधितीरभुवि ।
परिलिप्य चन्दनभरैर्ज्वलनादथ संस्कृतिं दिविपदो विदधुः ॥१०७॥
अथ दिव्यगन्धजलवृष्टिभराद् विमलाचलं विमलयन्त्यमराः[1] ।
विततं महोत्सवमुदग्रमुदः प्रथयांबभूवुरचलप्रतिभम् ॥१०८॥
( भरतेन मन्दिरं कारितम्-- ) कृतपीठकं मरकतैर्मणिभिर्जलकान्तरत्नमयगर्भगृहम् ।
विविधेन्द्रनीलशिखरं विलसन्नवहीर-रूपकलसेन[2] युतम् ॥१०९॥
शुचिवज्रनिर्मितसुदण्डमहाध्वजराजितं विविधतोरणकम् ।
द्विकयुक्तविंशतिसुदेवगृहैः परितो विशोभितसुरप्रतिभम् ॥११०॥
कनकात्मवप्रवलयेन धृतं जिनमन्दिरं सुगुरु चारुरुचा ।
रचयांचकार रचनाचतुरो भरताधिपो रुचिरवासनया ॥१११॥ ( त्रिभिर्विशेषकम् )
इह मूलमन्दिरसुगर्भगृहे प्रथमाऽर्हतो विमलमूर्तिमसौ ।

१ प्र० विमलयममराः । २ प्र० लसद्भविहीर- ।

प्रभुपुण्डरीकगणभृत्प्रतिमा-सहितां न्यवीविशदिलाधिपतिः ॥११२॥
अजितप्रभुप्रभृतितीर्थकृतो जिननेमिना विरहितान् भरतः ।
संमतिष्ठपद् वृषभदेवगिरा परितो जिनेन्द्रगृहकेषु तदा ॥११३॥
रवि-चन्द्र-भौम-बुध-वाक्पतयो भृगुपुत्र-राहु-शनि-केतुयुताः ।
भरतेश्वरं प्रथमसंघपतिं न्यगदन् पुरोविरचिताञ्जलयः ॥११४॥
विजयस्व संघपतिषु प्रथमाऽखिलजैनमूर्तिपदपद्मतले ।
रचयाऽस्मदीयरुचिरप्रतिमा नव सैवं (?) जन्मफलमस्त्विति नः ॥११५॥
इदमीयमाग्रहमवेक्ष्य नृपः प्रणिपत्य स प्रभुमपृच्छदिति ।
क्रियते प्रभो! कथमिदं वचनं प्रभुरभ्यधक् शृणु संघपते! ॥११६॥
इह भस्मकग्रहमुखा उडुपा अपि धर्मकर्मविहितैकहृदः ।
बहुकालराशिपरिभोगकृतो न हि तुच्छजीविनि जने विदिताः ॥११७॥
नव सर्वदा पुनरमी उडुपा विदिता पुरातनजिनांह्रितले ।
अभवन् स्वमूर्तिगिरतस्त्वमपि कुरु पूर्वरीतिमुचितोपचितम् ॥११८॥
(प्रभुवाक्यतः जिनमूर्तेरधः नवग्रहमूर्तिः—) प्रभुवाक्यतः स्थितिमिमां जगतो भरतोऽवगत्य स तदाग्रहतः ।
घटयां चकार च नव प्रतिमाः सकलार्हतां पदसरोजतले ॥११९॥

१ अत्र मषीपाताद् न स्पष्टं गम्यते ।

(कपर्दी—) अथ सार्धसागरमितायुरसावमरो द्वितीयसुरलोकभवः ।
प्रथमप्रभुं स तु कपर्दभिधः प्रणिपत्य हर्षभरतो न्यगदत् ॥१२०॥
भगवन्नहं सपदि सिद्धगिरिं प्रति भक्तयात्रिकजनस्य सदा ।
४ अतिदुष्टदेवकृतविघ्नभरं निजजीविताबधि विहन्मि भृशम् ॥१२१॥
प्रभुरुचिवानथ कपर्दमर ! त्वदभिग्रहः सुकृतिनां सुखकृत् ।
चिरमेधितामिह पदे बहवो भवितार एव सुकपर्दिसुराः ॥१२२॥
अथ खेचरा अपि सुवासनया जिनपं प्रणम्य दशलक्षमिताः ।
किल जैनपूजनमिहाऽनुदिनं प्रविदध्म:आग्रहमिमं जगृहुः ॥१२३॥
(जाह्नवी गिरिनामधेयकलितां नदीमुदमज्जयत्— ) अथ जाह्नवी भरतराजकृतं प्रविलोक्य तीर्थभुवि जैनगृहम् ।
गिरिनामधेयकलितां सुनदीमुदमज्जयन्निजविभावभरात् ॥१२४॥
( सिद्धगिरितः सर्वे उत्तीर्णाः—) इति भावतः सुर-नरैः खचरैः परिपूरिते सकलधर्मविधौ ।
१२ भरतेन देवपतिनाऽनुगतः प्रथमो जिनोऽप्युदतरद् गिरितः ॥१२५॥
(चमत्कारपुरम्—) क्षितिभृत्तले चमचकारपुरं निकषा स निष्करुचिराङ्गरुचिः ।
समवासरद् गणभृतो विरहोद्भवचक्रवर्तिगुरुदुःखभिदे ॥१२६॥
अथ स प्रभुर्भरतसंघपतिं निजगाद संसदि सदुःखसुखम् ।
सुतशोकसंकुलतयाऽऽकुलता कुलतापकृत् किमु धृता भवता ? ॥१२७॥

गणभृद्वरस्य तनयस्य शिवाध्वनि जग्मुषः परमसौख्यजुषः ।
विरहाद् विभर्षि हृदि दुःखमिदं किमु पुण्डरीकयतिनस्त्वमपि ॥१२८॥
विततोग्रपापनिकुरम्बयुतं सुकरम्भितं विविधदुःखभरैः ।
४ अपहाय संभवममी अपुनर्भवमाश्रयन्ति यतिनो हि यदा ॥१२९॥
परमं महः परम एव महः परमं सुखं च तदहः परमम् ।
यतिनां तदा भवति भव्यजनैः किमु घर्तुमर्तिरुचिता कृतिभिः ॥१३०॥
अपहाय तन्निजसुतस्य शुचं कुरु धर्मकर्म भव निर्मलहृत् ।
८ स्वजने निजं हृदयरङ्गमहो सुकृतैर्नवैः प्रकटयन्ति शुभाः ॥१३१॥
इति चक्रभृत् प्रथमतीर्थपतेर्वचनं निशम्य शमसौम्यमनाः ।
इह पञ्चकोटिमितरस्य गृहाण्यथ पत्तने व्यरचयन्नृपतिः ॥१३२॥
(माहनाः—) धन-धान्यराशिनिभृतेषु भृशं सकलेषु सद्मसु स तेषु नृपः ।
२ शुचिमाहनान् परमधर्मरतान् समतिष्ठपत् परिहृतान्यमतीन्[1] ॥१३३॥
इह पञ्चविंशतिसुलक्षजिनेश्वरमन्दिराणि भरताधिपतिः ।
प्रतिधाम पौषधगृहं च पुरे स्थपतेः करादरचयद् मुदितः ॥१३४
रुचिरं स्वयं विरचितं नगरं भरतो विलोक्य भृशहर्षभृतः ।
अतनुमहोत्सवमसावतनोद् जिनमन्दिरेषु परिपूज्य जिनान् ॥१३५॥

१ परिहृता आरी. अमतिर्यैस्तान् अथवा 'परिहृतान्यमतीन' इति सुघटम्।

(अर्हद्दासनम्, आनन्दपुरम्, आदिपुरम्, बृहत्पुरम्, चमचकारपुरम्—) इदमर्हद्दासनमथाऽऽदिपुरं सुबृहत्पुरं चमचकारपुरम् ।
इति नामभिः क्षितितले सकले विदितं सुपत्तनमभूदमलम् ॥१३६॥ उक्तं च—

४ शत्रुंजयतलवीढे बावीसं जोयणाण वित्थरीयं । शत्रुंजयतलपीठे द्वाविंशतिर्योजनानां विस्तृतम् ।
नयरं रयणागारं भरहेसरथप्पीयं आसि ॥१३७॥ नगरं रत्नागारं भरतेश्वरस्थापितमासीत् ॥१३७॥
पणवीस लक्ख जिणहर-पोसहसालाण कोडि पंचेव । पञ्चविंशतिलक्षाणि जिनगृह-पौषधशालानां कोट्यः [पञ्चैव
माहण-सावयकोडी पंच उ निवसन्ति तत्थ पुरे ॥१३८ ब्राह्मण-श्रावककोट्यः पञ्च तु निवसन्ति तत्र पुरे
अरिहंतासण-आणंद-पुरं तह आदिपुरमेयं । अर्हद्दासन-आनन्द-पुरं तथा आदिपुरमेतत् ।
चोंकारं गरुयर-नयरं एयस्स नामाइं ॥१३९॥ चमचकारं गुरुतरनगरमेतस्य नामानि ॥१३९॥

(भरतः स्वपुरीं गमवात्—) पुरमत्र सत्रगृह-सारसरःप्रमुखैर्विभूष्य परितो भरतः ।
समनुव्रजन् प्रभुममुं स्वपुरीं प्रति सोऽचलत् सकलसंघयुतः ॥१४०॥

गरयन् विवेकिनिवहं लघयन्नविवेकिनो भुवि स संघपतिः ।
अतिवृंहयश्च सुकृतानि भृशं ह्रसयन्नघानि सुधनव्ययतः ॥१४१॥

जिनधामभिश्च नगरीनिवहं सुहिरण्मयैस्तिलकयंस्तु पथि ।
भरतेशचक्रभृदयोध्यपुरं निकपाऽपहाय कलुपानि ययौ ॥१४२॥

( भरतः स्वपुरिमाविशत्— ) शकटानने स जिनपोऽपि वने समवाऽऽससार सुरसेव्यपदः ।

१ गुरुं कुर्वन् । २ लघून् कुर्वन् । ३ ह्रास कुर्वन् । ४ प्र० जिनपो विपने ।

प्रणिपत्य च प्रभुमिमं प्रमदाद् भरतेश्वरोऽविशदयोध्यपुरम् ॥१४३॥

गजराजरूढ इह संघपतिर्हरिणाऽभ्रमुप्रियजुषा च युतः ।
प्रययौ महापथमुखं स यदा प्रमदास्तदाऽऽपुरिति सोत्सुकताम् ॥१४४॥

[1]स्तनं धयन्तं ललितं स्तनंधयं विहाय वातायनजालकस्था ।
ववर्ष दुग्धं सुरसृष्टपुष्पवृष्ट्या समं काऽपि सुवासिनीह ॥१४५॥

हारार्धमुक्ताफलपूर्णमुष्टिर्गवाक्षमागत्य नृपं सखीभ्यः ।
संदर्शयन्ती विरलाङ्गुलीकाः संवर्धनं काऽपि चकार तस्मै ॥१४६॥

कयाऽपि सख्या जगदे विमुग्धा दूरं किमायस्यसि वीक्षणाय ।
त्वदीयहारस्थितनायकान्तर्भूनायकं पश्यसि किं न सौख्यात् ॥१४७॥

कुतूहलात् काश्चन काश्च सर्वसंघागमालोकनपुण्यलोभात् ।
सौभाग्यतः संघपतेश्च काश्चिद् विभूषयामासुरितो गवाक्षान् ॥१४८॥

आशीर्भिरुच्चैः स गुरुव्रजस्य सन्माङ्गलिक्यैर्वरवर्णिनीनाम् ।
जयारवैर्बन्दिजनस्य सार्धं विवेश सौधं नृपचक्रवर्ती ॥१४९॥

इन्द्रैर्नरेन्द्रैश्च ततः समृद्धैः संघाधिपत्वस्य महाभिषेकः ।
संवत्सराण्यष्ट सुपुष्टहर्षात् चक्रेश्वरस्य प्रथितः प्रचक्रे ॥१५०॥

1 अभ्रमुप्रियो-हस्ती ।

संघाधिपं श्रीभरतं समग्राः सुधाभुजस्ते वसुधाभुजश्च ।
स्नेहेन सुश्लाघ्य सुभूष्य हर्षाद् यथागतं पुण्यभृतोऽथ जग्मुः ॥१५१॥
(आदिजिनस्य परिवारः— ) युगादिदेवस्य भुवस्तलेऽस्मिन् यथाऽन्यतो बोधयतश्च भव्यान् ।
चतुर्युताऽशीतिसहस्रसंख्यास्तपोधना धर्मधना अभूवन् ॥१५२॥
श्रीब्राह्मिका-सुन्दरिकादयस्तु लक्षत्रयेण प्रमिताः सुसाध्व्यः ।
श्राद्धास्त्रिलक्षाणि सहस्रपञ्चाशताऽधिकानि प्रबभूवुरत्र ॥१५३॥
सुश्राविकाणामिह पञ्च लक्षाश्चतुष्कपञ्चाशदथो सहस्राः ।
चतुःसहस्री सह सप्तशत्या पञ्चाशताऽस्ति श्रुतधारिणां च ॥१५४॥
इहाऽवधिज्ञानियतीश्वराणां जाताः सहस्रा नव संयमाढ्याः( ढ्याः )
सुनिर्मलाः केवलिनो मुनीन्द्राः संजज्ञिरे विंशतयः सहस्राः ॥१५५॥
एतन्मिता वैक्रियलब्धिमन्तः षड्भिः शतैस्तेभ्य इहाऽधिकत्वम् ।
सहस्रका द्वादश षट्शतानि पञ्चाशदासीदिति वादिवृन्दम् ॥१५६॥
एतन्मिता एव यतीश्वरास्ते ज्ञानं मनःपर्ययकं वहन्तः ।
द्वाविंशतिः संयमिनां सहस्राः विमानकान्यापुरनुत्तराणि ॥१५७॥
श्रीपुण्डरीकप्रमुखा गणेशाश्चतुर्युताऽशीतिमिता बभूवुः ।
आद्यार्हतोऽभूत् परिवार एष सुरा-ऽसुरैर्वन्दितपादपद्मः ॥१५८॥

(अष्टापदे आदिजिनः—) व्रतं प्रपाल्येति सुपूर्वलक्षं स्वामी ततोऽष्टापदशैलशृङ्गे।
समं सहस्रैर्दशभिर्यतीनां सपादपस्योपगमं प्रपेदे ॥१५९॥
(अष्टापदं भरतो गतः—) इतः स चक्री गिरिपालमुख्यैर्विज्ञापितो यावदिदं स्वरूपम्।
४ समाययौ तावदिहाऽऽशु पाद-चारेण दुःखाञ्चनकं दिदृक्षुः ॥१६०॥
पर्यङ्कनामासनमाश्रितं तं तथास्थितं वीक्ष्य स वीक्षणाभ्याम्।
स चक्रवर्ती समशोक-हर्षवर्ती क्षणादेव तदा बभूव ॥१६१॥
८ निजावधिज्ञानत एव सर्वे सुरेश्वराः स्वासनकम्पहेतुम्।
जिनेन्द्रनिर्वाणदिनं विबुध्य समुत्सुकीभूय समं समीयुः ॥१६२॥
कालेऽवसर्पिण्यभिधे तृतीया-ऽरकस्य पक्षेषु ततः स्थितेषु।
नवाऽधिकाऽशीतियुतेषु माघाऽसितत्रयोदश्यभिधे तिथौ च ॥१६३॥
१२ अभीचिनक्षत्रगते शशाङ्के पर्यङ्कनामासनसन्निविष्टः।
स्थित्वाऽऽदराद् बादरकाययोगे वाक्-चित्तयोगौ निरुरोध सम्यक् ॥१६४॥
सूक्ष्मेण योगेन शरीरकस्य निरुध्य तं बादरनामधेयम्।
वाक्-चित्तयोगावपि सूक्ष्मरूपौ निषेध्य सूक्ष्मक्रियमित्यऽवाप ॥१६५॥
(शिवं प्राप्तः श्रीआदिदेवः—) आसादयत् सूक्ष्मशरीरयोगं छिन्नक्रियं ध्यानमिदं तुरीयम्।
अदीर्घपञ्चाक्षरवाक्प्रमाणमशिश्रियत् श्रीजिनराज आद्यः ॥१६६॥

परविहकावद् गतबन्धनोऽयं शिवं यथाऽगाद् ऋजुना जिनेन्द्रः ।
इत्थं सहसा दश सयतीनां निःश्रेयसं शीघ्रमशिश्रियंश्च ॥१६७॥
सुखं तदेव प्रससार सर्व-लोकस्य तेषामपि नारकाणाम् ।
सर्वास्ववस्थासु सुखाय सन्तः स्युः सर्वविश्वस्य किमत्र चित्रम् ॥१६८॥
(त्वरेन भागस्य रोदनं लिखितम्—) दुःखेन संपूर्णहृदन्तरालश्चक्रेश्वरः सोऽत्यनरालबुद्धिः (?) ।
गलावलग्नेन सुरेश्वरेण सुशिक्षितो रोदनमप्यऽपूर्वम् ॥१६९॥
यः सर्वदा निर्मलमाङ्गलिक्यशब्दैः परिप्रीतमना बभूव ।
विडम्ब्य शोकेन विरोधतेऽसावहो ! भवोऽयं खलु कष्टरूपः ॥१७०॥
सुरेश्वरेण प्रतिबोधितोऽथ शुचं मुमोचाऽऽशु स चक्रवर्ती ।
गोशीर्षकाष्ठानि तदाऽऽभियोगिदेवाः समानिन्युरिहेन्द्रवाक्यात् ॥१७१॥
वृत्तां चितां पूर्वदिशीह याम्यां ऽपरां तदेक्ष्वाकुमहर्षिहेतोः ।
प्रातीच्यभागे चतुरस्ररूपामन्यर्षिहेतोर्विदधुश्च देवाः ॥१७२॥
संस्नाप्य दुग्धाब्धिजलैर्जिनेन्द्रदेहं विमृज्योत्तमदेह(ध)दूष्यैः ।
शृङ्गारयित्वा मणिभूषणैश्राग् ननाम तत्पादयुगं सुरेन्द्रः ॥१७३॥
तदेव देहं सपमात्मशीर्षे संस्थाप्य शीघ्रं नृविमानमध्ये ।
इन्द्रो निचिक्षेप तथाऽन्यदेहानन्ये सुरा अन्यनृयानकेषु ॥१७४॥

प्रमोर्विमानं स्वयमिन्द्र एवाऽन्येषां विमानान्यपरे च देवाः ।
उत्पाटयामासुरिहाऽथ देव्यः संगीतकं चक्रुरुदग्रमग्रे ॥१७५॥
सुतालरासान् ददतीषु सर्व-देवीषु देवेषु च तत्पुरस्तात् ।
४ कुर्वंस्तु वज्रैरहितोरणानि (?) निन्ये विमानान्युपचित्यमिन्द्रः ॥१७६॥
सुरेश्वरादेशवशादथाऽग्निकुमारदेवैर्मुमुचेऽत्र वह्निः ।
वायुं ततो वायुकुमारकाश्च समन्ततश्चक्रुरिहोच्चवेगम् ॥१७७॥
कर्पूरपूरं किल भारशोऽत्र मधूनि सर्पींषि च कुम्भशस्ते ।
चित्यासु देवा ववृपुस्ततोऽब्दाः क्षीराब्धिनीरैः शमयांबभूवुः ॥१७८॥
८ ऊर्ध्वस्थितां दक्षिणदंष्ट्रिकां च जग्राह सौधर्मपतिः प्रमोदात् ।
ईशाननाथस्तत ऊर्ध्वसंस्थां वामां गृहीत्वा मुमुदे हृदन्तः ॥१७९॥
अधस्तनीं दक्षिणदंष्ट्रिकां च निनाय हर्षाच्चमरेन्द्र एषः ।
वामां बलीन्द्रोऽपरवासवास्तु दन्तान् सुरा अस्थिचयं विनिन्युः ॥१८०॥
१२ सुश्रावका अप्यथ याचमाना दत्ताग्निकुण्डत्रितयाः सुरेन्द्रैः ।
तेनाऽग्निहोत्रेण युताः पृथिव्यां सद्ब्राह्मणाः शुद्धतमा बभूवुः ॥१८१॥
केचित्तु भक्त्या प्रभुदेहभस्म ववन्दिरे निर्मलचित्तरङ्गाः ।
ते तापसा भूमितले प्रसभ्रुविहाय नीरं कृतभस्मशौचाः ॥१८२॥

१ नदीषु प्र० ।

चिताश्रयस्थानभुवि प्रचक्रुः स्तूपान् सुरा रत्नमयान् महोच्चान् ।
अष्टाहिकां सर्वसुरा विधाय नन्दीश्वरे स्वस्वदिवं समीयुः ॥१८३॥

स्वमाणवस्तम्भगतां जिनेन्द्रदंष्ट्रां विधायाऽथ चतुःसुरेन्द्राः ।
कल्पद्रुपुष्पैरनिशं सुभक्त्या संपूजयामासुरिहैकचित्ताः ॥१८४॥

(अष्टापदे जिनगेहम्—) अष्टापदेऽचीकरवैप चक्री सुविस्तृतं योजनमेकमत्र ।
उच्चैस्त्रिगव्यूतिमितं जिनेन्द्रगेहं तदा वर्धकिरत्नहस्तात् ॥१८५॥

चैत्यं समं सिंहनिषद्ययाऽत्र मध्ये प्रधाना मणिपीठिकाश्च ।
पट्टात्तदूर्ध्वं पृथुलोऽस्ति देवच्छन्दाभिधानो मणिरत्नरूपः ॥१८६॥

स्वस्वप्रमाणाऽऽकृतिवर्णयुक्ता युगादिदेवादिजिनेश्वराणाम् ।
मूर्तीश्चतुर्विंशतिसंमितास्तु सुरत्नरूपा रचयांचकार ॥१८७॥

पुरश्चतुर्विंशतिरत्नदीपास्तथा चतुर्विंशतिरत्नघण्टाः ।
अग्रे चतुर्विंशतिमाङ्गलिक्या-ऽष्टकानि चक्रे सुमणीमयानि ॥१८८॥

द्वाराणि चत्वारि समण्डपानि व्यधापयत् षोडश तोरणानि ।
सस्वर्णकुम्भान्यथ माङ्गलिक्यान्यष्टौ चतुष्कं मुखमण्डपानाम् ॥१८९॥

पुरश्चतुर्णामपि मण्डपानां श्रीवल्लरीमण्डपकास्तदन्तः ।
प्रेक्षाभिधामण्डपकास्तु तेषां मध्येक्षुवाटाः खलु वज्ररूपाः ॥१९०॥

(न्यपः—) सिंहासनान्येष्वथ मण्डपाग्रे व्यरीरचत् संणिपीठिकाश्च ।
स्तूपास्तदूर्ध्वं शुचिरत्नरूपास्ततश्चतुष्कं मणिपीठिकानाम् ॥१९१॥
प्रत्येकमेतासु धनुश्शतोचाश्चैत्योन्मुखाः सत्प्रतिमाश्चतस्रः ।
श्रीवर्धमान-र्षभ-वारिषेण-चन्द्राननान्ताः शशिकान्तरूपाः ॥१९२॥
तासां पुरश्चैत्यनगास्तदग्रे इन्द्रध्वजाः पीठगताः पुरस्तात् ।
वाप्यस्त्रिसोपानयुता जलाढ्या नन्दाभिधाना रचयांचकार ॥१९३॥
चैत्योर्ध्वभागे कलशांस्तु पद्मरागात्मकान् स्वर्णमयांश्च दण्डान् ।
ध्वजान्वितांश्चन्दनहस्तकांश्च व्यधापयत् तत्परितश्च वप्रम् ॥१९४॥
नवाधिकाया नवतेर्निजानां सहोदराणां प्रतिमाः प्रधानाः ।
अकारयद् रत्नमयीस्तदग्रे मूर्तिं निजां योजितपाणिपद्माम् ॥१९५॥
चैत्याद् बहिस्तूपमथो जिनस्य स्वबान्धवानां नवयुग्नवानाम्[1] ।
स्तूपैर्वृतं तं चतुरोऽग्रलोहारक्षान् सरक्षश्चतुरो व्यधत्त ॥१९६॥
गिरिं ततोऽसौ निजदण्डरत्नेनोत्कीर्य तं योजनसंमितानि ।
सोपानकान्यष्ट सुपुष्टबुद्धिर्नृणामलङ्घ्यानि चकार चक्री ॥१९७॥
चैत्यं विधाप्येति ततः प्रतिष्ठां विधाय मन्त्रैर्विधिना जिनोक्तैः ।

1 प्र० नवयुग्नव ।

श्वेतांशुकः स्नाततनुस्त्रिधाऽथ परीय पूजां विदधे विवेकी ॥१९८॥

पीयूषपूरैः स्नपयांचकार ममार्ज भक्त्योत्तमदेवदूष्यैः ।
सचन्दनैस्ता विलिलिम्प दिव्यपुष्पैरिहाऽऽनर्च जिनेन्द्रमूर्तीः ॥१९९॥

विभूषणैश्चोपविभूष्य धूपमुद्ग्राहयामास स सुवासनोऽयम् ।
आरात्रिकं माङ्गलिकप्रदीपं कर्पूरपूरैरुदतारयच्च ॥२००॥

भूत्वा जिनाग्रे भरताधिपोऽयं तदा चतुर्विंशतितीर्थनाथान् ।
तुष्टावथाऽऽरोप्य मनः स्वकीयं तुष्टाव साक्षादिव संविभाव्य ॥२०१॥

( अष्टापदाद् अयोध्यायामागाद् भरतः— )

प्रासादं मौदमेनं रुचिरमणिगणैर्निर्मितं पञ्चवर्णैः कुर्वन्तं कान्तिभारैर्वियति विततरुक् संततं शक्रचापम् ।
स श्रीमांश्चक्रवर्ती भरत इह वलद्ग्रीवमालोकमानस्तस्मादष्टापदाद्रेरुदतरदर्हद्भक्तिसंपूर्णचित्तः ॥२०२॥

विवेकार्कोद्भूतद्युतिविकसिते वीततमसि दधद्धैमं हंसं स्थितमिव विभुं हृत्सरसिजे ।
अयोध्यायामागाद् भरतनृपतिः कीर्तिनिवहैर्वितन्वन् ब्रह्माण्डोदरमतुलकर्पूरकलशम् ॥२०३॥

श्रीरत्नप्रभसूरिसूरकरतो दोषानुषङ्गं त्यजन् यो जाड्यस्थितिरप्यभूत् प्रतिदिनं प्रासादभुतप्रातिभः ।
तेन श्रीकमलप्रभेण रचिते श्रीपुण्डरीकप्रभोः श्रीशत्रुंजयदीपकस्य चरिते सर्गोऽजनिष्टाऽष्टमः ॥२०४॥

॥ इति श्रीभरतसंघपतिपदप्राप्ति-शत्रुंजयप्रकाशन-श्रीयुगादिनाथ-
निर्वाण-अष्टापदप्रासादवर्णनो नाम अष्टमः सर्गः ॥

## ( काव्यसमाप्तिः )

( भारिजिनविरहात् सशोको भरतः— )

अथ भरतमहीशः श्रीयुगादीशदेवं त्रिभुवनपतिपूज्यं संस्मरन्नेव नित्यम् ।
अंकृतन कृतिसंगं नाऽपि नाट्यादिरङ्गं तृणमिव निजमङ्गं मन्यते स्माऽप्यनङ्गम् ॥१॥

तूलिततलिनलीनोऽप्याप न स्वापमेष सरसमशनमश्नन्नाऽपि सुस्वादसौख्यम् ।
अरमत न रमाया रामणीयेऽपि मायारहितहृदयसंस्थं स्वामिनं सेवमानः ॥२॥

विषमिव विषयौघं मन्यमानः समग्रं नरपतिरिह तातस्यादिदेवस्य दुःखात् ।
सुरपतिरुपगत्य यूतभूतप्रभूताभिनवकुतकतोऽमुं शोकहीनं चकार ॥३॥

सुरगुरुमुखपद्मात् श्रीयुगादीश्वरस्य प्रचुरचरितबन्धान् भव्यकाव्यप्रसिद्धान् ।
सुकृतभररसाढ्यान् भारतेन्द्रं महेन्द्रः परिषदि विनिषण्णः श्रावयामास नव्यान् ॥४॥

क्षणमपि सुविसूक्तैर्दिव्यगीतैर्मुहूर्तं प्रतिकलममरीणां नूतनैर्नृत्यकृत्यैः ।
भरतमुं निविनोद्यऽऽनन्द्य वाऽनिन्द्यभाक् त्रिदिवमथ जगाम स्वं स सौधर्मनाथः ॥५॥

( गतशोको भरतः— ) तदनु भरतनाथो मन्त्रिभिर्मन्दमन्दं विहितविमलचित्तः शुद्धसौहार्दशाली ।
अमुनगतुलसौख्यं सारशृङ्गाररङ्गोऽखिलवलयमिलायाः पालयंल्लीलयैव ॥६॥

अथ शिथिलितशोको मन्दमन्दं महीशः क्वचिदपि दिवसेऽसौ प्रावृतः प्रेयसीभिः ।
( भरतस्य जलक्रीडा— ) शुचिसुरभिजलान्तः क्रीडनं कर्तुकामोऽकलयदकलुषोऽयं दीर्घिकां दीर्घकान्तिः ॥७॥

१ अकृति न प्र० । २ भरतम् उ ।

अभिनवनलिनालीसंनिलीनालिशब्दैः प्रियमिव सुवदन्ती संगमं वा चिकीर्षुः ।
सुललितसलिलौघोत्तुङ्गरङ्गत्तरङ्गैर्भरतनृपतिनेयं वापिकाऽवापि कामात् ॥८॥
नृपमुखशशिकान्त्या चक्रवाकप्रियायाः प्रदुरितभयेनाऽऽलिङ्गनं सचकोराः ।
मुदमुपययुरुच्चैश्चञ्चरीकाः स्वलोभात् कुवलयमुपजग्मुः संभ्रमात् त्यक्तपद्माः ॥९॥
सरसि विकचपुष्पाकल्पसंभूषिताङ्गं नृपतिमनुसरन्त्यः सुभ्रुवो विभ्रमाढ्याः ।
कलितकनकशृङ्गा रम्यशृङ्गारभाजः प्रविविशुरनु धर्मं संपदो धामनीव ॥१०॥
सुललितललनानां मञ्जुमञ्जीरनादैः श्रुतिसुखमिह भूयश्चानुभूय प्रभूयः ।
अभि गगनमरालीमूतकण्ठैर्मरालैः कुतुकविकसिताक्षैः शीघ्रमुड्डीनमुच्चैः ॥११॥
विरहिविधुतचित्ताद् विप्रयोगाग्नितप्तादिह रति-रतिनाथौ किं शयाते प्रणश्य ।
कनककमलरेणुर्नीलपद्मैर्नवीनोत्तरपट इव चित्रो विस्तृतो दृश्यते तत् ॥१२॥
जिनपननपनस्थाद् वह्निनितो नित्यभीरुर्वसति मदनचौरो नीरदुर्गे निसर्गात् ।
तरणि-शशधराभ्यां दीपितं शस्त्रसंघं कमल-कुवलपाख्यं बिभ्रतेऽहर्निशं तत् ॥१३॥
इति धृतधृतिरुच्चैर्वीरशृङ्गारिराजो भरतनृपतिरन्तःशुद्धवसन्तकस्य (?) ।
अरमत जलपूरे संप्रविश्य प्रशस्यप्रतिम इह महेलाः खेलयन् हेलयैव ॥१४॥
प्रमुदितवनिताभिः प्रेरिताः स्वर्णशृङ्गैः सरलसलिलधाराश्चाङ्किदेहे पतन्त्यः ।

१ गवमदेव ।

सुकनकनलिकाभिः कामधानुष्कमुक्ता इव रजतशराणां राजयो रेजिरेऽत्र ॥१५॥
युगपदभित उग्रयुग्माणिनीबाहुशृङ्गप्रसृतसलिलवेणिश्रेणिगुम्फान्तरस्थौ ।
भरतपति–सुभद्रादम्पती रेजतुस्तौ किमु रति–रतिनाथौ रूप्यसन्मण्डपाधः ॥१६॥
विविधकरविभूषाकान्तिजातेन्द्रचापान्तरसमुपगताभ्यः सत्कटाक्षैर्युताभ्यः ।
विपुलजलततिभ्यः कामबाणावलीभ्यः सभय इव पुरोऽधाद् वारणं प्रौढपद्मम् ॥१७॥
अथ भरतनृपोऽपि प्रेयसीचित्तभूमौ नवमनसिजवृक्षाङ्कुरराजिप्ररूढाम् ।
सपदि किल निनीषुर्वृद्धिमम्भोजपत्रप्रकटपटुपुटौघैर्वारिवाहोऽभ्यषिञ्चत् ॥१८॥
भरतनृपतिमुक्ता निर्मला नीरधाराश्चकितवलितनारीकुन्तलालीनिलीनाः ।
किमु गगनगङ्गाः संमिलन्त्यो यमीभिः[1] व्रिजमनसिजपुण्यं स्नानतो वर्धयन्त्यः ॥१९॥
क्षितिपतिकरनिर्यन्नीरपूरस्फुरन्त्योऽञ्चितनयनमाला नायिकानां विरेजुः ।
निजनिजहृदयोत्थस्येव मीनध्वजस्य ध्वजशफरगणः किं दृश्यते चञ्चलोऽयम् ॥२०॥
प्रबलनृपकराग्रात् पेतुषो वारिराशेर्दृढकुचतटघातात् शीकरैः प्रोच्छलद्भिः ।
नरपतिवनितानामास्यशीतांशवोऽमी उडुभिरिव समन्तादावृतास्तत्र रेजुः ॥२१॥
धरणिरमण एवं सर्वतः सर्वरामाभिरमिह रमयित्वाऽनङ्गरागाभिरामाः ।
सकलसलिलकेलौ कोमलाऽङ्ग्यः कलावानतिशिथिलितभावा भावयामास विज्ञः ॥२२॥

1 यमुनाभिः ।

स चिकुरनिकुरम्बं काञ्चनाऽम्भोजनालैर्निजकमिह नियम्य स्वर्णरुक् कीरसंस्थः ।
सुरगिरिरिति नीलं विद्युता वेष्टिताङ्गं दधदिव नवमेघं राजराजो रराज ॥२३॥
तदनु सरसरूपाः निस्सरन्त्यः सरस्याः कलितजलजराज्यो राजनार्यो विरेजुः ।
४ मदनमयगणव्याऽनङ्गमस्त्राणि नीत्वा रतिरिव बहुरूपा चेलुषी जेतुमुर्वीम् ॥२४॥
मलयजघनसारैः स्मेरकाश्मीरपूरैः घनमृगमदसारैः श्वेतशोणाऽसिताभम् ।
शशभृति पिहितार्धे सैंहिकेयेन सार्धं गगनमिव सरोऽभाद् गोपतेर्निर्गमेण ॥२५॥
अथ भरतनरेन्द्रः क्लिन्नवासांसि मुक्त्वा शुभवशातदुकूलैर्भूषितो भाभिराभात् ।
८ परिहृतभृशवर्षत्प्रावृषेण्याऽम्बुवाहः परिवृत इव सूर्यः शारदैर्वारिदौघैः ॥२६॥
तदनु भरतनाथे चित्रशालां विशालामुपगतवति सर्वान्तःपुरीभिः परीते ।
नवनिधिपतिदैवैरर्पितं भूषणौघं तिलक इह सुवर्णोऽभ्यानयत् सत्करण्डे ॥२७॥
भरतनृपतिमर्कस्तैर्निधीनामधीशैः सुरभुवनमणीभिर्निर्मितां भूषणालीम् ।
२ प्रमुदितवनितानां देहसंभूषणार्थं द्रुततरमुपनिन्युः पेटिकाश्चेटिकाभिः ॥ २८ ॥
भरितं भाल आरभ्य— ) कुंकुमरसपजलेपोऽलंकृताङ्गो विशेषाद् अचिररुचिरशेषप्रेयसीप्रेमपूर्णः ।
अविकलनिजरूपं वीक्षितुं स क्षितीशोऽविशदमलतराभाऽऽदर्शगेहं स्वमानम् ॥२९॥
( भागाय सितशिखिमित्र— ) विमलमुकुरभित्तौ स्वस्वरूपं सुऽऽरूपं सकलमकलयंस्तत् प्रत्युपाङ्गं सरङ्गः ।

१ सुरतेः पूर्वेस्य वा । २ भाजनम् । ३ स्वपरिमितम् ।

सरलकरकनिष्ठां नष्टकान्ति समग्राङ्गुलिषु कलितदैन्यां तामिवेक्षांचकार ॥३०॥
किमियमतिविशोभा दृश्यते मेऽङ्गुलीभिश्चकितविकसिताक्षो वीक्षते यावदेषः ।
भुवि परिहृतमुद्रां भूषणानास्थ एव क्षितिप इह कनिष्ठां लक्षयामास तावत् ॥३१॥
४ विविधविभविभूषाभूषिताङ्गेष्व एषा यदित(!) विगतशोभा दृश्यते मे कनिष्ठा ।
अतनुरुचिरताऽसौ तत्र नित्या नितान्तं न तनुरुचिरता च प्रेक्ष्यते चिन्त्यमाना ॥३२॥
इति मनसि विचार्याऽऽश्रयंतो वर्यरत्नाभरणमणमहासीद् यद् यदङ्गात् क्रमेण ।
८ अजनि भृशकृशश्रि स्वीयकान्त्या वियुक्तं कनकनलिनवत् तद् भानुभासा विहीनम् ॥३३॥
जगदधिपतिमोहः स्वीयसंसारगेहे दुरितसलिलपूर्णं राज्यकुम्भं निधातुम् ।
मम शिरसि किरीटं दासरूपस्य नित्यं स्थिरयति तदपास्यैव तद् दूरयामि ॥३४॥
तिलकमपि किमेतत् पूज्यपादप्रणामात् क्षितितलभवरेणुस्पर्शपुण्यान्तरायम् ।
श्रवणयुगविभूषाकुण्डले तत् कुतो नो भवति भवतितीर्षा चेत् ततः शास्त्रमेव ॥३५॥
२ किल ललितललन्त्याऽलंकृतो नो गलः स्यात् सुकृतमधुरसत्यैर्भाषितैश्चेद् विहीनः ।
मणिगणमयदेवच्छन्दसा नो सशोभं हृदयमदयमिन्द्रच्छन्दसाऽप्यत्र न स्यात् ॥३६॥
भवतिमिरहरं स्याद् निर्मलं ध्यानतेजो हृदि यदि विजयाख्यच्छन्दसा किं ततः स्यात् ।
यदि जिनपतिपूजालंकृतिः पाणिपद्मे कनकवलयबन्धे कोऽस्तु निर्बन्धभावः ? ॥३७॥

१ ललन्ती गलालंकारः । २ निर्दयम् । ३ इन्द्रच्छन्दो हृदयभूषणम् । ४ विजयच्छन्दोऽपि तदेव ।

इति सकलशरीरालोकरम्यत्वमेतत् निजमनसि विचार्योत्तार्य चातुर्यवर्यः ।
अघवपुषि वपुषि स्वे धर्मनिःस्वे स विश्वेश्वर इह हृदि भावं चिन्तयामास सत्यम् ॥३८॥
जलमलयजवस्त्र-स्वर्णरत्नादिवस्तून्यतिरुचिररुचीनि स्युर्हि मलाढ्यानि यस्मात् ।
अहमहह ! ! निजायुर्मोक्षसौख्यस्य हेतुर्व्ययमयिषमनर्घ्यं तस्य देहस्य दास्यात् ॥३९॥
यदशुचि यदरम्यं निर्मितं तेन देहं यदतिशुचि मनोज्ञं हाऽन्यथा तत् करोति ।
लघयति निजधातुर्मित्रवर्गं महारीन् गरयति विपरीतः कायतोऽन्यत्र नास्ति ॥४०॥
असुलदमपि पापं सेवते जन्म दत्त्वा सुखकृदपि न पुण्यं देहबन्धप्रणाशि[1]।
अयि शृणु परमात्मन् ! धूर्तमेतच्छरीरं त्वमसि भृशविमुग्धो यः स्वकार्यप्रमादी ॥४१॥
नृपतिमथ भवेन स्वेन पापेन गाढं सपरिभवमवेक्ष्य त्वां सुदुःखाकुलेव ।
किल परिहरति साऽलंकृतिर्योऽत्र देहे तव बहुहितनिष्ठा जीव ! सेयं कनिष्ठा ॥४२॥
वसन-कनकभूषाः सत्कुविन्दाः कलादा मुहुरिह रचयित्वाऽमण्डयन् देहमेतत् ।
सकलमपि निमेषेणैव सामीप्यमात्रात् परिगलितमलत्वाद् निर्ममे दर्पणोऽयम् ॥४३॥
अयमिव परमात्मन् ! निर्मलीभूय भूयः स्मर सुयतिवराणां त्वं तथा सच्चरित्रम् ।
अपतिरपि तथाऽऽशु स्वार्जितं पापसंघं पतिरिव परिवेष्टुं यत्नमुच्चैर्विधेहि ॥४४॥ (युग्मम्)
विविधविषयसौख्यैः प्रीतमेतच्छरीरं तदुपचितमघौघं भोक्ष्यसे तु त्वमेव ।

1 पापपोरके ।

स्थिरमिति विचिन्त्याऽनेन कायेन कार्यं कुरु किमपि न येन स्यास्त्वमात्मन् ! शरीरी ॥४५॥
यदि जगदधिपत्वं सारसंसारसौख्यं यदि सुललितनार्यः कामतोऽनार्यभावाः ।
यदि विविधविभूषाभूषितं देहमेतत् कथय किमपि साध्यं स्वल्पमप्यत्र सिद्धम् ॥४६॥
विषयविषयसौख्यं भङ्गुरं येऽवगत्य भवभवभयभीताश्चक्रुरुग्रव्रतानि ।
उपविशु सहजा ये बन्धुनिर्बन्धबन्धं निखिलमवगणय्यैतेऽत्र धन्या यतीन्द्राः ॥४६॥
असुर-सुरशरण्यः श्रीयुगादीशदेवोऽप्यथ स ऋषभसेनः साधवो बान्धवास्ते ।
मम बलमदहन्ता बाहुवीरो मुनीन्द्रः सकल इति कुटुम्बे मोक्षगे हा ! स्थितोऽहम् ॥४७॥
असुर-सुरनगेन्द्रा पन्नगेन्द्रा जिनेन्द्रा समयति समयेऽस्मिन् संभविष्यन्त्यभूवन् ।
इति विपुलभवाब्धौ मादृशा बुद्बुदाभाः गगनकुसुमतुल्यां नित्यतां मानयन्तु ॥४८॥
वचनमनृतसत्याद्यं तथौदारिकाद्यं वपुरपि सुमनोऽस्त्राऽनन्तवारं सृजंस्त्वम् ।
किल निखिलसुलोकाकाशगान् पुद्गलौघान् इह हि परिचिकाय स्वं च पापं चिकाय ॥४९॥
गरंभगरंभदुःखं भोगरोगप्रयोगं जरसमघरसं वा मृत्युतो नारकोत्थम् ।
सहसि सहसितो वा संरुदन् वा त्वमेकस्तदिति वद कुटुम्बे कोऽस्ति तत्रोपकारी ॥५०॥
अमलपरमतेजाः केवलोऽसि त्वमात्मन् ! मलमयमलमेतत् सप्तधातुस्वरूपम् ।
इति विसदृशभावाद् देहमप्यन्यदेव स्वजन-धनभरादिष्वन्यता तत्र किं स्यात् ॥५१॥

१ गरंभम्–गरसदृशम् । २ 'गर्भ' शब्दः अ–मध्योऽपि भवेत् । ३ प्र० गरसमदरस ।

रस-रुधिर-सुमेदो-मांस-मज्जा-ऽस्थि-वर्चोऽशुचिचयनिचिताङ्ग्यो विश्रवज्जोत्रविला:। 
विषयविषविमोहात् क्रीडयन् नायं आर्य ! क्व पतसि नरकान्धावन्धचित्ते त्वमात्मन् ! ॥५२॥

इति भरतनरेन्द्रो निर्मितात्मप्रबोधः स्मृतजिनपवचोभिस्त्यक्तसंमोहरोधः ।
क्षपकविमलभावः श्रेणिमार्गे स्ववेगात् सकलदुरितसार्थं घातकं मुञ्चति स्म ॥५३॥

( भरतस्य केवलज्ञानम्— ) प्रथमजिनवचोभिः संस्मृतैर्ज्ञानवन्तं स्थिरशिवपथि सम्यग्भावतो दर्शनाख्यम् ।
अपगतमुनिकृत्यैः सचरित्रेण युक्तं नृपमभजदियं प्राक् केवलज्ञानलक्ष्मीः ॥५४॥

अथ धरणिपरेऽस्मिन् केवलज्ञानभासा समुदयमुदयन्तं वीक्ष्य तस्मिन् मुहूर्ते ।
समुदयममरेन्द्रोऽभ्यागमत् कः सुधर्मो स्थित इह मुदितोऽन्तः स्यान्न साधर्मिकर्द्धेः ? ॥५५॥

त्रिजगदधिपवन्द्य ! ज्ञानभानूदयाद्रे ! जय जय नृप उच्चैः प्रोच्चरन् देवराजः ।
अमरपरिवृतोऽसावेत्य संयोज्य पाणी भरतवसुमतीशं नीतिविज्ञो जगाद ॥५६॥

प्रकटितपरमोजा भावचारित्रतस्ते समजनि परमात्मा मोक्षसौख्यैकभूमिः ।
अपि वपुषि भज त्वं शुद्धचारित्रवेषं सविधमन (नु) योग्यो व्याहृतोऽर्हद्भिरेषः ॥५७॥

यतः— प्रथमजिनविभावापेप चारित्रराजः किल भुवि विलसंस्त्वां तत्तनूजं निरीक्ष्य ।
मदन-मद-विमोहाद्यैर्नियतं विमुक्तं स्वसखि-भवविरागं प्राहिणोत् त्वत्समीपे ॥५८॥

अथ स भवविरागो भूषणैर्मोहयन्धैरिव पिहितशरीरे त्यक्तभूषां कनिष्ठाम् ।
श्रित इह तव दृष्टिद्वारतोऽन्तः प्रविश्य दधन्नृपमिव मोहं भावखड्गैर्जघान ॥५९॥

परिकरमथमोहस्याऽत्र मैत्री-प्रमोदप्रभृतिसुभटराजैर्घातं संनिशम्य ।
अविशदथ पुरं ते भावचारित्रराजः प्रथममिह मनस्तन्मन्त्रिणं भेदयित्वा ॥६०॥
शमरजतघटस्थैर्ध्यानीरैस्तु शुक्लैः सपदि समभिषिच्य ज्ञाननेपथ्यभाजम् ।
गुरुशिवपुरराज्ये त्वां स चारित्रराजो न्यधित तव पितुः किं तं स्मरंश्चोपकारम् ॥६१॥
अथ तव परमात्मा केवलज्ञानराज्ये स्थितवति गत उर्वरप्रधानं चकार ।
रिपुगणमिलितं प्राक् सेवकं स्वस्य पश्चाद् नहि बहु गुणयेयुः प्रायशो नीतिविज्ञाः ॥६२॥
तव धृतगृहवेषस्याऽपि चारित्रराजो गुरुतरमुपकारं गुप्तमित्थं चकार ।
प्रकटममलरूपं धारयंस्तस्य वेषं त्वमसि खलु कृतज्ञश्चक्रवर्तिन्! महात्मन्! ॥६३॥
(धृता भरतेन जैनी मुद्रा—) इति सुरपतिवाक्यात् केवलज्ञानवानप्यधृत स कृतलोचो जैनमुद्रां सुवन्द्याम् ।
व्यवहरणविधिं चेद् ज्ञानवन्तो महान्तो न विदधति पृथिव्यां कोऽपि किं क्वाऽपि वेत्ति ? ॥६४॥
सह दश-च सहस्राश्चक्रिणा तेन भूपा जगृहुरगृहबन्धाश्चारुचारित्रमग्र्यम् ।
भुवि निजविभुभक्तावेकचित्ता नरा ये विषयजसुखशक्तावप्रसक्तास्तु ते स्युः ॥६५॥
(भरतपुत्र आदित्यकीर्तिर्नृपः—) भरतनृपतिपुत्रं मोहमादित्यकीर्तिं सुरपतिरिह रम्ये सिंहपीठे निवेश्य ।
कृततिलकविभूषं स्वेन हस्तेन हर्षात् स विविधविधिवेदी विश्वराज्ये न्यधत्त ॥६६॥
(भरतमुनिर्विहरन्—) स भरतमुनिराजः साधुभिर्भ्राजमानः त्रिभुवनमथ भावान् भावयन् ज्ञानभावात् ।
व्यहरदिह विमोहं संहरन् भव्यवर्गात् सुकृतसदुपदेशैर्निर्मलैर्नित्यमेव ॥६७॥

भरतमुनिवराङ्घ्रिस्पर्शपावित्र्यपुण्यं सुकृतशतसुलभ्यं प्राप्य पूर्वाऽनवाप्तम् ।
स्वपतिपरिहृताभ्यस्तप्रियाभ्योऽखिलाभ्यः समधिकमिव मेने सा धरित्री तदा स्वम् ॥६८॥
अमृतरुचिरसौ सत्तारकेशो विनिद्रं कु-वलयमपि कुर्वन् भग्न-चक्रप्रमोदः ।
भविकजनचकोरान् प्रीणयन् पूर्वलक्षं महदिह मह उच्चैर्निर्मलं स्वं ततान ॥६९॥
( भरतमुनेर्मुक्तिः — ) भरतमुनिरमीभिः संयुतोऽष्टापदाद्रिं सुयतिभिरधिरुह्य स्थानमाग्नेशसिद्धेः ।
परिचरति सुरेन्द्रे तत्र मासोपवासादरुजमजर-मृत्यु प्रापिवान् मोक्षसौख्यम् ॥७०॥
इति भरतसुचक्री सप्तति सप्तयुक्ताः सति पितरि जिनेन्द्रे पूर्वलक्षान् कुमारः ।
नृपतिरथ सहस्रं वत्सराणां तदूनानथ समजनि चक्री पूर्वलक्षान् षडेव ॥७१॥
धृतयतिजनवेषः पूर्वलक्षं तथैकं व्यहरदथ पृथिव्यां केवलज्ञानयुक्तः ।
इति स चतुरशीतिं पूर्वलक्षान् निजायुः प्रथमजिनपपुत्रः पालयामास चक्री ॥७२॥
भरतमुनिवरेन्द्रस्योर्ध्वदेहक्रियायां सह रवियशसा तत्प्रौढपुत्रेण युक्तः ।
व्यरचयदमरेन्द्रस्तत्र चाष्टापदाद्रौ सुरभिसलिलवृष्टिं नीरदाश्चक्रुरुच्चैः ॥७३॥
स भरतपतिपुत्रस्तत्र चादित्यकीर्तिः कनकमयमनर्घ्यं कारयामास धाम ।
प्रथमजिनपमूर्तेर्दक्षिणे चक्रवर्ति व्यरचयदथ मध्ये तस्य पुण्यप्रशस्यः ॥७४॥
गतवति सुरराजे सोऽप्ययोध्यां समेतो गुरुभरतविहारं तत्र शत्रुंजये च ।

१. भवतारकाणाम् ईशोऽपि । २ पृथ्वीवलयमपि । ३ चक्रवाकोऽपि । ४ इकारान्तोऽपि भवेदयं शब्दः ।

व्यरचयदथ राज्यं भारतार्धस्य कुर्वन् कृतसुकृतसमूहः सूर्यवंशादिकन्दः ॥७५॥

इत्येतज्जगतोऽद्भुतोदयकृतः श्रीमद्युगादिप्रभोः हस्ताम्भोजभवव्रतेन सुरभीभूतस्य देवेश्वरैः।
मान्यस्य प्रभुपुण्डरीकगणभृन्मुख्यस्य सिद्धाचले सिद्धिं प्राप्तवतो बभूव चरितं पूर्णं सुमाङ्गल्यकृत् ॥७६॥

(पूर्णं श्रीपुण्डरीकचरितम्)

(ग्रन्थकारपरंपरावर्णना—)—यो जातकर्म-वसना-ऽशन-सद्विवाह-राज्योपभोगविधि-नीति-सुधर्ममुख्यम्।
श्रीमद्युगादिजिनपः प्रथयन् विवेकं जज्ञे पितेव सततं स जगन्ति पातु ॥७७॥

समग्रभरतक्षितौ प्रथमतीर्थशत्रुंजयप्रभावपरिदर्शने प्रकटरत्नदीपप्रभः।
तमो हरतु मोहजिद् वरसमस्तसंघस्य स प्रवर्धयतु च प्रभां सुगुरुपुण्डरीकप्रभुः ॥७८॥

श्रीबाहुबल्यादिरयं युगादिदेवस्य गच्छः सुकृतैरतुच्छः। समग्रसंघस्य चतुर्विधस्य पुष्णातु पुण्यानि सुमङ्गलानि
भोगान् यः किल भुक्तवान् नर-सुरान् जित्वा युगादिप्रभोर्भक्तिं निर्मितवान् सुभोजनभरैर्धर्मी च साधर्मिकान्
नित्यं पोषितवान् गृहं रचितवान् शत्रुंजये योऽर्हतो धर्मा-ऽर्था-ऽद्भुतकाम-मोक्षसुखदः सोऽस्त्वाद्यचक्रीश्वरः

(कोटिगणः—) (वज्रशाखा—) (चन्द्रगच्छः—) श्रीमन्महावीरजिनेन्द्रशासने जीयाच्चिरं कोटिगणो गुणोत्तमः।
(चन्द्रप्रभगुरुः—) श्रीवज्रशाखा विपुलाऽत्र विस्तृता श्रीचन्द्रगच्छो जयतीह निर्मलः ॥८१॥

श्रीजैनशासनतुरंगगतस्य धर्मभूपस्य वर्म चरितं समभूच्च येषाम्।
छत्रं यशः सदुपदेशवचश्च भल्लिश्चन्द्रप्रभाख्यगुरवो भुवि ते बभूवुः ॥८२॥

१ समूहः, ननु संप्रदायः।

ये कीर्तिसौर-भयुजो न कदाऽपि कोपेङ्गालेन संगतिकराः सुकलाभृतोऽपि ।
नित्यं कलङ्करहिता विजितद्विचन्द्राश्चन्द्रप्रभाख्यगुरवः किल ते जयन्तु ॥८३॥
(धर्मघोषप्रभुः— जयसिंहदेवो नृपः —) तत्पट्टलक्ष्मीकमलावतंसा श्रीधर्मघोषप्रभवो बभूवुः ।
४ यत्पादपद्मे कलहंसलीलां दधौ नृपः श्रीजयसिंहदेवः ॥८४॥
धर्मघोषगुरुर्वाक्योच्चयो यस्य विराजते धर्मघोषगुरुर्भव्यानव्याद्व्याहृतोदयान् ॥८५॥
(चक्रेश्वरसूरिः—) श्रीचक्रेश्वरतां नित्यं ददातु भुवि भाविनाम् । श्रीमच्चक्रेश्वरः सूरिस्तत्पट्टनभसः शशी ॥
ये शुद्धव्रतपद्कनिश्चलहृदः पद्तर्कविद्याविदः कामाद्यान्तरशत्रुपद्कजयिनः पड्जीववर्गरक्षिणः ।
८ ये कूचीलसरस्वतीति विहिताः प्रौढैर्नृपैर्वन्दिताः तुष्ट्यै स्थापितसूरिपद्कमुदिताश्चक्रेश्वराः सूरयः ॥८७॥
(त्रिदशप्रभगुरुः—) ये चक्रेश्वरसूरिपट्टकमलालंकारहारायिताः ये भव्याम्बुजबोधनाय सुतपःकान्त्या च सूर्यायिताः
ये जैनेश्वरशासनोत्तमसरोमध्ये सुहंसयितास्ते श्रीमत्त्रिदशप्रभाख्यगुरवः पुण्यप्रभावाद्भुताः ॥८८॥
ज्ञानादित्रिकसद्धर्मदशाकाभ्यां कृतप्रभः । त्रिदशश्रीप्रदो भूयात् श्रीत्रिदशप्रभो गुरुः ॥८९॥
१२ (तिलकसूरिः—) वाक्पीयूषैर्भवमरुतृषं तुच्छयन्नच्छचित्तः तेषां पट्टे सुमुनितिलकः सूरिराजो बभूव ।
यो रूपेण क्वचित सुदृढब्रह्मचारेण चाऽन्तस्तं कंदर्पं त्रिभुवनपराभावुकं दर्पहीनम् ॥९०॥
शीलाङ्गैरिह नखरैर्महाव्रतैस्तैः पञ्चास्यो जिनपतिशासने वने यः ।
सूरीन्द्रं मुनितिलकं प्रणौमि भक्त्या पारीन्द्रं तमिह भवद्विरे स्वशक्त्या ॥९१॥
(धर्मप्रभसूरिः—) श्रीधर्मप्रभसूरयस्तदनु तत्पट्टश्रियो मौलयः सिद्धान्ताम्बुपयोधयः सुकुलकृद्वाणीतरङ्गाऽऽलयः ।

सम्यक्त्वं हृदि यस्य (हृद्यस्य) भूरगनगिं चारित्रलक्ष्मीं च यैः
दत्त्वा के न जनार्दना अपि कृता भव्यास्तमोजिष्णवः ।
क्रोधे दावंति सद्गुणद्रुषु पयोवाहन्ति शान्ताद्भुरसात् संसारे गुरुवारिराशयंति सत्पोतन्ति चारित्रतः ।
मोहे यामिनयलमी सवितरन्त्यन्तःप्रभाभासनात् यत्र याख्यानगुरौ गुरुः स जयतु श्रीधर्मसूरीश्वरः (?) ॥
(अभयप्रभगुरुः—) श्रीअभयप्रभगुरवो भवभयहरणैकबुद्धयोऽभूवन् ।
तत्पट्टमानससरोऽलंकृतये राजहंसशुचिचरिताः ॥९४॥
न गम्भीरो वार्धिः शशधरकरा नैव शिशिराः सुधा न स्वादिष्ठा मलयजरसो नैव सुरभिः ।
प्रभा नो भानोः साऽप्यविकलविलोकाय भविनां सुकर्णाभ्यर्णे चेद् भवति वचनं तद्वदनतः ॥९५॥
(रत्नप्रभसूरिः—) निर्मलनिश्चलकोमलमहार्हतेजा बभूव नत्रासः । श्रीरत्नप्रभसूरिस्तत्पट्टश्रीशिरोरत्नम् ॥९६॥
शास्त्राम्भोनिधिकुम्भसंभवमुनिः संदेहरात्रे रविः शान्तत्वाऽमृतचन्द्रमा मधुसहृद्भेदे भवानीगुरुः ।
चारित्रद्विपशल्लकीनिभगुणप्रोद्भूतविन्ध्याचलः श्रीरत्नप्रभसूरिसद्गुरुरहो ! स्तोतुं कथं शक्यते ॥९७॥
(रत्नप्रभसूरिः—) श्रीरत्नप्रभशिष्येण कमलप्रभसूरिणा । मन्त्राधिराजरूपश्रीपार्श्वनाथप्रसादतः ॥९८॥
श्रीशत्रुञ्जयसिद्धाद्रेः शृङ्गारस्य रसास्पदम् । प्रभुश्रीपुण्डरीकस्य चरित्रं पुण्यपुष्टिदम् ॥९९॥
(१२०२ वर्षे इतमेतत्—) श्रीविक्रमराज्येन्द्रात् त्रयोदशशतान्विते । द्वासप्तत्यधिके वर्षे विहितं धवलपक्षके ॥

१ कृष्णाः, जनार्दना अपि । २ सद्गुणद्रुषु दावं इवाचरति क्रोधे । ३ पयोवाहा इव । ४ वारिराशौ इव संसारे । ५ पोताः प्रवहणानि इव । ६ गंधाविव मोहे । ७ प्र०-त्यम् । ८ सूर्या इव ।



श्रीरत्नप्रभसूरि-शिष्य-
आचार्यश्रीकमलप्रभ विरचितम्
इति श्रीपुण्डरीक-चरित्रम्
समाप्तम्.

